एवं सर्वाणि षण्णवति श्राद्धानि। एतदतिरिच्य द्रव्यं[६२] सुरुचिरं पितृसेवनोपयुक्तं, ब्राह्मणश्च पितृप्रतिनिधित्वसंपादनायात्यन्तयोग्यो वा यदा संपद्येत तदा श्राद्धं कर्त्तव्यत्वेन चोद्यते। किं च श्राद्धकर्त्तुरिच्छा[६३] यदा भवति तदैव श्राद्धं कर्त्तव्यमिति सर्वस्वाधीनप्रस्तावं याज्ञवल्क्योऽवादीत्। विषयेऽस्मिन् अधिकं विस्तरभिया न लिख्यते।

सोऽयं पितृनीराजनाख्यः श्राद्धविषयः वेदभागादुद्धृत्य मनुना प्रप्रथमतया प्रकाशितः। अनन्तरमन्ये स्मृतिकाराः तदुपरि मनुवचांसि क्रोड़ीकुर्वन्तः स्ववैचारिकं सिद्धान्तं प्रादर्शयन्। क्रमेण पुराणेषु ते विषया भृशमालोचिताः।

अतः परमस्माभिः श्राद्धविषयिणीकृतिप्रदर्शनार्थं यत्नः क्रियते। प्रयोजनमाश्रित्य केवलमुत्कलीयानामुपरि चर्चितुमवसरः प्राप्यते, यतो हि भारतवर्षस्य इतरप्रान्तीयधर्मशास्त्रान्तर्गतश्राद्धविषयिणीकृतयो बहुभिः चर्चिताः। तदर्थमुत्कलपरिचयदानव्याजेन धर्मशास्त्रं प्रति तदीयदानविषयमुपजीव्य क्रमेण श्राद्धप्रक्रमपर्यन्तमागतव्यमिति मनीषया चर्चापरिसरः विजम्भते॥

---

६२। द्रव्यब्राह्मणसंपत्तौ।

६३। श्राद्धं प्रति रुचिः, या० स्मृतिः, १।२१८

# भूमिका—२

## धर्मशास्त्रं प्रति उत्कलानां दानम्

उत्कलानां संक्षिप्तपरिचयः

कस्यचन कर्मण आरम्भात् पूर्वं तस्मिन् कर्मणि निरततासंपादनार्थम् आसमाप्तिपर्यन्तमेतस्यानुष्ठानं भवितव्यमिति धिया संकल्पः क्रियते। निखिलं कर्म कामनाप्रसूतम्। सा कामना संकल्पपूर्वा। कृते सङ्कल्पे कर्मणोऽवश्यकर्त्तव्यता उत्पद्यते। एतस्मिन् संपर्के देशः कालः पात्रञ्चेति त्रिविधं तत्त्वमावश्यकं भवति। तत्र यदधिकरणे कर्म कर्त्तव्यं, तत् कस्मिन् देशे, यदा क्रियते तस्य कः कालः, यः करोति स कः? इति एतत्त्रयं परिष्क्रियते। एतदर्थमस्माकं शास्त्राणि मुख्याधिकरणत्वेन पृथिवीं, मुख्यकालत्वेन ब्रह्मणः कालं मुख्यकर्त्तृत्वेन गोत्रस्थर्षिं स्मर्त्तुं चोदयन्ति। तत्र अधिकरणविवक्षायामुच्यते—इह पृथिव्यां जम्बुद्वीपे, भारतवर्षे उत्कलजनपदे श्रीपुरुषोत्तमक्षेत्रे इत्यादिः। कालविवक्षायाम्—अद्य ब्रह्मणो द्वितीये परार्धे श्वेतवाराहकल्पे वैवस्वतमनोरष्टाविंशतितमे कलौ अमुकसंवत्सरे अमुकमासि अमुकपक्षे अमुकदिवसे अमुकनक्षत्रस्थितश्रीभास्करे, अमुकनक्षत्रस्थितश्रीचन्द्रमसि ··· इत्यादिः कर्त्तृविवक्षायां यथा—अमुकसगोत्रः श्रीमान् अमुकप्रवरः अमुकशर्मणः पौत्रः, अमुकशर्मणः पुत्रः, अमुकशर्मा एतत् कर्म सम्पादनाय सङ्कल्पमहं कुर्वीय।[१] इति।

इत्येतद्दशायां देशाधिकरणत्वेन उत्कलजनपदस्योक्तिः यदा भवति तदा उत्कलवास्तव्य एव आत्मानमुत्कलीयं मनुते। एतदर्थम् उत्कलानां चरमेतिहासो ज्ञातव्यो भवति। निखिले भारते राष्ट्रे यानि भूखण्डानि परंपरावशेन क्षुद्रांगानीव दृश्यन्ते समेषामितिहासो वेद-धर्मशास्त्र-पुराणानि आश्रित्य रचितः। तत्र उत्कलजनपदस्य इतिहासः कस्मिन् शास्त्रे प्रप्रथमतया अवलोकित इति प्रश्ने क्रियमाणे वेदभागो नैवास्योत्तरं ददाति। ब्राह्मणभागेऽपि अस्य श्रुतिर्नैव प्राप्तुं शक्यते। एतस्मिन् स्थले उत्कलजनपदस्य उत्कल इति संज्ञालाभात् पूर्वं या संज्ञा आसीत् तया संज्ञया उत्कलानां विश्लेषणं कर्त्तुं शक्यम्। एतस्मिन् स्थले बहवो

---

१। मत्संपादित-भुवनेश्वरबृहत्पण्डितकृत'वार्षिकपर्वसंग्रह'स्य महावाक्यप्रकरणं द्रष्टव्यम्।

विद्वांसः प्रातिस्विकं मतं बहुप्रकारेण उपस्थापयन्ति। तेषु हण्टरमहाभागस्य, राखालदासवानार्जिमहाभागस्य, डा० हरेकृष्णमहताबमहाभागस्य च ग्रन्थाः प्रणिधानयोग्याः सन्ति। किन्तु हण्टरमहाभागस्य मतं किञ्चित् व्याकुलितं दृश्यते, ततोऽपेक्षया वानार्जिमहोदयस्य मतमधिकं प्रमाणपूर्णम्। ततो डा० महताबमहाभागस्य एतावत्कालपर्यन्तं मतं समेषां मतमतिशेते। पर्याय-वशेन एतेषां विदुषां मतानि उपस्थापयिष्यन्ते।

उत्कलपदविषये विचारे क्रियमाणे पदत्रयं विचारकोटीमधिरोहति। यथा—उड्रः, कलिङ्गः, उत्कलश्च। एषु त्रिषु पदेषु उड्रः इति पदं सर्वेभ्यः प्राचीनम् मनुस्मृतौ[२] अस्य व्यवहारो दृश्यते। महताबमहाभागस्य[३] मतानुसारं अस्यां भुवि यदा धार्मिकी परम्परा छिन्ना, शबराः स्वकीयां प्रतिपत्तिं विस्तारितवन्तः, तदैव मनुः अधार्मिकदेशानां परिगणनावसरे एवं भूभागमन्तर्भावष्यति। अनन्तरं कलिंगदेशः धर्मतोऽगम्यः। तत्स्थाने पदन्यासेन धर्मो नश्यति। पदन्यासी प्रायश्चित्ती भवति। तीर्थयात्रासमये कलिंगं प्रति न गन्तव्यमिति बौधायनः स्वीयधर्मसूत्रे निर्दिशति।

पुराणेषु[४] एतस्य विषये एका सूक्ष्मावार्त्ता उपलभ्यते यत् मनुः[५] स्वकीयराज्यस्य परिरक्षणार्थं सन्तानमेकं प्राप्तुं मित्रावरुणदेवतोद्देशेन एकं यागं विधाय इला (इड़ा) नाम्नीं कन्यां प्राप्तवान्। अथैकः कलहः समुत्पन्नः कोऽस्याः पतिर्भवेदिति। एतस्मिन् अवसरे शिवः क्रोधपरवशः सन् तां अभ्यशपत।

---

२। पौण्ड्रकाश्चौड्रद्राविड़ाः कम्बोजा यवना शकाः।
परदाः पह्लवाश्चीनाः किराता दरदाः खसाः।। —मनुः १०।४४

३। So probably during this period the Dravidians used to live here for which they were treated in low esteem and till a long time Kalinga remained non-Aryanised. It was inhabitated by Sabbaras first, then by Dravidians after which the gradual migration of Aryans began.
—History of Orissa, Mahatab, Vol. I, p. 1

अधिकन्तु द्रष्टव्यम्—

Facts about Orissan History from Puranic Sources —A. K. Pattanayak (Proceedings of Orissa History Congress, 1979)

४। तत्रैव।

५। हरिवंशम्, अध्याय १०

फलेन तस्याः प्रतिमासं लिंगपरिवर्त्तनं जातम्। एकस्मिन् मासि पुरुषः, तदनन्तर-मासि स्त्री क्रमेण भवति। अयं विषयः हरिवंशे विशदरूपेण वर्णितोऽस्ति। किन्तु ब्रह्मपुराण[६]-मत्स्यपुराण-भविष्यपुराणादिषु एतत् किंचित् विवरणं पार्थक्येन मिलति। सन्तानलाभाय मनुः मित्रावरुणाय प्रार्थितवान्। फलतः इलानाम्नी परमा सुन्दरी कन्या समुत्पन्ना। पुनरपि पुत्रसन्तानप्राप्त्यै मनुः शिवं संतुतोष। शिवः सन्तुष्टः सन् इलायै मासान्तरमासक्रमेण पुरुषलिंगता भवेदिति वरं दत्तवान्। यद्वा भवतु मनुः इलां पुत्ररूपेण कन्यारूपेण च प्राप्तवान् इति नास्ति कस्यचन पुराणस्य-उपपुराणस्य वा मतपार्थक्यम्। अनन्तरं चन्द्रस्य पुत्रो बुधः कन्यावस्थायाम् इलां परिणीतवान्। बुधेन इलायां पुरुरवा पुत्रत्वेन संजातः। स प्रप्रथमतया चन्द्रवंशीयो नरपतिः सन् कलिंगं शशास। किं चात्रेदमेव ध्येयं यत् इलायाः यस्मिन् मासि पुरुषरूपं भवति तदानीं तस्या नाम सुद्युम्नः इति भवति। सुद्युम्नः मनोरनन्तरं प्रप्रथमः सूर्यवंशीयो नरपतिः। सुद्युम्नस्य पुत्रास्त्रयोऽभुवन्। वायुपुराणानुसारम्[७] उत्कल-गय-विनताश्व-नाम्ना सुद्युम्नस्य त्रयः पुत्राः। उत्कलो ज्येष्ठो यं भूभागं शशास, तस्य नाम उत्कलराष्ट्रं, गयः गयापुरीं, विनताश्वः पश्चिमभागमवाप्तवान्। अनेन उत्कलाधीनः उत्कलदेशः इति निश्चप्रचं जातम्। एवं प्रकारेण कलिंग-उड्र-उत्कलनाम्नां सम्मेलनं पुराणेभ्यः प्राप्यते।

किन्तु मदीय-गुरुचरणानां पण्डितकुलमणिमिश्रशर्मणां विषयेऽस्मिन् प्रामाणिकं मतपार्थक्यं गवेषकानां पृष्ठपोषकं भवति। एकं सुदीर्घं विवरणं दत्वा ते ऐतिहासिक-साहित्यिक-पौराणिक दृष्टिभंग्या निजं मतमुपस्थापयन्ति। तन्मतमित्थम्[८] —यदि वा उत्कलराष्ट्रस्य पर्यायवाचिसंज्ञात्वेन उत्कल-उड्र-कलिंगशब्दा व्यवह्रियन्ते, तथापि एते उत्कलराष्ट्रस्य अंशविशेषा आसन्।

---

६। Facts about Orissan History from Puranic Sources
—A. K. Pattanayak, O.H.C. p. 18-19

७। सुद्युम्नस्य तु दायादास्त्रयः परमधार्मिकाः।
उत्कलश्च गयश्चैव विनताश्वस्तथैव च॥
उत्कलस्योत्कलं राष्ट्रं विनताश्वस्य पश्चिमम्।
दिक्षुवानस्य राजर्षे गयस्य तु गयापुरी॥ —वायुपु०-उत्तर, अ० २३

८। त्रिकलिंगः, पण्डितकुलमणिमिश्रशर्मा—झंकारः, २य वर्षः, नवम संख्या, पृ० ८१८-८२१

अधुना प्रसिद्धस्य उत्कलराष्ट्रस्य उत्तरांशः उत्कलखण्डं, मध्यांशः उड्रखण्डं, दक्षिणांशश्च कलिंगखण्डमिति अंशत्रयं प्रसिद्धमासीत्। एतत्त्रितयांशस्य एकत्व-प्राप्तिः चोलगंगनृपतेः शासनकालेऽभूत्। यदि वा पूर्वम् उड्रसंज्ञा आसीत् इतिहासात् ज्ञायते पूर्वस्मिन् काले कलिंग-उत्कलाभिधायिनौ द्वौ देशौ आस्ताम्। द्वादशशतकीयः कविः श्रीहर्षः स्वकीयनैषधमहाकाव्यस्य[९] दमयन्तीस्वयम्बर-वर्णनावसरे उत्कलतः कलिंगतः युवराजौ आगतौ इति लिखितवान्। अनेन तदानीं कलिंगोत्कलयोः द्वैधीभाव आसीत् इति मन्यते। तत्पूर्ववर्तिना कालिदासेनापि[१०] रघुकर्त्तृकदिग्विजयवर्णनप्रसंगे वंगेभ्यः परमुत्कलाः तत्परं कलिंगाः इति उक्तम्। लेखतः कविद्वयमित्थं किं च कलिंगानां राजधानी महेन्द्रपर्वतस्य समीपे आसीदिति प्राप्यते। यदि वा उड्रदेशप्रसंगोऽत्र प्राप्तुं न शक्यते, तथापि तस्मिन् उड्रदेशः उत्कलाभ्यन्तरे सम्मिलित आसीदिति अनुमीयते। किन्तु कस्मिन् समये उत्कलानामंगत्वेन उड्रदेशस्य सम्मेलनं जातमितिविषयक इतिहासवृत्तान्त इदानीं कुत्रापि नोपलभ्यते। पद्मपुराणे[११] कलिंगोत्कलोड्रानां पृथक् उक्ति-र्लभ्यते। ब्रह्मपुराणे[१२] एतेषां त्रयाणामंशानामुक्तिर्यदि वा पार्थक्येनास्ति तत्र उड्रदेशस्य भौगोलिकी अवस्थितिरपि वर्णिता। उड्रदेशस्य दक्षिणा सीमा समुद्रः,

---

९। अयं गुणौघैरनुरज्यदुत्कलो भवन्मुखालोकरसोत्कलोचनः।
स्पृशन्तु रूपामृतवापि नन्वमुं तवापि दृक्तारतरङ्गभङ्गयः॥
—नैषधम्, १२।७८

१०। स तीर्त्वा कपिशां सैन्यैर्बद्धद्विरदसेतुभिः।
उत्कलादर्शितपथः कलिंगाभिमुखं ययौ॥ —रघुवंशम्, ४।२८

११। उत्तमाश्च दशार्णाश्च मेकलाश्चोत्कलैः सह।
—पद्मपु०-आदि ६।३
अंगाबंगाः कलिंगाश्च-४१
किराता वर्बराः सिद्धा वैदेहास्ताम्रलिप्तकाः।
ओड्रा म्लेच्छा ससैरिन्ध्राः पार्वतीयाश्च सत्तमाः॥ -५२

१२। अथापरे जनपदा दक्षिणापथवासिनः।
पूर्णाश्च केवलाश्चैव गोलांगुलास्तथैव च॥
ऋषिका मूषिकाश्चैव कुमरा रामठाः शकाः।
महाराष्ट्रमाहिषिकाः कलिंगाश्चैव सर्वशः॥
इत्येते ह्यपरान्ताश्च शृणुध्वं बिन्ध्यवासिनः।
मलयाः कर्कशाश्चैव मेकलाश्चोत्कलैः सह॥ —ब्रह्मपु० २७।५४-५६

उत्तरा सीमा विरजमण्डलम् (अधुना याजपुरम्)।[१३] अत्र चिलिकाह्रदं समुद्रस्य अंशरूपेण मत्वा सा एव दक्षिणा सीमा इति वर्णिता। उत्तरसीम्नि याजपुरं केन्द्रीकृत्य कतिपये अंशा विरजमण्डलरूपेण ख्याता आसन्। एतेन कलिंगोत्कलयोरन्तःपातित्वेन उड्रभागस्य प्रसिद्धिः सरलतयाऽनुमातुं शक्यते। किं च अस्मिन् उड्रभूभागे ओडसंज्ञका एका जातिः वसतिं संस्थाप्य आसीत्। स ओडशब्दः उड्रशब्देन सह सामंजस्यं स्थापयति। उक्ता ओडजातीया आत्मानमसंस्कृतक्षत्रियरूपेण अभिमन्यंते। मनुना प्रदर्शितेन उड्रजातिविषयकप्रसंगेन अस्या घटनायाः समंजसता प्रतिभाति। किं च वायुपुराणानुसारम्[१४] उत्कलभागस्य वायुकोणे गयाया अवस्थितिः सूच्यते। एतेन गयाया उपकण्ठपर्यन्तमुत्कलराष्ट्रस्य सीमा परिव्याप्ताऽसीदिति ज्ञायते। एतेन आलोचनेन उत्कल-उड्र-कलिंगाभिधानेन राष्ट्रत्रयमासीत्। कालक्रमेण उड्रभाग उत्कलभागेन सह सम्मिल्य राष्ट्रद्वयं कलिंग-उत्कलाभिधं जातम्। अनन्तरं चोलगंगदेवनरपतेः कालात् एतं राष्ट्रद्वयमेकीभूय उत्कलाख्यया प्रसिद्धिं गतम्। अनेन उत्कलशब्दात् राष्ट्रत्रयस्य सूचनोपलभ्यते। पण्डितमिश्रशर्मणां स्वकीयमतानुसारं चोलगंगदेवस्य उत्तराधिकारिभिः कैश्चित् त्रिकलिंगाधिपतिरिति आत्मानं परिचाययितुं पदवी सृष्टा।

बहुव्रीहिसमासेन त्रिकलिंगपदस्य निरुक्तिं संपाद्य पण्डितमिश्रशर्माणः परपदप्रधानरीत्या उत्कलाख्यं राष्ट्रं तस्मात् अर्थयन्ति। तन्मत्या त्रिः[१५] नाम तृतीयः कलिंगः यत्र असौ त्रिकलिंगः। अर्थात् कालिदासस्य वर्णनानुसारं बंगात् परमुत्कलाख्यं राष्ट्रम्, तत्क्रोडीकृतं राष्ट्रमुड्राख्यम्। ततः परं कलिंगाख्यम्।

---

१३। तत्रास्ते भारतेवर्षे दक्षिणोदधि संस्थितः।
ओड्रदेश इति ख्यातः स्वर्गमोक्षप्रदायकः॥
समुद्रादुत्तरं तावत् यावद् विरजमण्डलम्।
देशोऽसौ पुण्यशीलानां गुणैः सर्वैरलंकृतः॥ —पद्मपु० २८।१-२

१४। द्रष्टव्या, पा० टी० ७

१५। त्रिशब्दात् तृतीय इति पदोदभवो न शास्त्रविरुद्धः।
मनुना तथा व्यवहारकृतः यथा ८।३४
"आददीताथ षड्भागं प्रणष्टाधिगतान् नृपः।" अत्र षड्भागः षष्ठभागः इत्यर्थः। या० स्मृ० अपि १।३३४
पुण्यात् षड्भागमादत्ते न्यायेन परिपालयेत्। अत्र तथा। एतद्वत् त्रिशब्दात् तृतीयः कलिंगः यत्रासौ त्रिकलिंगः संगच्छते।

उत्कल-कलिंग-उड्र-त्रिकलिंगाख्येषु चतुर्विधेषु उत्कलपदस्य प्राधान्यमादरणीयत्वं प्रसिद्धत्वं च कालक्रमेणेत्थं जातं, येन स्कन्दपुराणे उत्कलखण्डमिति संज्ञया भाग एको जातः। नानासमयेषु अयमुत्कलशब्दः संपूर्णभूखण्डत्रयोद्देश्येन कविभिरपि स्वरचनाप्रपञ्चेषु व्यवहृतः।[१६]

किन्तु पण्डितमिश्रशर्मभिः सह डा० महताबमहाभागः स्वमतं नोपस्थापयति। स्वकीयमतपार्थक्यं प्रकटयितुकामेन तेन मिश्रमहाभागानां त्रिकलिंगाख्य-[१७] प्रबन्धस्य पादटिप्पण्यां लिखितं यत्—'लेखकानां (मिश्रमहाभागानां) मतमिदं समीचीनं न भवति। प्राच्यगंगवंशीयमहाराजाधिराजस्य इन्द्रवर्मणः इव तत्र गंगाब्दस्य ताम्रपट्टे प्रप्रथमतया त्रिकलिंगशब्दस्य व्यवहारो दृश्यते। एतस्य ताम्रपट्टस्य समयः ख्रीष्टीयषष्ठशताब्दी इति स्थिरीकृतः। केचन सप्तमशताब्दी इति मन्यमानाः सन्ति। अतःपरं सोमकुलिकेशरिवंशीया राजानः आत्मानं त्रिकलिंगाधिपतिरिति घोषयन्तः लिखन्तश्च आसन्। कालचुर्-वेंगी-चन्देलखण्डप्रभृतीनां राज्ञां त्रिकलिंगाधिपतिरिति विरुत् व्यवहृता दृश्यते। एकादशशतकपरवर्त्तिसमयस्य प्राच्यगंगवंशीया राजानः वंशानुक्रमेण आत्मानं त्रिकलिंगाधिपतिरिति संज्ञया व्यवाहरन्। चोलगंगदेवः नरसिंहदेवश्च एतद्गंगवंशीया राजान आसन्। एतावता त्रिकलिंगस्य भौगोलिकं स्थानं निरूपितं नास्ति।[१८]

केदारनाथमहापात्रमहाभागोऽपि[१९] त्रिकलिंगविषये स्वकीयं मतं प्रकाशितवान्। समेषाममीमांसितावस्थासु सत्सु मतेषु मिश्रमहाभागानां मतं शास्त्ररीत्या

---

१६। अस्ति प्रशस्ति ललितो लवणाब्धितीरे।
नीलाचलायततटी मुकुटायमानः।।
एकस्त्रिमूर्त्तिकुहनावृतचित्रमूर्त्तिः।
लक्ष्मीपतिः सकलदैवतवन्दनीयः।।
तत्पादपद्मतुलसीदल संप्रसूत-
सौरभ्यहृतहरिदन्तरवैष्णवालिः।।
देशः स उत्कल इति प्रथितः पृथिव्यां।
निर्व्याजमुक्तिसुखमुक्तिसमर्थहेतुः।। —भक्तिभागवतमहाकाव्यम्

१७। त्रिकलिंगः, पण्डितकुलमणिमिश्रशर्मा—झंकारः, २य वर्षः, प्रथम संख्या, पृ० ८१८–८२१

१८। तत्रैव। अधिकन्तु द्रष्टव्यम्—History of Orissa, Dr H. Mahtab

१९। ओ० एच० आर० जे० (O. H. R. J.)

इतिहासविवरणात्मकपद्धत्या समलंकृतमस्ति। इति कृत्वा तन्मतमस्माभिः स्वीक्रियते। यद्वा भवतु संप्रति विख्यातिं प्राप्तस्य उत्कलखण्डस्य पूर्वोक्त-त्रितयभागस्य समाहारः अस्तु अथवा बहुव्रीहिसमासेन परपदप्रधानरीत्या अस्तु संपूर्णोत्कलभागः उड्रभागं, कलिंगभागम्, उत्कलभागं च गृह्णाति इति नास्ति कस्यापि वैमत्यम्।

शंखलिखितस्मृतिकारौ उत्कलीयौ

पूर्वोक्तवायुपुराणवर्णितस्य मनुपुत्रस्य सुद्युम्नस्य ज्येष्ठः पुत्रः उत्कलः उत्कल-भूभागं प्राप्तवान् स्वदायस्वत्वेनेति निर्विचिकित्सं प्रत्यपादि। तस्य सुद्युम्नस्य[२०] राजपरिधौ शंखलिखिताख्यौ द्वौ भ्रातरौ शास्त्रनीतिनियन्तारौ धर्मशास्त्ररच-यितारौ आस्ताम्। यस्मिन् समये सुद्युम्नः स्वकीयराजकर्मणि उपदेशं वाञ्छन् आसीत्, तदा एतौ भ्रातरौ तथा कुर्वन्त आस्ताम्। तौ च बाहुदातीरवर्त्तिनौ[२१] नित्यं तत्तीरे एव आह्निकादीनि कर्माणि कुर्वन्तौ अभवताम्। महाभारतस्य शान्तिपर्वणि युधिष्ठिराय उपदेशदानव्याजेन एतत् वर्णितमस्ति। सा बाहुदानदी उत्कल (ओड़िशा) खण्डस्य गंजाममण्डले समेषां नेत्रपथा भवति। बाहुदा-तीरवर्त्तितया गंजाममण्डलान्तर्गतत्वेन उत्कलीयौ एव शंखलिखितौ। सा नदी पुण्यतमा श्राद्धयोग्या। अंगिराः[२२] स्वधर्मशास्त्रेषु तस्या वर्णनं कृतवान्। शंखः लिखितश्च प्रातिस्विकं धर्मशास्त्रं विरच्य मिलित्वा शंखलिखितधर्म-शास्त्रमेकं पृथक् लिखितवन्तौ इत्यपि निश्चप्रचं वक्तुं शक्यते। यतो हि वचनानि तथैव शंखवचनत्वेन, लिखितवचनत्वेन, शंखलिखितवचनत्वेन च लभ्यन्ते।

---

२०। महा० भा० शान्ति०, अध्याय २३

२१। त्वं गत्वा बाहुदां शीघ्रं तर्पयस्व यथाविधि।
देवानृषीन् पितृश्चैव मा चाधर्मे मनः कृथा॥
—महा० भा० शान्ति०, २३-३९

२२। नलिनी निर्मला नारा गुर्वी गर्भा गरा धरा।
क्षुरिका काशिका श्यामा दश प्रोक्ता रजस्वलाः॥
दारिद्र्यनाशिनी देया बाहुदा बहुला बला।
शर्मिष्ठा शयना स्वापा नव नद्यो रजस्वलाः॥ —अंगिराः, ९२४-९२५

पराशरः[२३] ततोऽर्वाचीनः युगभेदेन प्राधान्यविवक्षया एतयोः भ्रात्रोः धर्मशास्त्राणि द्वापरयुगस्य कृते भवन्ति इति उक्तवान्। अनेन द्वापरयुगीयौ एतौ शंखलिखितौ इति ज्ञायते। काणेमहाभाग[२४] एतयोः कालः खी० पू० ३००-खी० १०० इति निरूपितवान्।

उत्कलीयधर्मशास्त्रनिबन्धकाराः

कस्मात् समयादारभ्य उत्कलीयविद्वांसः स्मृतिशास्त्राणि आलोच्य सामाजिकरीतिशृंखलीकरणार्थं धर्मशास्त्रनिबन्धग्रन्थरचनायां संप्रवृत्ता इति निरूपयितुं साक्षात् किमपि प्रमाणं दृष्टिपथारूढं न भवति। धर्मशास्त्रेतिहासग्रन्थे[२५] महामहोपाध्यायकाणेमहाभागः भारतवर्षस्य विभिन्नप्रान्तीयान् धर्मशास्त्रनिबन्धान् आलोच्य तत्तत्कालनिरूपणादिकं सर्वं विचारपूर्णपद्धत्या समपादयदपि उत्कलीयधर्मशास्त्रनिबन्धकाराणां विषये तादृशं महार्घपूर्णं कमपि विमर्शं न कृतवान्। उत्कलराज्यसंग्रहालयकर्त्तृक-संरक्षिततालपत्र-संस्कृतमातृकाणां विवरणात्मकसूची—(डिस्क्रिप्टिव केटालाग्स आफ संस्कृत मैन्युस्क्रिप्टस्, ओरिशा स्टेट म्यूजियम, भुवनेश्वरम्) प्रदानावसरे मुखबन्धप्रविभागे तदानीन्तनसंरक्षकः (क्यूरेटर) श्रीकेदारनाथमहापात्रः केषांचन विदुषां स्मृतिनिबन्धरचयितॄणां कालदेशनिर्णयं कृतवान्। तत्र काणे महाभागस्य कृते एतादृशं विवरणं उत्कलीयधर्मशास्त्रनिबन्धविषयकं तेनोक्तम्। बहुदिनानि यावत् प्राचीनोत्कलशासकाः परशासनाधीना नासन्। स्वाधीनतया स्थित्वा प्राचीनानां ग्रन्थरत्नानां प्रकाश-प्रचारार्थं तेषां समयो नासीत्। विदेशिविदुषामेतस्मिन् कर्मणि अभिरुचिपूर्णा प्रवृत्तिः प्रथमतया संजाता, तैः बहुदिनात् परमुत्कलभूभागोऽधिकृतः। ततः परं यद् वा किमपि कृतम्। सार विलियम जोन्स महाभागः १७८४ खी०

२३। कृते तु मानवो धर्मस्त्रेतायां गौतमः स्मृतः।
द्वापरे शंखलिखितौ कलौ पाराशरः स्मृतः॥

२४। द्रष्टव्यम्—History of Dharmashastra, Vol. I

२५। Mahamahopadhyaya P. V. Kane in his monumental work entitled "History of Dharmashastra" covering five big volumes has devoted only five pages to the Dharmashastra works of Orissa. (Preface)

—Descriptive Catalogue of Sanskrit Manuscripts, Vol. I, Orissa, page-1. By K. N. Mahapatra

संवत्सरे कलिकातानगरीस्थाम् एसियाटिक् सोसाइटीं निर्माय तदानुकूल्येन बह्वीः मातृकाः संरक्षितवान्। कालक्रमेण म०म० हरप्रसाद शास्त्रिसदृशाः विद्वांसस्तत्र संलग्नाः सन्तः ग्रन्थसूचीप्रभृतीन् प्रस्तूय ऐतिहासिकं किमपि तथ्यं प्रकाशितवन्तः। उत्कलेषु तादृशं किमपि सौकर्यं नासीत्। तथापि ताम्रपट्टादिभ्यः अभिलेखेभ्यश्च केषांचन ग्रन्थानां, विशेषविद्वत्तासंपन्नानां विदुषां परिचयं प्राप्य कलिकाता एसियाटिक् सोसाइटीकर्त्तृकसंरक्षितोत्कलीय-तालपत्र-संस्कृतमातृकाभ्यः सपरिकरं परिचयादिकं लब्धा बहुषु समयेषु बहुभिः विद्वद्भिः बहूनि तथ्यपूर्णानि प्रकाशनानि कृतानि। अस्मत्-गुरुचरणास्तु बहुवर्षेभ्यः पूर्वं 'संस्कृत साहित्यकु ओड़िशार दान' (संस्कृतसाहित्याय उत्कलानां दानम्) इति शीर्षक प्रबन्धान् चतुरंग (ओड़िआ)-पत्रिकायां प्रकाशितवन्तः। तदानीं संपूर्णतया उत्कलीय धर्मशास्त्रनिबन्धरचयितॄणां विषये सम्यगवगमो जात इति निश्चप्रचं वक्तुं शक्यते। संप्रति गुरुचरणानाम् एतं प्रबन्धं वीक्ष्य स्वप्रतिभया विद्वत्तया, गवेषणया च अन्यानि तथ्यानि संगृह्य केदारनाथमहापात्रमहाभागः संग्रहालयताड़पत्रग्रन्थसूचीपुस्तकस्य मुखबन्धे, ओरिशा हिस्टोरिकल रिसर्च जर्नलमध्ये ग्रन्थकर्त्तॄणां कालनिर्णयं देशनिर्णयं कृतवान्। प्रायशः एतयोः विद्वद्वरयोराशयं गृहीत्वा उत्कलराज्यसंग्रहालयस्य इदानीन्तनः संरक्षकः पण्डितनीलमणिमिश्रः 'ओड़िशार संस्कृत लेखा ओ लेखक' (उत्कलानां संस्कृत लेखा लेखकाश्चेति) इति अभिधया एकां पुस्तिकां रचितवान्। एतेभ्यः पूर्वं हण्टरमहाभागः, वानार्जीमहाभागः, महताबमहाभागश्च स्वकीयेतिहासे (ओड़िशा विषयके) उत्कलीयधर्मशास्त्ररचनाविषये काश्चन सूचनाः दत्तवन्तः। एतेषां समेषां विवरणमुपजीव्य उत्कलीयधर्मशास्त्रनिबन्धकाराणामेका सूची अत्र उपस्थाप्यते। तत्र तेषां कालः कृतिश्चास्ति।[२६]

---

२६। द्रष्टव्यम्—Hunter, Orissa,
Mahtab, History of Orissa,
R. D. Banerjee, History of Orissa,
ओड़िशार संस्कृत लेखा ओ लेखक, पं० नीलमणि मिश्र
संस्कृत साहित्यकु ओड़िशार दान, पं० कुलमणि मिश्र
(चतुरङ्गपत्रिकायाम्)
उत्कलीय धर्मशास्त्रनिबन्धकाराः, स्मरणिका, मदीय लेखः,
३०-३२

**आचार्य शतानन्दः**

आचार्य शतानन्दः कतिचन ग्रन्थान् रचितवान् इति स्पष्टं निर्णेतुं न शक्यते। तन्नाम्ना यानि ग्रन्थरत्नानि श्रूयन्ते तेषु भास्वती, शतानन्दसंग्रहः, शतानन्दरत्नमाला उल्लेखयोग्यानि। 'भास्वती' ग्रन्थः गणितज्योतिषविषयकः भारतवर्षे प्रसिद्धः। अस्या नामान्तरं पंचसिद्धान्तसरस्वती। कालविषयकधर्मशास्त्रनिर्णयः अत्र विहितः। ४२०० युगाब्दे, १०२१ शकाब्दे, १०९९ खीष्टाब्दे अस्य ग्रन्थस्य पूर्त्तिः[२७] जाता। अस्य मातुर्नाम सरस्वती, पितुर्नाम शंकरः। दिव्यसिंहमहापात्रः, गदाधरराजगुरुः, कृष्णमिश्रः, रघुनाथदासप्रमुखश्च अमुं स्वकीयग्रन्थेषु प्रामाणिकत्वेन स्वीकुर्वन्ति। अयं पुरीवास्तव्य आसीत्।[२८]

**श्रीधरशर्मा**

एपिग्राफिका[२९] इण्डिकानुसारं यशोभंजदेवस्य उत्कलानां गंजाम-घुमुसर प्रान्तीयस्य समकालीनोऽयं विद्वान् अनेन श्रुति-स्मृति-ज्योतिषशास्त्राणि अधीतानि। अस्य नप्ता दानग्रहणसमये परिचयप्रदानव्याजेन कोटरावंगदानपत्रे श्रुतः। तत्र श्रीधरशर्मणो नाम आयाति।[३०] अस्य ग्रन्थो नैव प्राप्यते।

**नीलाम्बराचार्यः**

परां प्रसिद्धिं प्राप्तस्य आर्यासप्तशतीग्रन्थस्य प्रणेतुः गोवर्धनाचार्यस्य पिता नीलाम्बराचार्यः। द्वितीयानंगभीमदेवस्य (११९०–११९८ खी० ) राजत्वकाले

---

२७। खखाश्विवेदप्रमिते युगाव्दे
दिव्योक्तितः श्रीपुरुषोत्तमस्थः।
सरस्वतीशंकरयोस्तनुजः
श्रीमान् शतानन्द इति प्रसिद्धः॥
—ओ० एच० आर० जे०, भागः ५, क्रम- ३-४, पृ० १८३-१८९

२८। तत्रैव।

२९। ई० आई० भागः १८, पृ० २९९

३०। कोटरवंगविषयान्तःपातिपट्टवाडपाटकवास्तव्याय भारद्वाजगोत्रायांगिरसबार्हस्पत्यभारद्वाजात्रिप्रवराय यजुर्वेदाध्यायिने, माध्यन्दिनीयशाखाय, अनन्तकण्ठपण्डितप्रपौत्राय ज्योतिषकश्रीधरपौत्राय श्रुतिस्मृतिज्योतिःशास्त्रविद्धराधरपुत्राय श्रौतस्मार्तकर्मनिपुणज्योतिःशास्त्रैकधीरदीक्षितजगधरशर्मणे···इति।
—डेस० क्या० सा० म्या०, भागः १, पृ ४

भुवनेश्वरस्थ मेघेश्वरमन्दिरे निर्मितोऽभिलेखः नीलाम्बराचार्यपुत्रेण उदयनाचार्येण लिखितः। कटकमण्डलान्तर्गत-निआलि-ग्रामस्थ-सोभनेश्वरमन्दिरगात्रे प्राप्तोऽभिलेखोऽपि उदयनाचार्येण लिखितः। नीलाम्बरस्य कोऽपि स्मृतिग्रन्थोऽद्यावधि लोकलोचनं नागतः।

**शंखधरः**

भारतवर्षस्य पूर्वदिग्भागे अस्य शंखधरस्य ग्रन्थस्य प्रभावो भृशमासीत्। 'स्मृतिसमुच्चयः' अस्य नाम। प्रायेण उत्कल-बंग-मैथिलस्मृतिनिबन्धृभिः शंखधरः स्मृतः। शूलपाणिः, श्रीकरः, रघुनन्दनः, चण्डेश्वरठाकुरः, विद्यापतिठाकुरः इति एते प्रमुखा मैथिलबंगीयाः स्मृतिनिबन्धकारा अमुं स्मरन्ति स्वग्रन्थेषु। उत्कलीयैः बृहस्पति-नरसिंहमिश्रवाजपेयि-विश्वनाथमिश्रैः अस्य वाक्योद्धारः स्वग्रन्थेषु कृतः। किन्तु शंखधरस्य ग्रन्थ इदानीं न दृश्यते। चण्डेश्वरठाकुरः त्रयोदशशतकीयः। अतः तेनोद्धृतत्वात् तत्पूर्ववर्त्ती खी० १३०० पूर्ववर्त्ती अयं शंखधर इति निश्चप्रचम्।

**शंभुकरवाजपेयी**

यावन्तः धर्मशास्त्रनिबन्धग्रन्थाः उत्कलेषु विरचिताः। तेषु वाजपेयिपरिवारस्थैः बहुभिर्विद्वद्भिः प्रायेण अधिकग्रन्थाः संकलिताः। किन्तु शम्भुकरस्य तादृशः कश्चन पूर्णांगो ग्रन्थोऽद्यापि लोकलोचनं नागतः। हण्टरमहाभागः प्रप्रथमतया स्वकीयेतिहासग्रन्थे अस्य नाम उट्टंकितम्। अयं वैदिकः ब्राह्मणः निष्ठापरः, विशेषतः याज्ञिक आसीत्। आकुमारीहिमाचले निखिले भारतवर्षे अस्य प्रसिद्धिरस्ति। १६१५ संवत्सरीयेण कोशलानन्दकाव्यप्रणेत्रा गंगाधरमिश्रेण अस्मात् शिष्यत्वं गृहीतम्। स्वकीयगुरोः परिचयः तेन दत्तोऽस्ति।[३१] विद्याकरः

३१। पूर्वः सर्वसुपर्वनायकगुरुस्पर्धो समुद्धिरसा-
पृष्ठस्याखिलशास्त्रतत्त्वनिगमज्ञानैकवारांनिधिः।
जातः शंभुकराभिधः कविवरो विद्याकरस्तत्सुतः
संभूताः कवितालतोंलतिकराः वर्षाः प्रकर्षान्विताः।
तद्भव्यस्य कुले सुधांशुविमले रत्नाकरे धीमतां
गोपीनाथक एष पण्डितवरो हीरांकुरो वर्त्तते।
जातं जन्म ममेति तत्र सहसा नैषा विद्यते मुदं
विद्या हृतरान्यसंसदिपरा गोत्राधिका पूज्यते।
—डेस० क्या० सा० म्या०, भागः १, पृ० ६

अस्य पुत्रः। सम्बलपुरस्थ चौहाणराजपरिवारस्य पृष्ठपोषकता शंभुकरेण लब्धा।

**नरसिंहदेवः**

नरसिंहदेव[३२] (१२७८-१३०६)-स्य दानं प्रत्याख्यातवताऽनेन अग्निहोत्रपद्धतिः, अग्निहोत्रहोमप्रायश्चित्तपद्धतिः, दर्शपौर्णमासपद्धतिः, दुर्बलकर्मपद्धतिः, निरूढ-पशुबन्धपद्धतिः, स्मार्त्तरत्नावली-श्रौताधानश्लोकपद्धतिः, इति प्रमुखा ग्रन्था विरचिताः। रघुनन्दन-नन्दपण्डित-मदनपारिजातकार-चण्डेश्वरप्रमुखैः बहुभि-रयमुद्धृतः। उत्कलीयैः विश्वनाथमिश्र-विप्रमिश्र-गदाधर राजगुरु-दिव्यसिंह-महापात्र-रघुनाथदास-कृष्णमिश्रप्रमुखैरयमसकृत् उट्टंकितः।

**विद्याकरवाजपेयी**

शंभुकरस्यायं पुत्रः नित्याचारपद्धतेः कर्त्ता। अयं पितृतुल्यः परं स्मार्त्त-पण्डितः याज्ञिकः स्वग्रन्थे स्वपितरं[३३] भगवन्तं मत्वा स्तौति। नरसिंहवाजपेयि-गदाधरराजगुरु-दिव्यसिंहमहापात्र-कृष्णमिश्रप्रमुखा उत्कलीयाः स्मृतिज्ञास्तं स्मरन्ति। नन्दपण्डित-रघुनन्दनप्रमुखाः स्मृतिनिबन्धारोऽपि।

रामचन्द्रवाजपेयि-जगन्नाथवाजपेयिभ्यां स्मृतिनिबन्धाः विरचिताः। अनयोः रामचन्द्रः विद्याकरवाजपेयिनः शिष्यः। सूर्यदासः अस्य पिता। विद्याकर-वाजपेयिपुत्रेण जगन्नाथवाजपेयिना जगन्नाथकारिका एका लिखिता। पारस्कर-

---

३२। नानाशासनकृन्नृपालपरमान् श्रीमन्नृसिंहाभिधात
नैच्छत् शासनकं स्वधर्मनिरतो देशं जहौ तेन स।
काशीं प्राप ततः स्वसूनुसुधियं विद्याकरं सानुजं
स्वेषामुद्वहनार्थमुत्कलभुवं चायातुमादिष्टवान्॥
—नित्याचारपद्धतिभूमिका-म०म-श्रीसदाशिवमिश्रः

३३। यदा यदा हि धर्मस्येत्यंगीकृतिवशीकृतः।
मत्तातपादरूपेण जातो यस्तं हरिं भजे॥
तातपादपदाम्भोजं नत्वा वाजसनेयिनाम्।
नित्यार्थाह्निककृत्यानि लिख्यते तत् प्रसादतः॥
—नित्याचारपद्धतिः, पृ० १

गृह्यसूत्रस्य हरिहरभाष्ये तस्या उद्धारोऽस्ति ।[३४] अग्निष्टोमपद्धतिरस्य उत्कल-राज्यसंग्रहालयमध्ये संरक्षिताऽस्ति ।[३५]

**बृहस्पतिः**

अयं कृत्यकौमुदीनामकं ग्रन्थं रचितवान् । विशेषतः पूजाविषयकोऽयं ग्रन्थः उत्कलीयप्रख्यातपर्वणां निर्णयः पुराणवाक्यानां विमर्शपुरःसरं रचितः । विश्वनाथमिश्रः कृष्णमिश्रः, विप्रमिश्रश्च स्वग्रन्थे अमुं स्मरन्ति । अयं १३५० ख्री० परवर्त्तिकालीय आसीत् ।

**कालिदासचयनी**

अयं शुद्धिचन्द्रिकाग्रन्थस्य कर्त्ता । नरसिंहवाजपेयिनः अयं प्राचीनः । नरसिंहः स्वनित्याचारप्रदीपेऽमुं स्मरति । ( १५२०-१५७० )

**योगीश्वर पात्रः**

अन्तिमगंगनरपतेः निशंकभानुदेवस्य ( १४१३-१४३४ ) अयं कार्यालयाधिकारी आसीत् । अस्य ग्रन्थः दानदीपावली ।

**गोदावरमिश्रः**

अस्य प्रणीतो हरिहरचतुरंगाख्यः युद्धकौशलभित्तिको ग्रन्थः[३६] माड्राससर्वकार-द्वारा प्रकाशितः । तस्मिन् ग्रन्थे तत्कर्त्तृका अपरे अनेके ग्रन्था रचिता आसन् इति वर्णितम् । यथा—तन्त्रचिन्तामणिः, योगचिन्तामणिः, अद्वैतदर्पणः, अधिकरण-दर्पणः, नीतिचिन्तामणिः, नीतिकल्पलता, आचारचिन्तामणिः, जयचिन्तामणिः, सामुद्रिककामधेनुः, पातंजलदीपिका इति । उत्कलेषु प्रसिद्धा शारदाशरदर्चन-पद्धतिः तस्य कृतिः । अस्य पितुर्नाम बलभद्रः । अयं गजपतिप्रतापरुद्रस्य

---

३४ । पा० गृ० सू०, हरिहरभाष्यम् , का-१

३५ । वाजपेयोऽग्निचिद् विद्वान् सुधीर्विद्याकरात्मजः ।
जगन्नाथोऽभ्यधाच्छ्लोकैरग्निष्टोमस्य पद्धतिम् ।।

—अग्निष्टोमपद्धतेः पुष्पिका

३६ । माड्रास गवर्णमेण्ट ओरियण्टालिष्ट, भागः १७, १९५०

राजगुरुरासीत्। तस्य कालः १५१० खी० परवर्त्ती। गोदावरस्य पितृव्यः देवानन्दमिश्रः। तस्य अष्टौ पुत्राः। तेषु धराधरस्य पुत्रः मुरारिः। तस्य पुत्र नरसिंहमिश्रवाजपेयी स्मृतिनिबन्धकारः उत्कलेषु प्रसिद्धः।

**गजपतिपुरुषोत्तमदेवः** (१४६६-१४९७)

अयं महाभाग उत्कलेषु स्वाधीनो नरपतिरासीत्। 'मुक्तिचिन्तामणिः' 'गोपालार्चनविधि'श्चेति ग्रन्थद्वयं तत्कर्त्तृकम्। अनयोः मुक्तिचिन्तामणौ अनेकेषां जगन्नाथतत्त्वेतिहाससम्बन्धिनां ग्रन्थानामुल्लेखो दृश्यते।

**गजपतिप्रतापरुद्रदेवः** (१५२०)

'सरस्वतीविलासः' व्यवहाराध्यायसम्बन्धी ग्रन्थः पृथ्वीप्रसिद्धः गजपति-प्रतापरुद्रेण लिखित इति पुष्पिकायां लिखितमस्ति। किन्तु तस्य पृष्ठपोषकतायां स्थितेन लोल्ललक्ष्मीधरेण आन्ध्रपण्डितेनायं ग्रन्थो लिखितः, प्रतापरुद्रदेवनाम्ना भणितिः प्रकाशिता इति ज्ञायते। लोल्ललक्ष्मीधरेण शंकराचार्यकृतसौन्दर्य-लहरीग्रन्थोपरि टीका कृता। तत्रपुष्पिकायामस्य सरस्वतीविलासस्य नामो-ल्लेखस्तेन कृतः। किं च भारतवर्षीयधर्माधिकरणे प्रामाणिकग्रन्थरूपेण ब्रीटिश-सर्वकारस्य प्रीभिकाउनसिल-द्वारा ग्रन्थोऽयं स्वीकृत आसीत्। इति कृत्वा १८८१ खी० संवत्सरे इंग्लडस्य तून्वर ग्रन्थमालाद्वारा अस्यांग्लोऽनुवादः प्रकाशित आसीत्। १९२७ संवत्सरे महीशूरसर्वकारेण डा० श्यामशास्त्रिसंपादनया अस्य मूलसंस्कृतरूपं प्रकाशमगात्।[३७] डा० काणेमहाभागोऽस्योपरि तदीये धर्म-शास्त्रेतिहासे भूयसीमालोचनां कृतवान् अस्ति।[३८]

पुनश्च प्रतापमार्तण्डनामकः[३९] अपर एको ग्रन्थ एतन्नाम्ना रचितोऽस्ति। अस्य ग्रन्थस्य नामान्तरं प्रोढप्रतापमार्त्तण्ड इति। अस्य ग्रन्थस्योपरि डा० पि०

---

३७ चतुरंग, संस्कृत साहित्यकु ओड़िशार दान, पण्डितकुलमणिमिश्रः पौरुष-गजपतिप्रतापरुद्रदेव ओ सरस्वतीविलास-मदीयलेखः।

३८ हिस्ट्री आफ धर्मशास्त्र, प्रथमभागः, द्वितीयप्रविभागः।

३९ संपूर्णानन्दसंस्कृतविश्वविद्यालये-वाराणस्यां-पुण्यपत्तेन वी० ओ० आर० आई० मध्ये अस्य मातृकाः सन्तीति पत्राचारेण ज्ञातं मया। द्रष्टव्यं पत्रम् —दिनांकः १६-११-७८

के० गोड़े कमेमोरेसन् वाल्युम मध्ये एकः प्रबन्धः सम्यगितिहासपूर्णाया आलोचनाया चुम्बितः प्रकाशितः। अयं ग्रन्थः कालनिर्णयसम्बन्धी एको निबन्धः। माधवभट्टस्य पुत्रेण रामचन्द्रभट्टेन अयं ग्रन्थो विरचितः। प्रतापरुद्र-सकाशात् तदर्थं पण्डितशिरोमणिरिति पदवी तदीयगुरुणा बलभद्रमिश्रेण तस्मै प्रदत्ता इति राजेन्द्रलालमित्रमहाभागः[४०] सूचनामदात्।

**नरसिंहमिश्रवाजपेयी** (१५५६-१५६८)

अयं कौत्सगोत्रीयब्राह्मणः अनेकान् स्मृतिग्रन्थान् रचितवान्। तेषु नित्याचारप्रदीपः प्रधानः प्रकाशितश्च। अयं प्रदीपग्रन्थमालानां कर्त्ता। अस्य अपरे ग्रन्थाः केवलं श्रुतिमात्रेण जीविताः। अष्टादशप्रदीपग्रन्थास्तेन रचिताः। मुकुन्ददेवस्य (१५५९-१५६८) दूतरूपण आकवरस्य (१५६५-६८) राजसभां गत्वा स्वकीयया प्रतिभया तत्र प्रशंसितोऽभूदिति स्वग्रन्थपुष्पिकायां लिखितवान्। अस्य नाम प्रायेण तत्परवर्तिभिः निबन्धृभिः गृहीतमासीत्। मीमांसाशास्त्रे अत्यन्तं प्रोढपण्डित आसीत्। समयप्रदीप-श्राद्धप्रदीप-प्रतिष्ठा-प्रदीपादि ग्रन्थास्तेन रचिताः। विप्रमिश्रस्य अयं गुरुरिति विद्वांसः केचन कथयन्ति। किन्तु तथा न भवति। यतः तस्मात् अर्वाचीनोऽयं नरसिंहमिश्रवाजपेयी। विप्रमिश्रस्य आलोचनादशायामेतत् विवरिष्यते। अस्य पिता मुरारिमिश्रः-गोदावरमिश्रस्य आलोचनाप्रसंगो द्रष्टव्यः।

**विश्वनाथमिश्रः**—सप्तदशशतकस्य प्रथमार्धः

स्मृतिसारसंग्रहोऽस्य ग्रन्थः। दिव्यसिंहमहापात्र-गदाधरराजगुरू स्वीयग्रन्थेषु अमुमुद्धृतवन्तौ। ग्रन्थोऽयमुत्कलाक्षरेण प्रकाशित आसीत् बहुबर्षेभ्यः पूर्वम्। अयं विप्रमिश्रात् अर्वाचीनः दिव्यसिंहमहापात्रात् प्राचीनः।

**विप्रमिश्रः**

ग्रन्थकृत्परिचयप्रदानकाले आलोचितस्तत्र द्रष्टव्यः।

---

४० नोटिसेस आफ संस्कृत मैन्युस्क्रिपटस्, मित्रः, भागः ७, प्रतिभागः २, १८८३, पृ० २९३

**दिव्यसिंहमहापात्रः** —सप्तदशशतकीयः

श्राद्धदीपः कालदीपश्चेति अस्य ग्रन्थद्वयम्। अस्मिन् श्राद्धदीपे विश्वनाथमिश्रं विप्रमिश्रं च स स्मरति। अमुं च गदाधरराजगुरुकृष्णमिश्रप्रमुखाः स्वकीयग्रन्थेषु स्मरन्ति। कलिकतास्थ-ऐसियाटिक्सोसाइटी-द्वारा श्राद्धदीपः प्रकाशितः। पण्डितयादवेन्द्रनाथरायः ग्रन्थममुं संपादितवान्। डा० शिशिरकुमारमित्रश्च अत्रैकं मुखबन्धं विरच्य दिव्यसिंहस्य कालं देशं च निरणयत्।[४१] गदाधरपद्धतिकारः गदाधरराजगुरुः अष्टादशशतकस्य प्रथमभागे समजनि। तेन दिव्यसिंहपात्रस्य स्मृतत्वात् सप्तदशशतकः काल इति निश्चीयते। शिशिरकुमारमित्रस्तथैवोक्तवान् स वत्सगोत्रीयः। अस्य श्राद्धदीपस्य एका प्रतिः आडेयार[४२] लाइब्रेरी माद्रास प्रान्ते अस्ति। विप्रमिश्रकृतश्राद्धदीपग्रन्थसम्बन्धे पत्राचारसमये तत्रत्यकर्त्तृपक्षः इमं श्राद्धदीपमुत्कलाक्षरेण तालपत्रे लिखितं श्राद्धप्रदीपं मत्वा मत्प्रति प्रेषितवान्। मया च तेषां भ्रान्तिं ज्ञात्वा प्रत्यर्पिता प्रतिः। कालदीपः अस्मद् गुरुचरणैः पण्डितकुलमणिमिश्रशर्मभिः संपादितः प्रकाशितश्च।

**लक्ष्मीधरमिश्रः** —सप्तदशशतकस्य प्रथमभागे

शैवकल्पद्रुमोऽनेन रचितः। एकाम्रकाननस्थोऽयं सप्तदशशतकस्य प्रथमभागे समजायत। अस्य पितामहः प्रद्युम्नमिश्रः खोर्धास्थ-भोईवंशीयनरपतेः नरसिंहदेवस्य समसामयिकः इति ग्रन्थरूपम् उपक्रमणिकाश्लोकमालातो ज्ञायते। नरसिंहदेवः १५२२-१५४६ संवत्सरे शासक आसीत्।

**गदाधरराजगुरुः** —अष्टादशशतकीयः

एतावता यावन्तो धर्मनिबन्धकाराः उत्कलेषु जाताः, तेषु गदाधरराजगुरुः वस्तुगत्या स्वग्रन्थविस्तारदृष्ट्या लोकानां जीवनप्रवाहेण सह जीवितोऽस्ति। गदाधरपद्धतिस्तस्य ग्रन्थमाला। सारसंज्ञया अस्य विभागः क्लृप्तः। अष्टादशसारविशिष्टा इयं गदाधरपद्धतिः। आचारसारः, कालसारः, दानसारः, व्रतसारः,

---

४१। श्राद्धदीपः —Introduction : page 2. It is generally held that Dibyasimha Mahapatra flourished in the latter half of the seventeenth century, possibly between 1640 and 1680 AD.

४२। द्रष्टव्यं—संपृक्तपत्रम्, दिनांकः १६।६।७८ पत्रांकः —Nil

विवाहसारः, शुद्धिसारः, स्नानसारः, संस्कारसारः इतिप्रमुखाः। एषु आचारसारकालसारौ ऐसियाटिक् सोसाइटी-द्वारा प्रकाशितौ आस्ताम्। अनयोः आचारसारस्य मुद्रितं रूपं न प्राप्यते। कालसारस्य उत्कलाक्षरैर्मुद्रणं कटकस्थ-राधारमणप्रेस-द्वारा कृतमस्ति। संप्रति उत्कलेषु धर्मशास्त्रविभागे पाठ्य-रूपेणास्ति। नरसिंहवाजपेयिनः अष्टादशप्रदीपप्रभावेण अष्टादशसारग्रन्थानयं लिखितवान्। अस्य पितामहः श्रीकृष्णमहापात्रवाजपेयी खोर्धानरपतेः बृहत्-पण्डितविरुदं प्राप्तवानासीत्। स नीतिरत्नाकराख्यमेकं धर्मशास्त्रं निवबन्ध। कालसारग्रन्थेऽयं ग्रन्थो सकृत् श्रावितः। कृष्णराजगुरोः त्रयः पुत्राः—हलधरः, नीलाम्बरः, यमेश्वरश्चेति संज्ञया आसन्। ज्येष्ठः हलधरः शारदवाजपेययागं कृतवान् राज्ञः हरेकृष्णदेवस्य राज्ञाः (१७१५-१७१८) गुरुः संजातः पुरी-नगर्या उपकण्ठे एकं ग्रामं प्राप्तवान्। तस्य नाम वीरहरेकृष्णपुरशासनम् इति। नीलाम्बरः वेदान्त-स्मृति-ज्योतिष-साहित्य-व्याकरण-नीतिशास्त्रादिषु गभीरान्तः-स्थलावगाही। भगवतो जगन्नाथस्य स्नानोत्सवस्तोत्रं तेन विरचितम्। स गजपतिहरेकृष्णदेवस्य (१७१५-१७१८) राजगुरुरासीत्। गदाधरराजगुरोः पिताऽयं नीलाम्बरराजगुरुः, माता जानकीदेवी। स्वग्रन्थे कालसारे संप्रति उपलब्धे गदाधरः विप्रमिश्र-दिव्यसिंहमहापात्र-विश्वनाथमिश्र-नरसिंहवाजपेयि-शंभुकर-विद्याधरवाजपेयि-कालिदासचयनिप्रभृतीन् उत्कलीयधर्मशास्त्ररचयितॄन् उद्धरति। तं च रघुनाथदास-कृष्णमिश्र-पण्डितसर्वस्वकार-भुवनेश्वरबड़पण्डा प्रभृतयः स्मरन्ति।

**वासुदेव रथः** —अष्टादशशतकीयः

गदाधरराजगुरोरयं समसामयिकः। नरसिंहवाजपेयि-गदाधरराजगुरुप्रभावेण अयं अष्टादशसंख्यकान् प्रकाशग्रन्थान् स्मृतिप्रकाश-न्यायप्रकाश-मीमांसाप्रकाश-भुवनेश्वरीप्रकाश-मण्डलप्रकाशप्रभृतीन् रचितवान्। एषु स्मृतिप्रकाशस्य एकः अंशविशेषः ऐसियाटिक् सोसाइटी-द्वारा प्रकाशितः।

**रघुनाथदासः** —अष्टादशशतकस्य द्वितीयार्द्धभागः

कालनिर्णयः, श्राद्धनिर्णयः, उत्पाततरंगिणी, न्यायरत्नावली इति एते धर्मशास्त्रग्रन्था अनेन रचिताः। काव्यालंकारग्रन्था अपि विरच्य अष्टादशशतकस्य द्वितीयार्धे प्रसिद्ध आसीत्। कालनिर्णय-ग्रन्थः रविवासरे अक्टोवरमासि

१७२८ सम्बत्सरे स्वयं रघुनाथेन लिखित आसीत्। तदीय हस्तलिखिता मातृका उ०रा०सं० संरक्षिताऽस्ति। अस्य अलंकारग्रन्थसाहित्यभूषणोपरि गवेषयित्वा अध्यापक अद्वैतचन्द्रधलः राष्ट्रीयसंस्कृतसंस्थानतः 'विद्यावारिधिः'—पी-एच०डी० इति प्राप्तवान्। रघुनाथस्य पिता वासुदेवः पुरीजगन्नाथमन्दिरस्य मुक्तिमण्डपे पुराणपण्डित आसीत्। माता अम्बिका। गोत्रं कौण्डिन्यम्। ग्रामः गड़गड़ा-साइलोप्रान्ते उत्कलेषु। १७७५ सम्बत्सरेऽसौ दिवं जगाम इति तदीयवंशजेन बलरामदासेन सुन्दरीनामककाव्ये लिखितमस्ति।[४३] अयं गदाधरराजगुरु-विप्रमिश्रप्रभृतीन् स्मरति।

**महामहोपाध्याय कृष्णमिश्रः** १७३६ तः परवर्त्ती

कालसर्वस्व-शुद्धिसर्वस्वाख्यग्रन्थयोः कर्त्ता गदाधर-दिव्यसिंहमहापात्रविप्रमिश्र-प्रभृतीन् स्मरति। कौंत्सगोत्रीयस्यास्य पिता परमानन्दमिश्रः। पितामहः रामचन्द्रमिश्रः बुधनन्दिनीटीकां सहृदयानन्दमहाकाव्यस्य च रचितवान्। अयं कृष्णमिश्रः अष्टादशशतकस्य मध्यभागीयः।

**गोविन्दकविभूषण सामन्तरायः** —अष्टादशशतकस्यान्तिमभागीयः

अयं 'सूरिसर्वस्व' नामकधर्मशास्त्रग्रन्थस्य कर्त्ता। अत्र विष्णोरर्चनापद्धतिः श्लोकेन निबद्धा।[४४] अयं ग्रन्थः १७०० शकाब्दे १७७८ खी० समाप्ति-मगादिति पुष्पिकायां लिखितम्। गजपति-वीरकेशरिदेवो १७३६-१७९३ गोविन्दसामन्तरायं कविभूषणपदव्या भूषितवान्। सूरिसर्वस्वग्रन्थस्य प्रथमार्धः ऐसियाटिक् सोसाइटी-द्वारा १९१२ सम्बत्सरे प्रकाशित आसीत्। अपरोऽंशः उत्कलराज्यसर्वकारस्य सांस्कृतिकविभाग-द्वारा प्रकाशितः। अस्य पितुर्नाम रामचन्द्रसामन्तरायः बृहत्पण्डितः।

इतिहासदृष्ट्या विचारे क्रियमाणे गोविन्दकविभूषणसामन्तराय एव अन्तिम-धर्मशास्त्रनिबन्धकारः उत्कलेषु। ततः परमपरे केचन विद्वांसो जन्म लेभिरे।

---

४३। द्रष्टव्या : 'दिग्दर्शिनी'—जून् १९७८—रघुनाथदासस्य आयुः प्रमाणम्
—अद्वैतधलः, ओ० एच० आर० जे० १९६२ भा० १, नं० २, पृ० ७३-७४

४४। खशून्यमुनिचन्द्रमः प्रमितशाकसंवत्सरे
गते व्यरचि हे बुधा विमलशास्त्रमेतन्मुदा।
—डे० क्या० सान्स० म्यानु०, भागः १, पृ० XLIII, XLIV

किन्तु एतद्वत् न भवन्ति । अत्र सन्दर्भे संक्षिप्य केषांचन विदुषां धर्मशास्त्र-विषयकं ग्रन्थराशिं पुरस्कृत्य परिचयो दत्तः । इतरेषां येषामत्र सन्निवेशो विस्तरभिया न कृतः, तेषां केवलं नाम, ग्रन्थनाम, कालश्च अत्र उपस्थाप्यन्ते ।

विश्वम्भरमिश्रप्रणीता स्मृतिदीपिका अष्टादशशतकीया, वासुदेवत्रिपाठि १६००-१७५० कृतं प्रायश्चित्तविलोचनं, मुरारीमिश्रस्य प्रायश्चित्तमनोहरः, मागुणिमिश्रस्य शैवपद्धतिः १६७४, कृष्णदासस्य नित्याचारप्रकरणं, गोपालनन्दस्य नित्याचारपद्धतिः, गोपीनाथपट्टनायकस्य शूद्राह्निकपद्धतिः, योगिप्रहराज-महापात्रस्य स्मृतिदर्पणः, विद्याकरवाजपेयिपुत्रजगन्नाथवाजपेयिनः अग्निष्टोम-पद्धतिः, श्रीधरस्य १६००-१६३५ आचारचिन्तामणिः, धर्मपाठिनः कालचन्द्रिका, पीताम्बरस्य १७६५-८६ श्रीकृष्णार्चनविधिः, कृष्णबृहत्पण्डितस्य नीतिरत्नाकरः, भुवनेश्वरमिश्र-बृहत्पण्डितस्य वार्षिकपर्वसंग्रहः (मया सरस्वतीटिप्पण्या संपादितः, उत्कलसंस्कृतगवेषणासमाजपक्षतः प्रकाशितश्च) छोटागोविन्द-दासस्य सर्वस्मृतिसारः, आदित्यसूरेः कालदीपः, दीनबन्धुमिश्रस्य प्रायश्चित्त-मुक्तासंग्रहः, दिव्यसिंहमिश्रस्य संस्कारकल्पलतिका, सुरमिश्रस्य जगन्नाथप्रकाशः, रामदेववाजपेयिनः तिथिनिर्णयप्रदीपिका, कृष्णशर्मणः शुद्धिप्रकाशः, महामहो-पाध्यायसदाशिवमिश्रस्य कल्यापद्धर्मसर्वस्वम् इत्येते धर्मशास्त्रनिबन्ध ग्रन्थाः उत्कलेषु विरचिताः । संप्रति पुरीश्रीसदाशिवकेन्द्रीयसंस्कृतविद्यापीठस्य प्राक्तनधर्मशास्त्राध्यापकैः तथा मदीयगुरुचरणैः पण्डितकुलमणिमिश्रशर्मभिः धर्मशास्त्रशब्दकोशः वसिष्ठस्मृतेः तत्त्वप्रकाशिकाटीका, पारस्करगृह्यसूत्रस्य बालबोधिनी, दिव्यसिंहकृत कालदीपस्य तेजनी, प्रायश्चित्तकारिका इत्येते ग्रन्थाः विरचिताः । तत्रत्य संप्रति धर्मशास्त्राध्यापकस्य डा० किशोरचन्द्रमहापात्रस्य दायभागसमीक्षा एका नूतना कृतिः स्मृतिशास्त्रस्य पर्यालोचनात्मिका उत्कसंस्कृत-गवेषणासमाजपक्षतः १९८१ सम्बत्सरे मुद्रापिता प्रकाशिता च ।

---

## धर्मशास्त्रनिबन्धृषु विप्रमिश्रः

### श्राद्धप्रदीपकारो विप्रमिश्रः

सन्दर्भेऽस्मिन् विचारे क्रियमाणे उत्कलीयस्मृतिनिबन्धकारेषु विप्रमिश्र एकं प्रमुखतमं स्थानं गृह्णातीति वक्तुं शक्यते। यदि वा शतानन्दाऽऽचार्य उत्कलीय-स्मृतिनिबन्धकारेषु प्राचीनतम इति प्रागस्माभिः प्रत्यपादि, गोविन्दकविभूषण-सामन्तरायश्च परम्परावशेनार्वाचीनो निबन्धकार इत्यप्युक्तं, तथापि तन्मध्य-वर्त्तित्वेनेतरेषां स्मृतिनिबन्धकाराणां समक्षतया विप्रमिश्र आपततीति सुधिजन-संविदस्ति। एतावता यावन्ति उत्कलीयस्मृतिनिबन्धग्रन्थरत्नानि प्रकाशक्षेत्रमा-गतानि, यानि वा ताड़पत्रमातृकारूपेण इतस्ततो लसन्ति, तेषां लिखनशैली विप्रमिश्रप्रणीत-श्राद्धप्रदीपलिखनशैलीतो भिन्ना। प्रौढ़पाण्डित्यपूर्णानां विदुषां लेखनीतः शब्दगुम्फो यथा निःसरति, तथा विप्रमिश्रस्य शैली तदीयपाण्डित्यवैभवं सूचयति।

सोऽयं विद्वन्मूर्धन्यो विप्रमिश्र उत्कलीय इति नास्ति विचिकित्सा। श्राद्धप्रदीपस्य 'बाधाभ्युच्चयालोके'[१] स्वजन्मभूमिरुत्कलदेश इति वदन्नुत्कलीय-श्राद्धपरंपरायाः शास्त्रीयं निबन्धनं प्रस्तौति। अपि च स्वसिद्धान्तान् परं प्रमाणपूर्णतया घटयितुं निखिलभारतभूमण्डलप्रसिद्धानामुत्कलीयधर्मशास्त्र निबन्धकाराणां श्रीमतां शंभुकरविद्याकरवाजपेयिचरणानां मतानि सम्मेलयति। 'तन्त्रालोके'[२] स्वजन्मभूमिप्रसिद्धशास्त्रीयसिद्धान्तान् द्योतयितुम् 'अस्मद्देशेषु'

---

१। "निमन्त्रणस्यतु प्रैषत्वाभावेऽपि यदुत्कलदेशेऽनुष्ठानं तत् किं निबन्धनम्-इति जानीमः।" —श्राद्धप्रदीपः, बाधाभ्युच्चयालोकः।

२। "अस्मद्देशेषु निर्वि ··· मातृसांवत्सरिकानुष्ठानादसम्बन्धव्यवायाभावात् अनुषंगाधिकरणन्यायसम्भवात् उभयत्रान्वय एवेति तत्त्वम्।"
—श्राद्धप्रदीपः, तन्त्रालोकः —द्रष्टव्यो मूलग्रन्थभागः।

इत्यादि पदं विन्यस्यति। एतेन विप्रमिश्रस्य उत्कलीयत्वं निर्विवादं सिद्ध्यति। किन्तु विप्रमिश्र उत्कलेषु कं भागं स्वजन्मना व्यभूषयत् तं केनापि प्रकारेणाकलयितुं सौकर्यं सौविध्यं वा नास्ति। एतावता कालेन केनापि ऐतिहासिकेन विप्रमिश्रस्य स्वजन्मभूभाग उत्कलेषु कस्मिन् खण्डे न निर्धारितः, तादृशं किमपि प्रमाणं प्राप्तुं न शक्यते।

ग्रन्थकर्त्तुः विप्रमिश्रस्य कालनिर्णयः

एतत्सन्दर्भस्य लिखनात् पूर्वं विद्वद्भिर्विप्रमिश्रस्य कालनिर्णयाय मतिर्विस्तारितेति लक्षितमस्माभिः। अतस्तेषां मतानि समुपस्थाप्य निर्णय उपस्थापयिष्यते।

यदि वा दिव्यसिंहमहापात्रप्रणीते 'श्राद्धदीपे' गदाधरराजगुरुप्रणीते 'कालसारे' विप्रमिश्रस्य नामोट्टंकनं प्राप्तं, तदीयः श्राद्धप्रदीपाख्यो ग्रन्थश्च स्मृतस्तथापि श्राद्धप्रदीपस्य स्वरूपं केनापि इदानीन्तनविदुषा स्वनयनकटाक्षेणाकलितं नासीत्। 'चतुरंग' पत्रिकायां मदीयगुरुचरणाः पण्डितकुलमणिमिश्रशर्माणस्तद्विषये सम्यगालोच्य तस्य विप्रमिश्रस्य श्राद्धप्रदीपस्य च कालनिर्णयं कृतवन्तः। तैरेव ग्रन्थस्य स्वरूपं दृष्टमासीत्, आचूडं चुम्बितश्च तदीयो विषयः। अतस्ते भवन्ति प्रप्रथमविद्वांसो विप्रमिश्रसम्बन्धिसूचनादाने। अनन्तरमेतेषां मतानि स्वीकृत्य उत्कलराज्यसंग्रहालयाधीक्षकाः श्रीमन्तः केदारनाथमहापात्राः। एतैर्महान्तं श्रमं स्वीकृत्य राज्यसंग्रहालयसंरक्षितानां निखिलानां तालपत्रमातृकाणां विवरणविषयिणी सूची निर्मिता। एतेन कर्मणा प्रायेण समेषामुत्कलीयधर्मशास्त्रनिबन्धकाराणां विषये ऐतिहासिकी पृष्ठभूमिः लोकलोचनपर्यन्तमागता। काणेमहाभागा यथा धर्मशास्त्रेतिहासरचना द्वारा भारतवर्षस्य नानाप्रान्तीयधर्मशास्त्रनिबन्धकारसहितानां स्मृतिशास्त्राणां सम्यक् कलनं प्रतिपादितवन्तस्तथैते महापात्रमहाभागा उत्कलेषु काणेपदभाज इति कथनेन नैवातिवचनतां प्राप्नुयुः। तैः विवरणसूचीप्रणयनावसरे विप्रमिश्रस्य कालसम्बन्धे किंचित् चर्च्चितम्। तदनन्तरं संस्कृतलेखा ओ लेखक ग्रन्थे पण्डितनीलमणिमिश्रः एतेषां पूर्ववर्त्तिनां विदुषां मतानि उल्लिख्य विप्रमिश्रस्य कालं विवेचयति, तत्र नास्ति तस्य किंचन मतं स्वकीयम्। अनन्तरं शिशिरकुमारमित्रमहोदया वंगस्थ—ऐसियाटिक् सोसाइटी प्रकाशित-दिव्यसिंहमहापात्रप्रणीत-श्राद्धदीपस्य मुखबन्धे विप्रमिश्रस्य कालसम्बन्धे किमप्युक्तवंतः। एतेषां मतानि संप्रति विविच्यन्ते।

विप्रमिश्रः श्राद्धप्रदीपे मंगलाचरणे स्वकीयगुरोः नृसिंहमिश्रस्य नाम[३] स्मरति। गुरोः नाम्ना साकं पौण्डरीकाग्निचित् इत्यपि विशेषणं सूचयति। एतावन्तीं सूचनां प्राप्य कश्चन पाठकः "नित्याचारप्रदीपादिग्रन्थमालानां कर्त्तारं नरसिंहमिश्रवाजपेयिनं विप्रमिश्रस्य गुरुत्वेनामनेत् इति विचिकित्सां मोचयितुं मदीया गुरुचरणा एवमुपन्यस्यन्ति यत् "स[४] ग्रन्थारम्भे नृसिंहमिश्रं निजगुरुत्वेन स्वीकुरुते। नित्याचारप्रदीपकारो नृसिंहमिश्रोऽस्य गुरुर्नैव भवितुं शक्यते। स्वकीयग्रन्थे शंभुकरविद्याकरयोर्मतानि बारंबारमुल्लिखितान्यपि स्वगुरो र्नृसिंहस्याभिप्रायः किमर्थं नोद्धृतः तेन। किं च नृसिंहवाजपेयी श्राद्धप्रदीपाख्यमेकं ग्रन्थं व्यरचयत्। तच्छिष्यः विप्रमिश्रः तेनैव नाम्ना-(श्राद्धप्रदीपनाम्ना) अपरमेकं ग्रन्थं कथं लिखेत्? न लिखेत् इति भावः।" पुनश्च स्मृतिसारसंग्रहकर्त्तुः विश्वनाथमिश्रस्य कालनिर्णयकाले तेऽपि इत्थमूचुः यत्[५] अयं विश्वनाथमिश्र-महाशयः स्मृतिसारसंग्रहनाम्ना एकं स्मृतिग्रन्थमलिखत्। परवर्त्तिनो गदाधरस्य 'कालसारे' तस्यानेके अंशा अविकृतभावेन उद्धृता दृश्यन्ते। विश्वनाथः दिव्यसिंहमहापात्रात् प्राचीनः। विप्रमिश्रात् अर्वाचीनः"। इति। अनेन विप्रमिश्रो विश्वनाथमिश्रात् प्राचीन इति स्फुटः। विश्वनाथमिश्रः[६] सप्तदशशतकस्य प्रथमार्द्धकालीनः॥

---

३। पौण्डरीकाग्निचिन्मिश्रः श्रीनृसिंहगुरोः पदे।
सम्राजोऽद्य नमस्यामो मीमांसासूक्ष्मदर्शिनः॥

४। "से ग्रन्थारम्भरे नृसिंहमिश्रंकु निजगुरुबोलि स्वीकार करि अछन्ति। नित्याचारप्रदीपकार नृसिंहमिश्र एहांक गुरु हेबा सम्भबपर नुहें। कारण से तांक ग्रन्थरे शंभुकर ओ विद्याकरंक मत बारंबार उल्लेख करुथिबा सत्वे निज गुरु नृसिंहंक अभिप्राय किम्बा नाम किपरि उद्धार न करन्ते? आउ पुणि नृसिंहवाजपेयी गोटिए श्राद्धप्रदीप रचना करिछन्ति। तांकर शिष्य सेहि नामरे ग्रन्थ लेखन्ते किपरि॥"

—चतुरंग, ओड़िआ जर्नाल, १९४७, पृ० २२३

"संस्कृत साहित्यकु ओड़िशार दान"—पं० कुलमणि मिश्र।

५। "ए महाशय स्मृतिसारसंग्रह नामरे गोटिए स्मृति ग्रन्थ निर्माण करि अछन्ति। परवर्त्ती गदाधरंकर कालसाररे तांकर अनेक लेखा अविकृत भावरे उद्धृत हेबा देखा याए। विश्वनाथ दिव्यसिंहंक ठारु प्राचीन ओ विप्रमिश्रंक ठारु अर्वाचीन।" —तत्रैव, पृ० २६५

६। "Visvanath, being a predecessor of Divyasimha Mahapatra may definitely be placed in the first half of the 17th Century."

—Des. Cat. Sans. MSS Orissa, K. N. Mahapatra Vol. I, XXX

अत्र केदारनाथमहापात्रमहाभागा[७] "यथा विप्रमिश्रः स्वकीयगुरोः नरसिंहमिश्रं गुरुत्वेन नमस्कृत्य एतद्ग्रन्थमारब्धवान्, अतः सप्तदशशतकस्य द्वितीयार्द्धवर्त्ती प्रथमार्द्धे स भवितुं शक्यते यतो हि सप्तदशशतकस्य द्वितीयार्द्धवर्त्ती दिव्यसिंह-महापात्रस्तं 'श्राद्धदीपे' पंचवारं स्मरति ।" इति लिखन्ति ।

दिव्यसिंहमहापात्रस्य कालनिर्णयसमये डा० शिशिरकुमारमित्रः[८] केदारनाथ-महापात्रस्यैव मतमुपस्थाप्य विप्रमिश्रं सप्तदशशतकस्य प्रथमभागे परिचाययति ।। एवमन्येऽपि ।।

अत्र विचार्यते । समे विद्वांसो ये वा विप्रमिश्रस्य कालनिर्णयक्षेत्रमागताः ते श्राद्धप्रदीपमंगलाचरणश्लोकोट्टङ्कितं विप्रमिश्रस्य गुरुं पौण्डरीकाग्निचिन्नृसिंहमिश्रं नरसिंहवाजपेयित्वेन मन्यते । केवलमस्माकं गुरुचरणा अन्यथा मतं पोषयन्ति । प्रागुक्तम् । वस्तुगत्या विप्रमिश्रस्य गुरुः नृसिंहमिश्रः, न च महामहोपाध्याय-नरसिंहवाजपेयी । नित्याचारप्रदीपादिग्रन्थान् प्रणीय चयनवाजपेयप्रभृतियागादीन् कृत्वा नरसिंहमिश्रः वाजपेयिसंज्ञया आत्मानं स्वग्रन्थपुष्पिकायां प्रकाशयति । अपि च कुत्रापि ग्रन्थे पौण्डरीक-याजित्वद्योतनात्मकं शब्दं न प्रयुङ्क्ते । नृसिंहमिश्रं नरसिंहमिश्रवाजपेयित्वेन कलयितुं केदारनाथमहापात्र-नीलमणि-मिश्रयोर्या प्रवृत्तिः समुत्पन्ना, तत्रेदमेव बीजं यत् ताभ्यां स्वग्रन्थविरचनकाले विप्रमिश्रप्रणीतः श्राद्धप्रदीपो न दृष्ट आसीत् । केवलं तैः चतुरंगपत्रिकाप्रकाशितं 'संस्कृत साहित्यकु ओड़िशार दान' (संस्कृतसाहित्याय उत्कलानां दानम्) शीर्षकं मद्गुरुचरणकर्त्तृकं प्रबन्धं वीक्ष्य स्वपुस्तकानि निर्मितानि । चतुरंगे

---

७ । Vipra Mishra begins this work after paying his respects to his preceptor Nrisimha Mishra, who may tentatively be identified with the great Narasimha Vajapeyin. But he can definitely be placed in the first half of the 17th Century as he is found quoted five times in the Shraddha-dipa by Divyasimha Mahapatra of the second half of the same century. *Ibid.*

८ । It is generally held that Divyasimha Mahapatra flourished in the latter half of the seventeenth century, possibly between 1640 and 1680 AD. This is more or less confirmed by the internal evidence of the text. The author refers to Vipra Mishra, of Shraddha-Viveka and Viswanath Mishra, the reputed compiler of Smritisara-Samgraha, both of whom belonged to the first half of the seventeenth century. —*Shraddha Dipa* ; Introduction, Page 2

गुरुचरणा नरसिंहमिश्रं नृसिंहमिश्रात् भिन्नं मन्यन्ते। दिव्यसिंहमहापात्र-कृतश्राद्धदीपग्रन्थस्य मुखबन्धे डा० शिशिरकुमारमित्रमहाभागोऽपि महापात्रमिश्रयोः मतं स्वीकुर्वाणस्तथैव लिखति। एतावता नरसिंहवाजपेयिनो नृसिंहमिश्रो भिन्न इति विचारस्य प्राग्भूमित्वेनोक्तम्।

नृसिंहमिश्र-नरसिंहवाजपेयिनो र्भेदबीजम्

१। नृसिंहमिश्रः पौण्डरीकयाजित्वेन परिचीयते। नरसिंहवाजपेयी वाजपेय-याजित्वेन परिचितः।

२। ग्रन्थकर्त्ता विप्रमिश्रः समेषां प्राचीनपरंपरानुसारिणां महतां स्मृतिनिबन्ध-काराणां मिताक्षराकारकल्पतरुकारादीनां मतानि उट्टंक्य उत्कलीयानां शंभुकरविद्याकरवाजपेयिनां सिद्धान्तान् परं प्रमाणत्वेन कीर्त्तयन्नपि स्वगुरोः नृसिंहमिश्रस्य मतं न घोषयति।

३। नरसिंहवाजपेयिनां प्रदीपग्रन्थमालायां 'श्राद्धप्रदीपा'ख्यो ग्रन्थो निर्मितः। सम्प्रति नोपलभ्यते। तच्छिष्यत्वेन विप्रमिश्रः कथं वा गुरुप्रणीतग्रन्थनाम्ना एकं ग्रन्थं विरचयेत्। स्याच्चेत् शिष्टाचारविरोधः स्यात्। अतो न संभाव्यते॥

४। नरसिंहवाजपेयी महामहोपाध्यायपदव्यालंकृतः। तत्पक्षे तत्पदवीं त्यक्त्वा पौण्डरीकयाजिद्योतिनी पदवी अधिकपरिचयप्रदायिनी न भवति।

५। एतावता उपलब्धेषु नरसिंहवाजपेयिकर्त्तृकेषु ग्रन्थेषु यादृशी लिखनशैली प्राप्यते सा विप्रमिश्रलिखनशैलीतोऽर्वाचीना, दुर्बला, विचारपद्धत्या कृशा। विप्रमिश्रस्य गुरुत्वेन नरसिंहवाजपेयिनि स्वीकृते स्वशिष्यापेक्षया गुरोः दौर्बल्यं न सहकरम्। विप्रमिश्रस्य शैली प्राचीनमीमांसाकुला शूलपाणि-शैलीव शास्त्रीयवाग्विलासचुम्बिनी।

कोऽयं पौण्डरीकाग्निचिन्नृसिंहमिश्रो विप्रमिश्रस्य गुरुरिति जिज्ञासायां केचन नरसिंहवाजपेयिनः वंशीयं नृसिंहमिश्रमाक्षिपन्ति। सत्यम्। तदीयवंशे नृसिंह-मिश्रसंज्ञया एको महान् स्मृतिशास्त्रनिगद आसीत्। तद्यथा-कौत्सगोत्रोत्पन्नस्य मीमांसार्णवकर्णधारस्य शुद्धिमुक्तावल्याः रचयितुः मृत्युंजयमिश्रस्य पुत्रद्वयं नारायण-मिश्रः, जलेश्वरमिश्रश्च। जलेश्वरस्य पंच पुत्राः। तेषु ज्येष्ठो नृसिंहमिश्रः, तदनन्तरो वरो गंगाधरः। गंगाधरस्य द्वौ पुत्रौ पण्डितेशदेवानन्दमिश्रः,

राजगुरुबलभद्रमिश्रश्च। देवानन्दस्य अष्टौ पुत्राः। तेषु वामदेवः प्रथमः, धराधरो द्वितीयः। धराधरस्य दश पुत्राः। तेषु विघ्नेश्वरो ज्येष्ठः, मुरारिः द्वितीयः। मुरारेः पुत्रः महामहोपाध्यायाग्निचिन्नरसिंहवाजपेयी। इति। मृत्युंजयमिश्रस्य प्रपौत्रः राजगुरुबलभद्रमिश्रो गजपतिपुरुषोत्तमदेवस्य १५६६-१५६७ खी० राजगुरुरासीत्। बलभद्रमिश्रो नृसिंहमिश्रस्य भ्रातुष्पुत्रः। अतः पंचदशशतकस्य प्रथमार्धं तस्य कालः। किन्तु अयमपि वाजपेयिसंज्ञयाऽभिहितः। न तु पौण्डरिकयाजिसंज्ञया। अतो नरसिंहवाजपेयिवंशीयो नृसिंहवाजपेयी विप्रमिश्रस्य गुरुर्भवितुमपि न शक्यते। पौण्डरीकाग्निचिन्नृसिंहमिश्र एताभ्यामन्यः।

सप्तदशशतकस्य प्रथमभागीयो विश्वनाथमिश्रः स्मृतिसारसंग्रहकारः सप्तदशकस्य द्वितीयार्धवर्त्ती दिव्यसिंहमहापात्रः, गदाधरराजगुरुः (अष्टादशशतकीयः) च यथाक्रमं श्राद्धदीपे कालसारे च तं स्मरतः। केषांचन मतेन दिव्यसिंहमहापात्रस्य पूर्ववर्त्तित्वेन विश्वनाथमिश्रतोऽर्वाचीनत्वेन विप्रमिश्रो भवितुं शक्यते। तन्न। यतो हि श्राद्धलक्षणादिविचारगतनिष्पत्तौ विप्रमिश्रः समेषां मतानि चुम्बति। असौ प्रसिद्धनिबन्धकारेषु मिताक्षराकारान् कल्पतरुकारांश्च ससम्मानमुट्टंक्य उत्कलीयशंभुकरवाजपेयि-विद्याकरवाजपेयिप्रभृतीन् प्रामाणिकत्वेनोद्धरति। कृत्यकौमुदीकारं बृहस्पतिमपि स्मरति। किन्तु विश्वनाथमिश्रं न स्मरति। अतः विश्वनाथमिश्रादपि विप्रमिश्रः प्राचीन इति निश्चप्रचम्। मदीयगुरुचरणा विश्वनाथमिश्रस्य कालनिर्णयसमये तं विप्रमिश्रादर्वाचीनत्वेन सिद्धान्तयन्तिस्म। अतः सप्तदशशतकस्य प्रथमार्धवर्त्तिनो विश्वनाथमिश्रात् प्राचीनत्वेन अयं श्राद्धप्रदीपकारो विप्रमिश्रः षोड़शशतकस्य मध्यभागीयः (१५३०-१५५०) इति भवितुं शक्यते।

एतं श्राद्धप्रदीपमतिरिच्य इतरस्य कस्यचनापि ग्रन्थस्य प्रणेतृत्वेन विप्रमिश्रसंबन्धिनी सूचना अद्यावधि अस्माभिर्न प्राप्ता। अत इदानीं श्राद्धप्रदीप एक एव ग्रन्थ विप्रमिश्रस्येति निश्चिनुमः।

---

## भूमिका—४

### विप्रमिश्रकृतश्राद्धप्रदीपस्य परिचयः

श्राद्धप्रदीपस्य परिचयः

श्राद्धप्रदीपः एकः धर्मशास्त्रनिबन्धग्रन्थोऽपि मीमांसाग्रन्थ इति स्पष्टं वक्तुं शक्यते। संस्कृतसाहित्ये यावन्तो विभागा दृश्यन्ते, तेषु धर्मशास्त्रमेकः प्राचीनतमविभागः। तत्र निबन्धग्रन्थविनिर्माणे सर्वसामान्यदृष्ट्या मंगलाचरणादिषु कुत्रचित् देवताविशेषः कीर्त्तितः, कुत्रचित् लेखकः स्वेष्टदेवं स्तौति, कुत्रचित् धर्मशास्त्रे प्राचीननिबन्धॄन् नमस्करोति, किन्तु विप्रमिश्रः अस्मिन् श्राद्धप्रदीपे एतादृशान् सर्वान् मार्गान् विहाय प्रप्रथमतया[१] मीमांसादर्शनसूत्रकारं जैमिनिमुनिं, भाष्यकारं शबरस्वामिनं, वार्त्तिककारं कुमारिलभट्टं प्रणमति। एतेन आत्मनः मीमांसकत्वं द्योतयित्वा ग्रन्थोऽयं मीमांसाप्रधानो धर्मशास्त्रनिबन्ध इति असौ सूचयति। विशेषतः कुमारिलभट्टस्तुत्या स भाट्टसंप्रदायीयो मीमांसक इति प्रकाशितः। तदीयः गुरुः पौण्डरीकाग्निचिन्नृसिंहमिश्रः भाट्टसंप्रदायस्य मीमांसकः। निखिले श्राद्धप्रदीपे श्राद्धविषयकविचारमुपजीव्य मीमांसाशास्त्रस्य तत्त्वानामालोचनावसरे ऊहालोके[२] मन्त्रस्य लक्षणप्रदानप्रसंगे निजगुरोरेकं परिष्कृतमतं तेनादायि। एतदतिरिच्य धर्मशास्त्रस्य कस्यचन परिनिष्ठितविचारस्य परिधौ तस्य मतस्याभावात् गुरुः नृसिंहमिश्रो धर्मशास्त्रविशेषज्ञः, अपितु मीमांसक इति सिद्ध्यति। धर्मशास्त्रीयविषयाणां (श्राद्धविषये) परिष्कारावसरे मीमांसारीत्या क्रियमाणायां चर्च्चायां स्थानेस्थाने नूतनं नूतनं धर्मशास्त्रीयसिद्धान्तं दददपि तत् मीमांसाप्राबल्येन गौणीकृतवान्। विप्रमिश्रो मीमांसकः, श्राद्धप्रदीपश्च एको मीमांसानिबन्धः इति नास्ति संशयः।

---

१। द्रष्टव्यम्—मूलग्रन्थभागे मंगलाचरणम्।

२। द्रष्टव्यः—मूलग्रन्थभागे ऊहालोकः।

श्राद्धप्रदीपोद्धृता ग्रन्था ग्रन्थकाराश्च

श्राद्धप्रदीपोद्धृतानां ग्रन्थानां नामसंकलनकाले भागद्वयमस्माभिः सौकर्याय कल्पितमस्ति। प्रथमभागे वैदिकसंहिताग्रन्थत आरभ्य स्मृति-पुराणोपपुराण-पर्यन्तानामभिधानमुपस्थाप्यते, द्वितीयभागे केवलं नानाकालिकनानादेशीय-निबन्धकाराणां परिगणनं क्रियते। तद्यथा, प्रथमभागे—आपस्तम्बश्रौतसूत्रं, शतपथब्राह्मणं, मनुः, गौतमो, वसिष्ठो, देवलः, सुमन्तुः, प्रचेताः, वैजवापः, ऋष्यश्रृंगः, जाबालिः, गालवः, हारीतः, पैठीनसिः, लौगाक्षिः, लोपाक्षिः, पुलस्त्यः, गर्गः, शातातपः, विष्णुः, कात्यायनः, याज्ञबल्क्यः, वृद्धगौतमः, वृद्धगर्गः, वृद्धशातातपः, लघुहारीतः, स्मृत्यन्तरं, पारस्करगृह्यसूत्रं, गोभिलगृह्यसूत्रं, आश्वलायनगृह्यसूत्रं, जैमिनिः-मीमांसासूत्रकारः, निगमः, ब्रह्मपुराणं, ब्रह्माण्ड-पुराणं, विष्णुपुराणं, मत्स्यपुराणं, मार्कण्डेयपुराणं, वायुपुराणं, स्कन्दपुराणं, विष्णुधर्मोत्तरपुराणं, देवीपुराणं च।

द्वितीयभागे—शबरस्वामी २००-३००, कुमारिलभट्टः ६५०-७५०, पार्थसारथिमिश्रः, कर्काचार्यः, शंकराचार्यः ७८८-८२०, मिताक्षरा-कारो विज्ञानेश्वरः १०८०-११००, कृत्यकल्पतरुकारः लक्ष्मीधरः ११००-११३०, भवदेवः ११००-११५०, अनिरुद्धभट्टः ११५०-११८०, स्मृतिचन्द्रिकाकारो देवणभट्टः १२००-१२२५, चतुर्वर्गचिन्तामणिकारः हेमाद्रिः १२६०-१२७०, श्रीदत्तः १२७५-१३१०, माधवाचार्यः १३००-१३८०, शूलपाणिः १३६५-१४४५, मदनपारिजातकारः १३६०-१३९०, शंभुकरवाजपेयी १२७८-१३०६, विद्या-करवाजपेयी १३३०-१३६०, चण्डेश्वरः १३००-१३७०, वाचस्पतिमिश्रः-भामतीकारः, वासुदेवभाष्यं, कालादर्शः, कृत्यकौमुदीकारः बृहस्पतिः, अनन्तभट्टः, नारायणभट्टः १५१३-१५८०, प्रक्रियाकौमुदीकारः, शुद्धितरंगिणीकारः, नृसिंहमिश्रः, षट्त्रिंशन्मतं, छान्दोगपरिशिष्टं, मैथिलाः, गौड़ाः, दक्षिणात्यनिबन्धः, इति। एतेषामुद्धरणानि मूलभागे मृग्यानि।

श्राद्धप्रदीपं विप्रमिश्रं च स्मरन्तो ग्रन्था ग्रन्थकाराश्च

श्राद्धप्रदीपग्रन्थे यत्र तत्र निजं मतं विप्रमिश्रः घोषयति, प्रायेण तत्परवर्त्ति-भिरुत्कलीयस्मृतिनिबन्धकारैः परं प्रामाणिकदृष्ट्या सम्मानार्थकबहुवचनेन स

उट्टंकितः। एषु परवर्त्तिषु दिव्यसिंहमहापात्रः सर्वेभ्यश्च प्राचीनः, तदीयश्राद्धदीपे स स्मरति। यथा—

१। "उभयोः सांवत्सरिकं कर्त्तव्यमित्यर्थः। अत एवास्मद्देशे निर्विगानं मातृसांवत्सारेकमप्यनुतिष्ठतीति विप्रमिश्राः।"

—श्राद्धदीपः, पृ० ३६, द्रष्टव्यो मूलभागः।

२। विष्णूक्तश्राद्धचतुष्टयं तु नित्यम्। द्वयोस्तन्त्रेणानुष्ठानमिति विप्रमिश्राः

—श्राद्धदीपः, पृ० ६७, द्रष्टव्यो मूलभागः।

३। त्रिभागस्यैवार्धं त्रयोदश्यादिपक्ष इति तत्तु विप्रमिश्रैर्बहुधा दूषितमनुसन्धेयम्। —श्राद्धदीपः, पृ० ७७, द्रष्टव्यो मूलभागः।

४। विप्रमिश्रास्तु यावज्जीवं कृतामिषवर्जनसंकल्पब्राह्मणनिमन्त्रणे "हविष्यान्नेन वै मासं पायसेन च वत्सरम्", इति योगीश्वरवचनात् कांस्यभोजिन्यायेन यजमानेन निरामिषमेव श्राद्धं कर्त्तव्यम्। ब्रह्मचारित्रिदण्डिसन्न्यास्यामन्त्रणे तु 'ब्राह्मणः काममश्नीयाच्छ्राद्धे व्रतमपीडयन्', इति वचनात् तेन न भक्षणीयं मधु मांसं चेत्याहुः।"

—श्राद्धदीपः, पृ० १२५, द्रष्टव्यो मूलभागः।

५। "ततोऽमावास्यादौ मांसं न भक्षणीयमिति शूलपाणिनोक्तं तद्दूषितं विप्रमिश्रैः।" —श्राद्धदीपः, पृ० १३२, द्रष्टव्यो मूलभागः।

६। विप्रमिश्रैस्तु विहितनिरामिषभोजनाय कर्त्तृसंस्कारार्थस्य उपयोक्ष्यमाणसंस्कारस्य श्राद्धशेषभक्षणस्य उपयुक्तसंस्कारस्य विरोधे ···

—श्राद्धदीपः, पृ० १३३, द्रष्टव्यो मूलभागः।

उपरि लिखितेषु निर्दिष्टेषु स्थानेषु विप्रमिश्रस्य नामोच्चारणपूर्वकमुट्टंक्य केवलं तदीयसिद्धान्तान् केषुचित् स्थानेषु विवृतं दिव्यसिंहमहापात्रेण, तदुपरिष्टात् वक्ष्यते।

गदाधरराजगुरुः, 'कालसारे' विप्रमिश्रं स्मरति। यत्र यत्र तन्मतेन सह निजमतसम्मेलो न भवति, तत्र तत्र बहुवचनेन सम्मानपूर्वकं खण्डयति। तद्यथा—

१। "अत्र विप्रमिश्रै 'ऋते समाः' इत्युभयत्रापि याजयित्वा अस्मद्देशे निर्विगानं मातृसांवत्सरिकानुष्ठानाद्यसंबन्धव्यवायाभावादनुषंगाधिकरणन्यायसंभवादुभयोः संवत्सरे उभयोः सांवत्सरिकं कार्यमिति यल्लिखितं तन्न विचारसहम् इत्यस्मत्पितृचरणाः। —कालसारः, पृ० २३८, द्रष्टव्यो मूलभागः।

२। अत एवात्र विप्रमिश्रैः "पित्रादित्रिके जीवति न नान्दीमुखश्राद्धं, केवलं मातृपूजामात्रमिति यल्लिखितं तद्दूरापास्तमेव।"

—कालसारः, पृ० ३२४, द्रष्टव्यो मूलभागः।

३। "यत्तु विप्रमिश्रैः पुराणस्मृत्यपेक्षया गृह्यसूत्रस्य बलवत्वात् अन्वष्टकासु सर्वासां पार्श्वसक्थिसवाभ्यां परिवृते पिण्डपितृयज्ञवत्, स्त्रीभ्यश्चोपसेचनं कर्षूषु इति वचनात् एव कर्त्तव्यम् अन्वष्टकाकर्मणि तथादर्शनात् इति। तन्न रुचिरम्।" —कालसारः, पृ० ३५८-५९, द्रष्टव्यो मूलभागः।

४। तस्माद्विप्रमिश्रैरेतच्छ्राद्धचतुष्कं पृथक्काम्यं च तेन धूरिरोचनयोर्देवतात्वमिति यल्लिखितं तत्सर्वं पूतिकुष्माण्डायितमिति मन्तव्यम्।

—कालसारः, पृ० ३६०, द्रष्टव्यो मूलभागः।

५। यद् विप्रमिश्रैरुक्तं मातृसांवत्सरिकं तु तद्दिने पाकस्य तन्त्रत्वेऽपि एकोद्दिष्टिभिरमावास्याश्राद्धानन्तरं कार्यम्। —कालसारः, पृ० ३९, द्र० मूलभागः।

महामहोपाध्यायकृष्णमिश्रः—अष्टादशशतकस्य द्वितीयार्धवर्त्ती 'कालसर्वस्व' ग्रन्थे विप्रमिश्रं स्मरति। तद्यथा—

१। श्राद्धस्य दानरूपत्वादिति विप्रमिश्राः। —उ० रा० सं० मा० १७ (क)

२। कालनिर्णयप्रदीपिकायां सपुत्रापुत्रसाधारण्येन पंचदशवर्षोत्तर एव कालो निरूपितस्तत् सर्वं शंभुकर-विप्रमिश्र-रघुनन्दनादिभिरलिखनाच्छिष्टैर्नाद्रियते। —उ० रा० सं० मा० २२ (क)

३। अन्यथा पितृमातृजीवनेऽपि श्राद्धाभावप्रसंगः। अत एव नारायणविप्रमिश्रादिभिरयं प्रकारो नोपन्यस्तः। तत्रैव।

रघुनाथदासः स्वलिखितश्राद्धनिर्णये ग्रन्थे श्राद्धस्य स्वरूप-लक्षणविवरणावसरे यागदानरूपतेति विप्रमिश्रकृत सिद्धान्तं प्रत्यपादयत्।

कृष्णमिश्र-रघुनाथदासयोः ग्रन्थद्वयमप्रकाशितम्। मातृकारूपेणेदं उत्कलराज्यसंग्रहालयीय ताड़पत्रसंरक्षणागारे सुरक्षितमस्ति।

पण्डितसर्वस्वकारोऽपि विप्रमिश्रं बहुवचनेन स्मरति। तद्यथा—

१। त्रिश्वेदेवानां सामान्यत्वात् मातृश्राद्धनित्ययोर्योगे मातृश्राद्धं पूर्वमाचरणीयम्। कालभेदस्य पूर्वतो लाभात्। एवं काम्येष्वपि कार्यं विश्वदेवभेदान् इति विप्रमिश्राः।

पण्डितसर्वस्वम्, पृ० २१२, द्रष्टव्यो मूलभागः।

एतदतिरिच्य अन्येषु स्थानेषु विप्रमिश्रसिद्धान्तानाधृत्य परवर्त्तिग्रन्थकाराः प्रातिस्विकनिबन्धेषु विचारितवन्तः। तत्सर्वं रश्मौ मृग्यम्।

श्राद्धप्रदीपस्य मातृका

निखिलेषु उत्कलखण्डेषु श्राद्धप्रदीपस्य मातृकाद्वयमुपलभ्यते। अत्र कर्मणि तदर्थं प्रयासं स्वीकृत्य उत्कलराज्यसंग्रहालयात् एका मातृका अपरा च पुरीस्थसदाशिवकेन्द्रीय-संस्कृतविद्यापीठस्य तालपत्रमातृकासंरक्षणागारात् आकलिता। उभयोः मातृकयोः लिपिः (उत्कला) ओड़िआ। उत्कलराज्य-संग्रहालये भुवनेश्वरस्थे या मातृकोपलब्धा,[३] सा कर्गजपत्रेण लिखिता वर्त्तते। तस्याः पत्रसंख्या संभूय ५३। सा मातृका अस्मद्गुरुचरणेभ्यः पण्डितकुलमणि-मिश्रशर्मभ्यः संग्रहालयकर्त्तृपक्षैरधिगता। गुरुचरणानां स्वहस्ताक्षरैस्तस्याः प्रतिलिपिः कृता। चतुरंगपत्रिकायां तैरेवोद्घोषितं प्रायेण पंचत्रिंशद्वर्षेभ्यः पूर्वं यत् तेषां सकाशे विप्रमिश्रकृतस्य श्राद्धप्रदीपस्य एका मातृका आसीदिति। एतां वार्त्तामधिगम्य तदानीन्तनसंरक्षणाधिकारिभिश्च श्रीमद्भिः परमैतिहासिकैः केदारनाथमहापात्रमहाभागैः गुरुचरणानां समीपात् तां मातृकां नीत्वा उत्कल-राज्यसंग्रहालयस्य तालपत्रसंरक्षणागारे संस्थापिता। सा मातृका एतत्सन्दर्भ-विनिर्माणे प्रप्रथमतया स्वीकृताऽस्माभिः। द्वितीयमातृकात्वेन पुरीस्थ-सं० के० सं० विद्यापीठादधिगता सा तालपत्ररूपिणी अत्यन्तं जीर्णा, कीटदष्टा, इत्थं प्रत्यक्षरं किमपि किमपि दन्तसंयोगजनितं गुरुतरमाक्रमणं कीटशिरोमणि-भिर्विहितम्। तथापि अस्माभिः पाठसम्मेलनार्थं प्रयासं स्वीकृत्य उभयोः मातृकयोः अधिगमो विहितः।

मातृकाद्वये पुष्पिकाविचारः

प्रथममातृकायां ग्रन्थस्य प्रथमालोके यथा मंगलाचरणादारभ्य विषयसंघटना आरब्धा, तथा द्वितीयमातृकायामपि। प्रत्यालोकं ग्रन्थकृता मंगलाचरणं विहितमपि तृतीयाध्याये अतिदेशालोके उभयत्र मंगलाचरणाभावो लक्षितः। अन्तिमाध्याये तन्त्रालोके अन्तिमा पुष्पिका उभयत्र नास्ति। प्रथममातृकायाम् एतावत्स्वरूपं दृष्ट्वा ग्रन्थोऽसमाप्त इति मतिरासीत्, द्वितीयमातृकायां तद्वत्

३। द्रष्टव्या मातृका M. S २४०

स्वरूपं वीक्ष्य सा मतिः कियत्परिमाणेन शान्ता । द्वितीयमातृकायाम् अन्तिमभागे ग्रन्थसमाप्तिचिह्नम्,[४] इति शब्दश्च विद्यते । आपाततः तत्रैव ग्रन्थसमाप्तिर्जातेति मानसपटले पाठकानां भावः तिष्ठति । वस्तुगत्यापि तथाऽस्ति । अंगप्रधाननिर्णयविषयादारभ्य तन्त्रालोकस्य प्रसंगविचारात् परं निखिलमीमांसादर्शनगतविचारे आकलिते पाठकस्य हृदये अवश्यं सिद्धान्तः संभविष्यति यत अत्रैव ग्रन्थस्य समाप्तिरिति । सपिण्डीकरणं विचार्य तत्रैव समाप्तिर्विहिता ग्रन्थकारेण । समाप्तिकाले 'समाप्तोऽयं ग्रन्थः' अथवा तद्द्योतकवाक्यांशानां विन्यासेन यथा समाप्तिपरिस्फुटनं भवति, तथाऽत्र मातृकाद्वयेऽभावात् शंक्यतेऽस्माभिः यत् तादृशं किमपि वाक्यांशं विरचय्य अन्तिमे स्वकृतश्लोकराशीन् वा समलंकृत्य ग्रन्थकृता ग्रन्थसमाप्तिर्विहिता, किन्तु कालपरंपरायां स विषयो नष्टः । गुरुचरणैः यस्याः तालपत्रमातृकाया एतस्य प्रतिलिपिविधानं कृतं, तत्र, किंच विद्यापीठमातृकायां, प्रायेण एकं पुटं नष्टमिति निश्चीयते । अनेन ग्रन्थस्य विषयविन्यासगतहानिर्न भवति, किन्तु पुर्णांगसुन्दरता-सांगोपांगतासंपादनार्थं तद्भागस्य आवश्यकतया अप्राप्तिहेतोः चेखिद्यते चेतः ।

भारतवर्षस्य विभिन्न तालपत्रमातृकासंरक्षणागाराणां कृते भूरीणि पत्राणि दत्वा समस्तेभ्यः निराशपूर्णां वार्त्तामधिगम्य[५] मनसि एवं स्थिरीकृतं यत् अन्तिमपुष्पिकाभागो न लभ्येतेति । विशेषतः माड्रासप्रान्तीय आडयारलाईब्रेरीतः[६] एकं पत्रं मया अधिगत्य तत्रेयं मातृका लब्धुं शक्येतेति ज्ञातम् । तदानीं संयाचनं विहितमपि उत्कलाक्षरैर्निबद्धा सुस्था दिव्यसिंहमहापात्रप्रणीतश्राद्धदीपग्रन्थस्य मातृका प्राप्ता । पुनरपि पत्रविनिमयेन लाईब्रेरीतो[७] ज्ञातं यत् विप्रमिश्रकृतस्य श्राद्धप्रदीपस्य मातृका तत्र नास्तीति । श्राद्धदीपं ते श्राद्धप्रदीपं मन्यमाना आसन् । 'कालोह्ययं निरवधिः विपुला च पृथ्वी' इति

४ । द्रष्टव्यम्—मातृकाचित्रम् ।

५ । द्रष्टव्याणि पत्राणि—सं०सं०वि० वाराणसी—L/774/79/5-7-79, जातीयपुस्तकागारः, कलिकता-622/20 Sept. 1978, डेकानकलेज—714/L/5610/20-9-78, सरस्वतीमहललाईब्रेरी-ताञ्जोर—1344-79/26-10-79

६ । द्रष्टव्यः पत्रांकः ( नास्ति ) १६/६/७८

७ । द्रष्टव्यः पत्रांकः ६/३/७६

भवभूतिवाग्वैभवेन कुत्रचित् पृथ्वीप्रविभागे कुत्रचित् वा कालप्रघटके इयं मातृका स्यादिति भगवती सरस्वती भगवान् जगन्नाथश्च ज्ञातुं पारयति। नो वा मादृशोजनः।

श्राद्धप्रदीपस्य प्रविभागाः

मीमांसारीत्या श्राद्धविषयक विचारपूर्णतथ्यानां परिज्ञानार्थं विप्रमिश्रः स्वग्रन्थस्य नाम श्राद्धप्रदीपं कृत्वा तत्र सर्वं सन्निवेशितवान्। ग्रन्थेऽस्मिन् षट् अध्यायास्तेन कल्पिताः। अध्यायानां संज्ञा आलोकपदेन व्यपदिष्टा। एवं रीत्या प्रत्यालोकं मीमांसादर्शनस्य[८] अध्यायानां विषयान् गृहीत्वा नामकरणमपि कृतम्—

प्रथमाध्यायः—प्रथमालोकः ( अंगप्रधाननिर्णयविषयकः )
द्वितीयाध्यायः—क्रमालोकः
तृतीयाध्यायः—अतिदेशालोकः
चतुर्थाध्यायः—ऊहालोकः
पंचमाध्यायः—बाधाभ्युच्चयालोकः
षष्ठाध्यायः—तन्त्रालोकः

श्राद्धप्रदीपे मीमांसाया विचारः

डा० मण्डनमिश्राचार्येण स्वकीय मीमांसादर्शनाख्यपुस्तके मीमांसादर्शनस्य प्रत्यध्यायगतविषयाणां पुंखानुपुंखविचार उपस्थापितः।[९] दर्शनेऽस्मिन्

---

८। धर्मो द्वादशलक्षण्या व्युत्पाद्यस्तत्र लक्षणैः।
प्रमाणभेदशेषत्वप्रयुक्तिक्रमसंज्ञकाः॥
अधिकारोऽतिदेशश्च सामान्येन विशेषतः।
ऊहो बाधश्च तन्त्रं च प्रसंगश्चोदिताः क्रमात्॥ इति

प्रत्यध्यायं विषया अस्मादित्थं ज्ञायते यथा—१ अध्याये—प्रमाणनिरूपणम्, २ अध्याये—कर्मभेदविचारः, ३ अध्याये—शेष-अंगविचारः, ४ अध्याये—क्रत्वर्थपुरुषार्थदृष्ट्या शेषविचारः, ५ अध्याये—क्रमविचारः, ६ अध्याये—अधिकारविचारः, ७ अध्याये—अतिदेशसामान्यविचारः, ८ अध्याये—विशेषातिदेशविचारः, ९ अध्याये—ऊहविचारः, १० अध्याये—बाधविचारः, ११ अध्याये—तन्त्रविचारः, १२ अध्याये—प्रसंगविचारः।
—जै०न्या०वि० 1/1/1/11–12

९। द्रष्टव्यः मीमांसादर्शन (हिन्दी) डा० मण्डनमिश्रः

ज्ञानकाण्डस्य विचारः कर्मकाण्डस्य विचारोऽस्ति। तत्र ज्ञानकाण्डे ईश्वरः, वेदस्यापौरुषेयत्वं, शब्दखण्डम् (शब्दस्य महत्त्वं, शब्दस्य स्वरूपं, शब्दार्थयोः सम्बन्धः, पदम्, अर्थः, शब्दार्थौ जातिः अथवा व्यक्तिः) आत्मा (शरीरात्मवादः, विज्ञानात्मवादः, इन्द्रियनिरूपणं), सृष्टिप्रपंचः, मोक्षः, स्वतः प्रामाण्यवादः (परिभाषा, प्रकारः, प्रामाण्यं स्वतः, अप्रामाण्यं परतः इत्यादिः) प्रमाणपरिच्छेदः (प्रमाणस्य लक्षणं, तस्य संगतिः प्रमाणस्यावश्यकता महत्त्वं च, प्रमाणस्य परिगणना, प्रत्यक्षता विवेचनं प्रत्यक्षस्य भेदः, सविकल्पकस्य खण्डनं, सविकल्पस्य स्थापना, निर्विकल्पस्य खण्डनं, निर्विकल्पस्य स्थापना, निर्विकल्पकस्य केवलं चैतन्यग्राहकत्वं, निर्विकल्पकस्य भेदग्राहकता, निर्विकल्पकस्य व्यक्तिमात्रग्राहकता, निर्विकल्पक-सविकल्पकयोर्मौलिकोभेदः, संनिकर्षः, अनुमानं, व्याप्तिः, हेतुत्रयं, अनुमानस्य भेदः, हेत्वाभासः शब्दस्य धाराद्वयं, तिस्रः सहायकवृत्तयः, तत्रसंबध-पदानि, वाक्यस्य भेदद्वयं, उपमानम्, अर्थापत्तिः, अनुपलब्धिः), पदार्थनिरूपणम्, (द्रव्यं, गुणः, कर्म, सामान्यं, शक्तिः, अभावः) इत्येते विषयाश्चर्चिताः सन्ति।

कर्मकाण्डे धर्मस्य लक्षणं प्रमाणं च (प्रमाणं, विधिः, अर्थवादः, मन्त्रः, नामधेयः, स्मृतिः, शिष्टाचारः), भावना (अपूर्वम्), कर्मभेदः, अंगत्वं, प्रयोगः, क्रमः, अधिकारः, अतिदेशः, ऊहः, बाधः, तन्त्रं, प्रसंगः इत्येते विषयाश्चर्चिताः।

मीमांसादर्शनस्य ज्ञानकाण्डापेक्षया कर्मकाण्डेन सह धर्मशास्त्रस्य सम्बन्धसत्वात् श्राद्धविषयक विचारकारणतया प्राकरणिको ग्रन्थकारः कर्मकाण्डमुपजीव्य विषयान् प्रस्तौति। श्राद्धस्य कर्मस्वरूपत्वं नानाविधयुक्तिप्रघटकप्रदर्शनमुखेन शास्त्रीय-पुरोवाक्यविन्यासेन च प्रतिपाद्य इतरस्मात् कर्मणः तस्य भेदं स्वतन्त्रतया अंगीकृत्य ग्रन्थकारः श्राद्धप्रदीपं विरचयति। स्वीकृते स्वतन्त्रे श्राद्धाख्ये कर्मणि, तत्र किं मुख्यं, किं वा अंगं, कर्मणां बाहुल्ये कः क्रमः, समानधर्मककर्मणां प्राप्तौ प्रकृति-कर्मणां विकृतिषु कथमतिदेशो भवति, आवश्यकस्थलेषु कथमूहः, अनावश्यकस्थले कथं बाधः, बहूनां कर्मणां युगपत् एककर्त्तृकसंपाद्यतया एकस्मिन्नधिकरणे प्राप्तौ तेषां तन्त्रता, प्रसंगतः प्राप्तानां कर्मणामनुष्ठानम् इत्येते विषयाः क्रमेण तत्र विमृष्टाः। अतः मीमांसादर्शनस्य तृतीयाध्यायगतो अंगविचारः ग्रन्थेऽस्मिन् प्रथमालोके, पंचमाध्यायगतः क्रमविचारः क्रमालोके, सप्तमाध्यायगतो-ऽतिदेशविचारः अतिदेशालोके, नवमाध्यायगत ऊहविचारः ऊहालोके, दशमाध्याय-गतो बाधविचारः बाधाभ्युच्चयालोके, एकादशाध्यायगतः तन्त्रविचारः तन्त्रालोके

च विचारिताः। चतुर्थाध्यायगतक्रत्वर्थपुरुषार्थयोऽत्र प्रकरणाभावान्, षष्ठाध्यायगताधिकारिनिर्णयस्य तथैव सत्वात्, अष्टमाध्यायविषयकस्य विशेषातिदेशविचारस्य अतिदेशालोकेऽन्तर्भावितत्वात्, द्वादशाध्यायवर्णितप्रसंगविचारस्य तन्त्रालोके क्रोडीकृतत्वात् ४, ६, ८, १२ अध्यायानां विषयाः स्वतन्त्रतया न विन्यस्ताः, न वा तन्नाम्ना आलोकाः विरचिताः ग्रन्थकृता।

अमी विषया मूलग्रन्थभागे मीमांसापद्धत्या ग्रन्थकृता आलोचिताः। ततकाठिन्यनिवारणाय ग्रन्थस्य निखिलविषयाः मत्कृतायां 'रश्मि' नामिकायां टिप्पण्यां तत्रैव संयोजिताः। पिष्टपेषणभिया पुनश्च तेषां समीक्षाऽत्र नोपस्थाप्यते। विद्वद्भिः शास्त्रमार्गानुसरिभिः प्रयोजनक्षेत्रे तत्रानुसन्धेयानि।

श्राद्धप्रदीपे उद्धृतानि मीमांसाधिकरणानि

मीमांसादर्शने जैमिनिकृतसूत्राणि सम्भूय २७४५, अधिकरणानि ९०७ एतेषु वक्ष्यमाणानि अधिकरणानि ग्रन्थेऽस्मिन्नुट्टंकितानि प्रत्यालोकं परिगण्यन्ते। यथा—

अंगप्रधाननिर्णयालोके—

| | | |
|---|---|---|
| १। | यागहोमस्वरूपनिरूपणाधिकरणम् | ४।२।१२ |
| २। | वैदिकाश्वप्रतिग्रहे इष्टिकर्त्तव्यताधिकरणम् | ३।४।१६ |
| ३। | प्रयाजादिधर्माणामपूर्वप्रयुक्ताधिकरणम् | ७।१। १ |
| ४। | फलचमसस्येज्याविकारताधिकरणम् | ३।५।१९ |
| ५। | दातुर्वारुणीष्ट्यधिकरणम् | ३।४।१५ |

क्रमालोके—

| | | |
|---|---|---|
| १। | क्रमनिरूपणाधिकरणे श्रुतिबलीयस्त्वाधिकरणम् | ५।१। १ |
| २। | क्रमस्य क्वचित्पाठानुसारिताधिकरणम् | ५।१। ४ |
| ३। | क्रमस्य क्वचित् स्थानानुसारिताधिकरणम् | ५।१। ६ |
| ४। | हेतुमन्निगदाधिकरणम् | १।२। २ |
| ५। | अंजनादेः परिव्याणान्तानुसमयाधिकरणम् | ५।२। ५ |
| ६। | मासाग्निहोत्रादीनां क्रत्वन्तरताधिकरणम् | २।३।११ |

अतिदेशालोके—



ऊहालोके—

बाधाभ्युच्चयालोके—



तन्त्रालोके—

## तुलनात्मकदृष्ट्या श्राद्धप्रदीपस्य विश्लेषणम्

### प्रथमालोकगतमतवैषम्यनिराकरणम्

मीमांसारीत्या श्राद्धविषयं विविच्य स्वकीयसिद्धान्तराशीन् प्रकाशयितुं नानाप्रान्तीयमतानि यदि वा ग्रन्थकारः खण्डयति, तथापि शूलपाणिकृतस्य श्राद्धविवेकग्रन्थस्य सिद्धान्तान् पूर्वपक्षरूपेण संस्थाप्य तानेव विशेषतो दूषयति। एतस्मिन् स्थले यत्र यत्र गौड़-मैथिलमतानि विरोधमापन्नानि भवन्ति, तत्र तत्र शूलपाणिसिद्धान्तोपरि यादृशः कटाक्षः ग्रन्थकृतो दृश्यते, तथैव तेषामुपर्यपि। 'रश्मि' टिप्पण्यां एतस्मिन् विषये भूरिणि विचारे कृते मया, इदानीं ग्रन्थान्तरैर्यथास्य तुलना भवितुं शक्येत तथा क्रियते।

### धर्मशास्त्रनिबन्धेषु श्राद्धलक्षणम

प्रप्रथमतया आपस्तम्बः[१] श्राद्धस्य स्वरूपं कर्मत्वेन उद्घोष्य यागस्य अधिकरणत्वेन विप्रस्य स्वीकारे पितृप्रतिनिधिरूपतया तस्य चोक्तौ द्रव्यदेवतयोरेकाधिकरणोपयोगितया पितरो देवता भवन्ति, तदुद्देशेन द्रव्याणि दीयन्ते इति उक्तवान्। किन्तु नैतत् प्रधानं कर्म। ब्राह्मणस्य प्रति[२]पत्तिस्थानत्वेनोक्तत्वात्। फलप्राप्तिनिमित्तं यागः[३] करणभूतः, स विधिमुखेनानुवादमुखेन वा कीर्त्तितोऽपि। दानव्यापारो यागे सिद्ध्यति। देवतोद्देशेन द्रव्यत्यागो यागः। अग्नौ प्रक्षेपविशिष्टात्मको यागः होमः। मनसि दानार्थमुत्पन्नो यो भावो देयद्रव्यमाश्रित्य

---

१। अथैतन्मनुः श्राद्धशब्दं कर्म प्रोवाच। प्रजानिःश्रेयसार्थं च। तत्र पितरो देवता ब्राह्मणस्त्वाहवनीयार्थे।

—आप० ध० सू० २ : १६ : १-४

२। आकीर्णकरस्य द्रव्यस्य विहितदेशे प्रक्षेपः प्रतिपत्तिः। —मी० प०

३। विधाने वानुवादे वा यागः करणमिष्यते।

प्रतिग्रहीतारं लक्ष्यीकृतो भवति, स भवति मुख्यः। साक्षात् अग्नौ यः प्रक्षेपो भवति, स प्रतिपत्तिकर्मरूपः[४] संस्कारः। एतावता आपस्तम्बस्वरसं गृहीत्वा श्रद्धया पितृुद्देशेन क्रियमाणं श्राद्धाख्यं कर्म दानस्वरूपतां यागस्वरूपतां च प्राप्नोति। इति विप्रमिश्रस्य आशयः।

श्रद्धया क्रियमाणं कर्म श्राद्धमिति श्राद्धशब्दस्य यौगिकोऽर्थः[५] इति केचित्। श्रद्धामूलतया बहूनां कर्मणामनुष्ठानं शक्यत्वे पितृुद्देश्येन श्रद्धया द्रव्यत्यागरूपं

४। संस्कारो द्विविधः। उपयोक्ष्यमाणः संस्कारः उपयुक्तसंस्कारश्चेति। प्रधानकर्मणि विनियोगार्थं निश्चितस्य द्रव्यस्य प्रधानकर्मप्रारम्भात् पूर्वं संस्कारः क्रियते स उपयोक्ष्यमाणः संस्कारः। यथा—व्रीहीन् प्रोक्षति। यागेव्यवहारानन्तरं तस्य यः संस्कारः स उपयुक्त संस्कारः। अस्य नामान्तरं प्रतिपत्तिसंस्कारश्चेति। यथा—कृष्णविषाणप्राशनादिः। प्रकृतौ पितृुद्देशेन श्रद्धया दानस्य मानसो व्यापारो मुख्यः। तस्य प्रतिपत्तिः पितृप्रतिनिधिकाय ब्राह्मणाय मानसदत्तपदार्थस्य समर्पणात्मक-प्रक्षेपः। तदर्थं ब्राह्मणः आहवनीयाग्निस्थानभूतः। इति।

५। यौगिकशब्दस्यार्थविषये कालमाधवे माधवाचार्येण शिवरात्रिपदपदार्थ-विषयकविमर्शकाले चर्चा कृता —तदित्थम्, पृ० २३१-२३२

संस्कारजातियोगेषु कं ब्रूते प्रोक्षणीरिति।
संस्कारं सार्वभौमत्वाज्जातिमुद्वेजनोक्तितः॥
अन्यानाश्रयतो नाद्यो न जातिः कल्प्यशक्तितः।
यौगिकः क्लृप्तशक्तित्वात् क्लृप्तिर्व्याकरणे स्थिता॥

अयमर्थः। दर्शपूर्णमासांगतया श्रूयते—प्राक्षणीरासादयति इति। तत्र संशयः, किमयं प्राक्षणीशब्दोऽभिमन्त्रणासादनाद्युदकसंस्कारं ब्रूते, किं वा जलावान्तरजातिविशेषम्, आहोस्वित् प्रोक्ष्यन्ते पात्राण्याभिः इति योगम्। तत्र संस्कारं ब्रूते इति तावत्प्राप्तम्। कुतः सार्वभौमत्त्वात्। सर्वेषु हि संस्कारविधिवाक्यादिप्रदेशेषु प्राक्षणीशब्दः श्रूयते—'प्रोक्षणीरासादयेध्मा-बर्हिरुपसादय'—इति प्रैषवाक्ये प्रयोगः। 'प्रोक्षणीरासादयति' इति विधिवाक्ये। एवमभिमन्त्रणादिवाक्यान्यप्युदाहरणीयानि। तस्मात् संस्कारं ब्रूते—इत्येकः पक्षः। जातिं ब्रूते इति पक्षान्तरम्। लोके हि जलक्रीड़ासु 'प्रोक्षणीभिरुद्वेजिताः स्मः' इत्युदकजातौ प्रयोगो दृश्यते। तत्र न तावत् संस्कारं ब्रूते—इत्याद्यः पक्ष उपपद्यते। कुतः? अन्योन्या-श्रयत्वात्। नापि जातिं ब्रूते। इति द्वितीयः पक्षो युक्तः। उदकजातौ प्रोक्षणीशब्दशक्तेर्व्यवहारे पूर्वक्लृप्तत्वेनातः परं शक्तेः कल्पनीयत्व-प्रसंगात्। न च योगेऽपि शक्तिः कल्पनीया व्याकरणे नैव क्लृप्तत्वात्।

कर्म श्राद्धमिति पङ्कजादिशब्दवद् योगरूढोऽयं[6] श्राद्धशब्द इति आस्माकीनो राद्धान्तपक्षः। वीरमित्रोदयेऽपीत्थं[7] 'प्रार्थिता प्रेतकृत्यैषा' (मनुः[8] ३।१२७) इति मनुना कृतिसाध्यत्वेन श्राद्धस्य कर्मरूपत्वमुपदिष्टम्। तद्भावं गृहीत्वाऽऽपस्तम्बेन श्राद्धशब्दः कर्मत्वेनोक्तः। कर्मसामान्यस्य श्रुतिस्मृतिविहितत्वयोग्यतया धर्मत्वे[9]

---

व्याकरणे हि उक्ष सेचने इत्यस्माद्धातोः करणे ल्युट् प्रत्ययेन शब्दो व्युत्पादितः। तथा सति प्रकर्षेणोक्षते अनेन इति योगेन सेचनसाधनमुदकादिकं सर्वं प्रोक्षणशब्दवाच्यं संपद्यते। प्रकृते तु स्त्रीशब्दवाच्यानामपां सेचने साधनत्वाद् वचनस्य प्रोक्षणशब्दस्य ङीप्प्रत्ययान्तत्वेन प्रोक्षणीरिति द्वितीयाबहुवचनान्तः शब्दो निष्पद्यते। तद्वत् अयं श्राद्धशब्दः यौगिकः।

६। योगरूढशब्दविषये तत्रैव कालमाधवे शिवरात्रिशब्दविचारे उपन्यासः कृतो माधवाचार्येण। —तदित्थम्, पृ० २३५

निर्मन्थो यौगिको योगरूढो वा योगभासनात्।
यौगिकोऽचिरजातेऽग्नौ नियतेर्योगरूढिभाक्॥

अस्यायमर्थः। इष्टकाचयने श्रूयते—'निर्मन्थ्येनेष्टकाः पचन्ति' इति। तत्र संशयः, किमयं निर्मन्थ्यशब्दो यौगिकः किं वा योगरूढः? इति। निशेषेण मथ्यते इति योगस्य प्रतीयमानत्वात् प्रोक्षणीन्यायेन यौगिकः इति पूर्वपक्षः। अत्र द्वावग्नी विद्येते चिरनिर्मथितोऽचिरनिर्मथितश्च। चयनं प्रकम्य उखां निर्माय तस्यामुखायां कंचित्कालं धारणाय योऽग्निर्निर्मथ्यते, सोऽचिरनिर्मथितः। तेनेष्टकाः पच्यन्ते, तस्यैव प्रत्यासन्नत्वात्। तथा च मथनस्याग्निद्वितयसाधारण्येऽप्यचिरनिर्मथितमग्निं नियन्तुं रूढिराश्रयणीया। यथा वा 'नावनीतं घृतम्' इत्यत्र नवनीतजन्यत्वयोगस्य चिराचिरयोरुभयोः साधारण्येऽपि नूतन एव घृते नावनीतशब्दो लोके प्रसिद्धे नियम्यते। तद्वदत्राप्यवगन्तव्यम्। तथा च सति प्रतीयमानयोगस्यापरिहृतत्वात् नित्यत्वे रूढिस्वीकारच्च निर्मन्थः इति शब्दान्तः। तद्वदयं श्राद्धशब्दः योगरूढः।

७। द्र०, वीरमित्रोदयः श्राद्धप्रकाशे, पृ० ७
द्र०, एवं च कर्मनामत्वे सिद्धे

"श्रद्धया दीयते यस्मात्तेन श्राद्धं निगद्यते।"

इति बृहस्पतिवाक्यं श्राद्धशब्दस्य योगप्रदर्शनार्थम्। तेनान्यत्र प्रयोगाभावद्योगवशाच्च योगरूढोऽयं श्राद्धशब्द इति।

८। प्रार्थिता प्रेतकृत्यैषा पित्र्यं नाम विधुक्षये।
तस्मिन् युक्तस्यैति नित्यं प्रेतकृत्यैव लौकिकी॥ मनुः ३।१२७

९। श्रुतिस्मृतिविहितो धर्मः, वसिष्ठ ध० सू० १।४

श्राद्धस्य स्मृतिविहित-पंचमहायज्ञान्तर्गतपितृयज्ञत्वेन[१०] नित्यकर्मत्वे धर्मत्व-माचक्षते। यज्ञस्य[११] श्रेष्ठतमत्वेनोक्तौ पितृयज्ञत्वेनाख्यातस्य श्राद्धस्य यज्ञरूपत्वं सिद्ध्यति। यज्ञ—सव-अध्वरादिशब्दाः यागपर्यायान्तर्भूताः।[१२] देवतोद्देशेन द्रव्यत्यागरूपस्य यागस्य द्रव्यदेवतयोरंगत्वात् श्राद्धाख्ये यागे पितृदेवतोद्देशेन पिण्डादिद्रव्याणां त्याग इतिकर्त्तव्यता[१३]साध्या कृतिः। किन्तु स्मृतिमन्दाकिनी-प्रवाहपतिता नानादेशीयाचारमूलकस्मृतिनिबन्धारो मन्वादिमूलस्मृतीनामविरो-धतया प्रातिस्विकमतप्रदानपूर्वकं किंचित् पृथक्तया श्राद्धस्य लक्षणं प्रकट्यकार्षुः। तत्र पितुद्देश्यत्वस्य सर्वसामान्यतया निरपेक्षिणी स्रोतस्विनीव समेषां वाक्प्रसृतिः। विश्वामित्र[१४]वचनजातेन प्रतिपादिते दैविकश्राद्धे[१५] देवतोद्देशेन हविर्द्रव्यत्याग-रूपस्य सत्वात् पितुद्देश्यकत्वविशिष्टश्राद्धलक्षणस्याघटकतया शिरःसारितो दोषशकुनः ब्रह्माण्डपुराण[१६]वचनव्याधेन पितृदेवतयोः परस्परपितृत्वावगमात्मक-तीक्ष्णनाराचेन शातित इति सर्वमकलंकम्।[१७]

मिताक्षराकारः[१८] विज्ञानेश्वराचार्यः सामान्यतया भोज्यद्रव्याणां श्रद्धापूर्वक-मर्पणं श्राद्धमिति प्राकाशयत्। अनेन कस्मादारभ्य किं पर्यन्तं श्राद्धस्य

---

१०। पितृयज्ञस्तु तर्पणम्।

११। यशो वै श्रेष्ठतमं कर्म, शु० य० वे० महीधरभाष्यधृतश्रुतिः १।१

१२। यज्ञःसवोऽध्वरो यागः सजतन्तुर्मखः क्रतुः। अ० को० २।७।१३

१३। कथंभावाकांक्षापूरकत्वमितिकर्त्तव्यतात्वम्। मी० प०

१४। द्रष्टव्या 'रश्मिः' प्रथमालोके पा० टी०, ६

१५। देवानुद्दिश्य यच्छ्राद्धं तत्तु दैविकमुच्यते।
हविष्येण विशिष्टेन सप्तम्यादिषु यत्नतः॥
—भविष्यपुराणम्-मन्वर्थ मु० धृतं ३।२५४

१६। इत्येते पितरो जाता देवाश्च पितरः पुनः।
अन्योन्यपितरो ह्येते देवाश्च पितरश्चह॥
ब्रह्मपु०, २।३।६।३८

१७। अधिकं तु द्रष्टव्यो मदीयो लेखः —
"उत्कलीयस्मृतिनिबन्धेषु श्राद्धलक्षणम्"
—पौर्णमासी, भागः २, पृ० १६-१९

१८। श्राद्धं नामादनीयस्य तत्स्थानीयस्य वा द्रव्यस्य प्रेतोद्देश्येन श्रद्धया त्यागः। या० स्मृ० मिताक्षरा।

अवयवस्तिष्ठतीति निर्णयो दुर्घटो जातः। श्राद्धरूपस्य कर्मणः किं तावत् प्रधानं किं वा अंगमिति[१९] जिज्ञासया मिताक्षराकारकृतलक्षणं सम्यगुत्तरं न ददाति। श्राद्धसारकारः[२०] होमं, पिण्डदानं, ब्राह्मणभोजनं चेतित्रितयमंगत्वेन स्वीकृत्य श्राद्धावयवं कल्पितवान्। हेमाद्रिः[२१] आपस्तम्बकृतसूत्रानुसारं ब्राह्मणस्य प्रतिपत्तिस्थानभूतत्वं लक्ष्यीकृत्य मानसव्यापारं मुख्यत्वेन स्वीकृत्य च दत्तद्रव्य-प्रतिपत्त्यधिकरणरूपेण ब्राह्मणं निर्णिनाय। ऐतेनापि श्राद्धं कस्मादारभ्य किं पर्यन्तं व्याप्नोति तत् स्फुटं न भवति। चतुरस्रलक्षणत्वेन प्रप्रथमतया कृत्यकल्पतरौ[२२] लक्ष्मीधरः (११००-११३०) श्राद्धस्य अवयवं दर्शयित्वा तदनुष्ठानावधिं सूचितवान्। तत्र ब्राह्मणस्वीकारपर्यन्ततैव अन्तिमोऽवधिः कलितः। अन्येऽपि[२३] निबन्धकाराः स्वकीयमतप्रदर्शनव्याजेन बहुधा ऊचुः। लक्ष्मीधरमतं

---

१९। तच्चाङ्गत्वं शेषत्वं पारार्थ्यमिति यावत् —मी० प०

२०। होमश्च पिण्डदानं च तथा ब्राह्मणतर्पणम्।
श्राद्धशब्दाभिधेयं स्यादेकस्मिन्नौपचारिके॥
—श्राद्धसारधृतवचनम्। द्रष्टव्यम्—हिस्ट्री आफ धर्मशास्त्र, भागः ४, पृ० ३३५, पा० टी० ७५२

२१। "ब्राह्मणरूपाधिष्ठाने वसुरुद्रादित्यपितृमत्सोमांगिरसयमकव्यवाहनाग्नि-सोमपाज्यपाग्निष्वात्तादीनां महामहिम्नां पितृरूपाणां देवतानामाराधन-मुच्यते, आराधनं च मनसः प्रीणनं तस्य चोपायः श्राद्धलक्षणं कर्म।"
—हेमाद्रिःश्राद्धकल्पः, भागः १, पृ० ५

२२। "अथैतन्मनुः श्राद्धशब्दं कर्म प्रोवाच। प्रजानिःश्रेयसार्थं च। तत्र पितरो देवता ब्राह्मणस्त्वाहवनीयार्थे। मासि मासि कार्यम्। अपरपक्ष-स्यापराह्णः श्रेयानिति (आप० ध० सू० २।१६।१-४) श्राद्धशब्दं श्राद्धमिति शब्दो वाचको यस्य तत्तथा ब्राह्मणस्त्वाहवनीयार्थे आहवनीयवद् व्यक्तद्रव्य-प्रतिपत्तिस्थानत्वेन। एतेन पितॄनुद्दिश्यद्रव्यत्यागो ब्राह्मणस्वीकारपर्यन्तं श्राद्धस्वरूपं प्रधानमित्यर्थादुक्तं भवति।"
—कृत्यकल्पतरुः, श्रा० का०, पृ० ४

२३। श्राद्धं नाम वेदबाधितपात्रालंभनपूर्वकप्रमीतपित्रादिदेवतोद्देशको द्रव्य-त्यागविशेषः। —श्राद्धविवेके रुद्रधरः, पृ० १
आपस्तम्बादिसकलवचनपर्यालोचनया प्रमीतमात्रोद्देश्यकान्नत्यागविशेषस्य ब्राह्मणाद्यधिकरण प्रतिपत्त्यंगकस्य श्राद्धपदार्थत्वं प्रतीयते इति श्राद्धप्रकाशे वीरमित्रोदये मित्रमिश्रः।
—मदीय लेखः—उत्कलीयस्मृतिनिबन्धेषु श्राद्धलक्षणम्—
पौर्णमासी, भागः २, पृ० १८

२३-क्रमशः

अत्र कल्पतरुकारः पितॄनुद्दिश्य द्रव्यपातो ब्राह्मणस्वीकारपर्यन्तो हि श्राद्धमित्याह तदयुक्तम्। ··· पिण्डदानं तु न श्राद्धं किन्तु श्राद्धांगं पिण्डविरहेऽपि नित्यश्राद्धदर्शनात्। —पितृभक्तिः, श्रीदत्तः

यागदानहोमविलक्षणमुत्सर्गाभिधमपि त्यागमाह स्मार्तवाचस्पतिमिश्रो मैथिलः। अयमेव समेषां मैथिलानामाशयः।

—द्रष्टव्या, पौर्णमासी, भागः २, पृ० १८

पितृद्देशेन श्रद्धया त्यक्तस्य द्रव्यस्य ब्राह्मणैर्यत् स्वीकरणं तच्छ्राद्धम्।

—'श्राद्धकल्पलता', पृ० ३

वेदबोधिनपात्रालंभपूर्वकहविस्त्यागः श्राद्धम्। अत्रालंभो न श्राद्धविशेषणम्। अन्यथा तस्य वेदबोध्यत्वाभावेन तद्घटितश्राद्धस्य वेदबोध्यत्वापत्तेः किमुपलक्षणम्। उपलक्ष्यश्च स्वतो विलक्षणस्त्यागविशेष एव। एतेन यन्मत एकोद्दिष्टश्राद्धे नाव्याप्तिः, नापि सन्न्यासिकर्त्तृकात्मादिश्राद्धेऽपि सा। "दैविकं दशमं स्मृतम्।" इति विभागोऽपि च समंजसो भजति। पिण्डदानत्वमंगमेव।

श्राद्धं कृत्वा प्रयत्नेन त्वराक्रोधविवर्जितः।
उष्णमन्नं द्विजातिभ्यः श्रद्धया प्रतिपादयेत्॥

इत्यादि वाक्येषु आनन्तर्यवाचिकत्वाप्रत्ययेनात्मोत्सर्गे एव श्राद्धपदप्रयोगात्। "त्रिषु पिण्डः प्रवर्त्तत" इति चांगमुखेन प्रधाननिर्देशः पिण्डपितृयज्ञविषयं वा इत्याहुः मैथिलाः। —श्रा० प०, पृ० ५–६

मृतोद्देश्यको विप्रस्वीकारको द्रव्यत्यागः श्राद्धम्। —श्राद्धमयूखे, पृ० २

कमलाकरभट्टो यथा—ब्राह्मणस्वीकारान्तश्चतुर्थन्तिपदोपनीतपित्राद्युद्देश्यकस्त्यागः श्राद्धमित्यर्थः। तत्र यद्यपि होमपिण्डभोजनानि प्रधानमिति हेमाद्रिः।

"होमश्च पिण्डदानं च तथा ब्राह्मणभोजनम्।
श्राद्धशब्दाभिधेयं स्यादेकस्मिन्नौपचारिके॥"

इति श्रीधरश्च, तथापि क्वचिद् विशेषं वक्ष्यामः। निमित्तभेदेन भोजनस्य पिण्डानां वा निषेधो न प्राधान्यं विरुणद्धि असोमयाजिनो दधिपयोयागवत्। —इति निर्णयसिन्धुः, पृ० २६५

श्राद्धक्रियाकौमुदीकारो यथा—"वेदबोधितसम्बोधनपदोपनीतोद्देश्यकतर्पणेतरः प्रधानो हविस्त्यागः श्राद्धमिति लक्षणम्।" पृ० ४

शूलपाणिः[२४] नानुमनुते। विप्रमिश्रः[२५] शूलपाणिमतं दूषयित्वा लक्ष्मीधरमतं स्वीकरोति। मदनपारिजातेऽप्येवम्[२६] लक्ष्मीधरमतस्य स्वीकारे पृष्ठपोषकं मनोर्वचनमसौ प्रस्तौति, यस्य भावः साक्षात् लक्ष्मीधरकृतश्राद्धलक्षणेन सह सम्मिलति। अत्रेदं विवेच्यं यत् इदं मनोर्वचनं मुद्रितमनुस्मृतौ कुत्रापि नास्ति। मेधातिथिप्रभृतिभाष्यकारादारभ्य कुल्लूकभट्टपर्यन्तं यावन्तः टीकाकाराः आसन्, तेषु कश्चन एकोऽपि एतद् वचनं प्रसंगभंग्या नोद्धरति। नानास्मृतिनिबन्धेषु अपि अस्य पाठो नास्ति। केवलमुत्कलीयस्मृतिनिबन्धेषु प्रप्रथमतया प्राचीनतया च श्राद्धप्रदीपे विप्रमिश्रो लिखति, तदनुगामिनस्तदुद्धरन्ति। दिव्यसिंहमहापात्रः श्राद्धदीपे गदाधरराजगुरुश्च स्वकीये कालसारे तदेव वचनमविकलमुट्टंकयतः।

---

गौडीयश्राद्धप्रकाशकारो यथा—देशकालपात्रेषु पित्राद्युद्देशेन विधिहविस्तिलदर्भमन्त्रश्रद्धादिभिर्दानं श्राद्धम्। पृ० १

उत्कलीय दिव्यसिंहमहापात्रः श्राद्धदीपे विप्रमिश्रं समर्थयन् प्रस्तौति श्राद्धं नाम पितॄनुद्दिश्य द्रव्यत्यागः। तत्र ब्राह्मणभोजनं पिण्डदानं चोभयं प्रधानमिति बहवः। अतएव।

"अग्नौ हुतेन देवस्थाः पितृस्था द्विजतर्पणैः।
नरकस्थाश्च तृप्यन्ति पिण्डैर्दत्तैस्त्रिभिर्भुवि॥"

इति पिण्डदानब्राह्मणभोजनयोः समकक्षतया फलश्रवणम्। केवलमसोमयाजिनः सान्नाय्यविरहेऽपि प्रधानसिद्धिवत् मघादौ पिण्डविरहेऽपि श्राद्धफलं भवत्येव। गयाश्राद्धादौ पिण्डदानमात्रविहितमिति तत्र तावन्मात्रेणैव श्राद्धफलम्। वस्तुतस्तु पितॄनुद्दिश्य द्रव्यत्याग एव प्रधानम्। पिण्डदानं ब्राह्मणभोजनं सर्वमङ्गम्। तस्य श्राद्धस्य दानरूपत्वम्। पृ० १

उत्कलीयगदाधरराजगुरुः विप्रमिश्रदिव्यसिंहमहापात्रयोः मतसमर्थकस्तथैवाह—पितॄनुद्दिश्य द्रव्यत्यागो विप्रस्वीकारपर्यन्तः श्राद्धमिति लक्षणम्। विष्टरब्राह्मणश्राद्धेऽपि पश्चाद्ब्राह्मणस्वीकाराल्लक्षणसमन्वयः। दैविकश्राद्धेऽपि। —कालसारः, पृ० २९५

एवं कृष्णमिश्ररघुनाथदासप्रभृत्युत्कलीया अपि।

२४। संबोधनपदोपनीतान् पित्रादींश्चतुर्थ्यन्तपदेनोद्दिश्य हविस्त्यागः श्राद्धम्—श्राद्धविवेके शूलपाणिः।

२५। द्रष्टव्यो—मूलभागे प्रथमालोकः।

२६। द्रष्टव्यो—मदनपारिजातः, पृ० ४७४

एतावता उत्कलेषु प्रसिद्धिं प्राप्तस्य एतादृशस्य मनुवचनस्य कुत्रचित् उद्भव इति निर्णयः सहजसाध्यो न भवति।

मैथिलाः[२७] श्राद्धमुत्सर्गत्वेन त्यागं स्वीकुर्वन्ति। यतो हि दानत्वेन स्वीक्रियमाणे प्रतिग्रहस्य स्वीकारोऽवश्यं भवितव्यः। स्वस्वत्वध्वंसपूर्वकं परस्वत्वापत्तेः दानस्य स्वरूपत्वात् परस्य पितुः स्वत्वाप्त्तिर्भवति। पितरस्तु साक्षादागत्य न गृह्णन्ति। तत्प्रतिनिधित्वेन ब्राह्मणग्रहणाभावात् प्रतिग्रहसिद्ध्या दानं न सिद्ध्यति। अतः उत्सर्गस्य स्वीकारेणागच्छति स पक्षः। विप्रमिश्रमतेन तन्न स्वीक्रियते यतो हि प्रतिग्रहो दानस्य अंगभूतः, तन्मध्ये तस्यान्तभावः[२८]। न हि साक्षात् स्वेच्छया क्वापि प्रतिग्रहस्त्यज्यते। वचनप्राधान्येन तस्य त्यज्यमानत्वात् न्यायापेक्षया बलवत्त्वम्। ददातिक्रियायाः कर्त्तुः कृते विधेयत्वं भवति न हि प्रतिग्रहस्य, तस्य कामप्राप्तत्वात्। एतदपि स्वीकुर्वन्ति प्रायेण समे[२९] विद्वांसः। एवं रीत्या श्राद्धस्य दानत्वेन देयद्रव्यस्वरूपतया पिण्डदानस्य प्राप्तौ तदेव मुख्यम्। प्रतिग्रहे दाननिमित्तकस्वीकारस्य प्राधान्याभावात् कामतस्तस्य सिद्धौ गयाश्राद्धादिषु[३०] प्रतिग्रहाभावेन श्राद्धं सिद्ध्यति अश्वप्रतिग्रहाधिकरणन्यायेन, स

---

२७। श्राद्धं नाम वेदबोधितपात्रालंभनपूर्वकप्रमीतपित्रादिदेवनोद्देशको द्रव्यत्यागविशेषः। —श्राद्धविवेकः रुद्रधरः, पृ० ८

२८। परस्वत्वापत्तेर्दानपदार्थान्तिर्गतत्वात् प्रतिग्रहस्य वृत्यर्थत्वेन प्राप्तत्वात् विधेयत्वाभावात् —द्रष्टव्यो मूलभागः।

२९। न हि परस्वत्वजनकत्यागसत्वेन दानलक्षणं, किन्तु परस्वत्वोद्देशेन त्यागस्यापि दानलक्षणत्वसंभवात्। दायभागव्याख्याने महेशाचार्यः पृ० २८ दानत्वनिर्वाहिका परस्वत्वापत्तिर्दातृव्यापारजा—तत्रैव रघुनन्दनः न च स्वीकरणात् स्वत्वं स्वीकर्त्तुरेव दातृत्वापत्तेः परस्वत्वापत्तिफलेन हि दानरूपता तच्च फलं संप्रदानाधीनं यथा देवतोद्देशेन द्रव्यत्यागं कुर्वन्नपि यजमानो न होता परन्तु तस्यैव त्यागस्य होमाभिधाननिमित्तं प्रक्षेपं कुर्वन् ऋत्विगेव होतेत्युच्यते तद्वदत्रापि स्यात्। किं च मनसा पात्रमुद्दिश्येत्यादिशास्त्रे स्वीकारात् प्रागेव दानपदं दृष्टम्॥

—दायभागः पृ० ४

३०। गयातीर्थं, काशीक्षेत्रम्। तल्लक्षणं दानचन्द्रिकाधृतवचने स्पष्टं यथा—
'अथ तीर्थे प्रतिग्रहनिषेधः —पाद्मे
न तीर्थे प्रतिगृह्णीयात् प्राणैः कण्ठगतैरपि।
इति तीर्थे तीरे क्षेत्रे च। गंगाकृष्णागोदावरीणां तीरमाह विष्णुः॥

मूलभागे विमृष्टः। न्यायत् अंगत्वेन प्रतिग्रहस्य सिद्धौ वचनबलेन यदा प्रतिग्रहो निषिध्यते तत्र परोक्षदानस्थलं तदिति ग्रन्थकृदाशयः[३१]। मैथिलानां[३२] मतानुसारं श्राद्धस्य उत्सर्गस्वरूपतया परोक्षदानस्थलम्।

शूलपाणिप्रभृतयः पिण्डदानं प्रतिषिध्यांगत्वेन स्थापयन्ति, यतो हि अतिदिष्टो धर्मो अंगस्य। पिण्डदानस्य अंगत्वात् तस्यैव अतिदेशो घटते। तदर्थमपि पिण्डे अमुकद्रव्यस्य दाने अमुकफलमिति अंगबोधकवाक्यमिति तेषामाशयः। अत्र विप्रमिश्रः एतन्मतमस्वीकृत्य पिण्डदानं प्रधानत्वेनांगीकृत्य च फलश्रुति-विषयकमाक्षेपं प्रधानफलस्यार्थवादरूपेण[३३] स्वीकरोति वैश्वानरन्यायेन। पारस्करश्राद्धसूत्रव्याख्याने[३४] कर्काचार्योऽपि पिण्डदानं प्रधानतया निरूपयति।

विप्रमिश्रमते श्राद्धस्य यागरूपत्वमपि दानरूपत्वसिद्ध्या फलति। यजतिददातिरिति[३५] श्रुतिद्वयं तत्रास्ते। पितॄणां देवातात्वेन स्वीकारे यागरूपत्वं,

---

गंगा गोदावरी कृष्णा तीरमाहुर्महर्षयः।
उत्तरे नवगव्यूतिर्दक्षिणे योजनत्रयम्।। —इति भविष्ये
तीराद् गव्यूतिमात्रं तु परितः क्षेत्रमुच्यते।।
—इति श्राद्धमञ्जर्याम् अपि पृ० १६८, पृ० १-२

जलावतारस्तीर्थं इति समे आमनन्ति। क्षेत्रतीर्थयोर्भेदमपि शार्दूल-संस्कृत महाविद्यालयप्राचार्याः डा० विश्वनाथमिश्रा नामनन्ति इति तेषां पत्राचारात् ज्ञातम्।

३१। वचनात्तु 'परोक्षदानस्थले काम्यकर्मण्यपि अंगवैगुण्ये फलमिति'। —विप्रमिश्रः।

३२। मैथिलानां मतानुसारेण श्राद्धस्य यदुत्सर्गाभिधत्वं तत्परोक्षदानस्थलम् इति विप्रमिश्रः। —द्रष्टव्यो मूलभागः।

३३। यत्र पिण्डदाने फलमुक्तं तत्र अर्थवादविषय एव। पिण्डदानश्रवणजनित-फलश्रुतिः प्रधानफलस्यार्थवादः। यत्तु विप्रस्वीकारपर्यन्तं इति मनुवचनं तद् विप्रस्वीकारांशेऽनुवादमात्रम् अर्थप्राप्तत्वात् प्रतिग्रहस्य।
—विप्रमिश्रः, गदाधरोऽपीत्थम्, पृ० २६६, कमलाकरोऽपि निर्णयसिंधुः, पृ० २६५

३४। द्रष्टव्यो—मूलभागः विप्रमिश्रस्य।

३५। विद्वान् पितॄन् यजते
पितृभ्यो दद्यात्

तदेव दानमाध्यमेन फलति। श्राद्धप्रकाशे[१६] सोऽयं विषयः शूलपाणिमतखण्डन पुरःसरं सम्यग् विमृष्टः। अयमेव विप्रमिश्रस्याशयीभूतो विषयः।

क्रमालोकगतविषयाणां तुलनात्मक विश्लेषणम

पितॄणामुद्देश्येन देयद्रव्यकोटिमधिगतानां द्रव्याणां सुरक्षार्थं विश्वे देवाः क्लृप्ताः। अतः पितृ-वैश्वदेवयोः रक्ष्य-रक्षकभावोऽभ्युपगतः आगमनकाले रक्षकस्य अग्रवर्त्तित्वेन विसर्जन (प्रत्यावर्तन) काले पश्चाद्वर्त्तित्वेन च पितॄणां कृते अर्घ्यादिदानात् पूर्वं विश्वेषां देवानां सत्वात्तत्कृतेऽर्घ्यं दीयते, विसर्जनकाले च पितॄणां विसर्जनात् परं तेषां विसर्जनं याज्ञवल्क्यमनुप्रभृतयः स्पष्टमुक्तवन्तः। विप्रमिश्रेण स्वकीयभंग्या एतत् स्पष्टीकृतम्। विषयस्यास्य सामान्यत्वात् समेषां प्रायेण निबन्धृणामत्र सम्मतिः। हेमाद्रि[१७]कल्पतरुकारवीरोमित्रोदयकारप्रभृतयस्तथा निरणयन्।

---

३६। तत्र 'य एव विद्वान् पितॄन्यजते' इति यजिप्रयोगदर्शनाद्यागलक्षणसत्वाच्च यागरूपता। न च 'पितृभ्यो दद्यात्' इति प्रयोगदर्शनाद्दानरूपताप्यस्येति शूलपाण्युक्तं युक्तम्। श्राद्धस्य परस्वत्वजनकत्वभावेन तल्लक्षणानाक्रान्तत्वात्। तथा हि न तावत्तस्य पित्रादिस्वत्वोत्पादकत्वम्। तेषां ममेदमिति स्वीकारासंभवात्। पित्रादीनां भोक्तृत्वोक्तिषु शूलपाणेर्देवताधिकरणविरुद्धैव। वेदान्तमतरीत्या पित्रादीनां भोक्तृत्वस्वीकारेऽपि "न ह वै देवा अश्नन्ति न पिबन्ति एतदेवामृतं दृष्ट्वा तृप्यन्ति।" —इत्यादि पर्यालोचनया स्वत्व स्वीकारस्त्वप्रमाणक एव। कथमथवा वेदान्तमते यागदानयोर्भेदः। नापि ब्राह्मणस्वत्वोत्पादकत्वं श्राद्धस्य। तेषामनुद्देश्यत्वात्। ब्राह्मणस्वत्वं तु त्यक्तद्रव्यप्रतिपत्त्या परमुत्पाद्यतां यथा देवोद्देश्येन त्यक्तहिरण्यादेः ब्राह्मणे प्रतिपादनादेव ब्राह्मणस्वत्वं न तु देवोद्देश्यकत्यागात्। ददातिप्रयोगस्तु लाक्षणिको व्याख्येयः अन्ये तु 'पितृवदुपवेश्य' इत्याश्वलायनसूत्रेण ब्राह्मणे पितृभेदबुद्धेरपि श्राद्धांगत्वप्रतिपादनात् पितुरुद्देश्यकत्यागेनापि ब्राह्मणगतस्वत्वोत्पत्तेः सुवचत्वात् ददातिरपि मुख्य एव। अतश्च यागदानरूपतेत्याहुः।

—वीरमित्रोदयः श्राद्धप्रकाशः, पृ० ८

३७। उच्छिष्टावलिप्तहस्तक्षालनं विसर्जनं च वर्जयित्वा सर्वेषां श्राद्धीयपदार्थानां वैश्वदेविकपूर्वकत्वात्। —हेमाद्रिः, प० ११९६

सपिण्डीकरणेक्रमवैषम्यनिराकरणम्

शूलपाणिप्रभृतयः[३८] सपिण्डीकरणश्राद्धे उपदिष्टेषु चतुर्षु पात्रेषु अन्तिमं पात्रं प्रेतस्येति आमनन्ति। पितृदयिताकार-अनिरुद्धभट्टादयो[३९] गौडा अपि तत्समर्थयन्ति। एतेषां पोषकवाक्यं गोभिलीयम्।[४०] विप्रमिश्रः प्राकृतिके ग्रन्थे तन्नांगीकरोति। तन्मते गोभिलवचने चतुष्टयपात्रगणनविषयको भाव उक्तः, तेषु त्रीणि पात्राणि प्रेतस्य पितृ-पितामह-प्रपितामहानाम् अन्यत् प्रेतस्येति। गोभिलस्य पाठक्रमगतविषयः संक्लृप्तः। किन्तु सपिण्डीकरणस्य श्राद्धस्य प्रेतोद्देश्येन प्रधानतः क्रियमाणत्वात् तदुद्देशकं पात्रं प्रथमतो विवक्षाविषयगतम् इति मन्तव्यम्। गोभिलवचने तथा विचारे जाते पाठक्रमः फलति। अतः केवलं पाठमात्रविवक्षया क्रमप्राधान्यं नास्ति। आश्वलायनवाक्ये[४१] प्रेतस्य प्रधानतया प्राथम्योक्तेः श्रुतिक्रमविषयः[४२] इति निर्धारयितव्यम्। अतः श्रुतिपाठयोः श्रुतेर्बलवत्त्वेन प्रथमं पात्रं प्रेतस्य अपराणि त्रीणि प्रेतपित्रादीनाम्। एतदस्माभिः रश्मौ विचारितम्। वस्तुगत्या विचारे क्रियमाणे इयमेव निष्पत्तिः फलति यत् आश्वलायनगोभिलयोर्वचने पुरुषस्य विचिकित्सा आपतति। शूलपाणिप्रभृतयो गोभिलवचनमाश्रित्य तस्मिन् पाठक्रमं स्वीकृत्य प्रथमं प्रेतपात्रमंगीकृत्यापि श्रौतपाठविषयं न विमृष्टवन्तः। गोभिलीयश्राद्धकल्पगते एतद्वचनव्याख्याने नारायणीये[४३]

---

३८। सपिण्डीकरणे "चत्वारि उदकपात्राणि। त्रीणि पितॄणाम्। एकं प्रेतस्येति।" गोभिलवचनेन पाठक्रमात् क्रमः।

—श्राद्धविवेकः, पृ० ३८२

३९। पितृदयितः, पृ० ४९

४०। द्र०, पा० टी० ३८

४१। एकं प्रेतस्य। त्रीणि इतरेषाम्। प्रथमं पात्रं त्रिषु पात्रेषु नियोजयेत्।

४२। आश्वलायनवचनेन एकं प्रेतस्य त्रीणि इतरेषाम्। प्रथमं पात्रं त्रिषु पात्रेषु नियोजयेत् इति श्रुतिपाठः अर्थपाठः। स गोभिलोक्तपाठक्रमात् प्रबलः। —द्र०, पा० टी०, क्रमालोके २९

४३। त्रीणि पात्राणि पितॄणां शिष्टमेकं पात्रं प्रेतस्य, 'पूरयित्वा' इति गतेन सम्बन्धः। तदत्र, पाठक्रमात् प्रथमं पितॄणां पार्वणमनुष्ठेयं ततः प्रेतस्यैकोद्दिष्टम्। इति। तथा चोक्तम्—

"क्रमेण वा नियम्येन कृत्वैकत्वे तद्गुणत्वात्।" इति

गोभिलीयश्राद्धकल्पसूत्रगतनारायणीये— १५

पाठक्रमविषयः स्फुटं चर्चितः। गौडीयश्राद्धप्रकाशादिषु[४४] तथा सत्त्वादपि प्रथमं प्रेतपात्रगतकार्यं भवतीति उक्तम्। प्रेतपाद्यपात्रस्य पितृपाद्य-पात्रत्रये संयोजनतया प्रेतपात्रस्य प्रप्रथमत्वं विष्णुप्रभृति[४५]-वचनजातादाक्षिप्तं भवति। कल्पतरुकारस्तु[४६] सपिण्डीकरणप्रकरणे आश्वलायनवचनमुत्थापयन् तेन वाक्येनैव प्रेतपात्रस्य प्रथमत्वमंगीचकार। तन्मतानुयायी विप्रमिश्रस्तथा अंगीकृत्य श्रौतक्रममर्थक्रमत्वेन स्वीकृत्य गोभिलवचनगतपाठक्रमतामदर्शयत्। नन्दपण्डितः[४७] कल्पलतायां शौनकवचनव्याख्याने तथा अंगीचकार।

श्राद्धे एकाधिकरणे बहुद्रव्यककर्मणां क्रमवैषम्यनिराकरणम्

पितॄणां कृते विश्वेषां देवानां च कृते अर्घ्यादिदानं काण्डानुसमयेन भवति। काण्डं नाम पदार्थवर्गः। एकस्मिन् अधिकरणभूते देवताविशेषे निखिलं कर्म समाप्य इतरदेवतासु तत् कर्त्तव्यम्। एकमेकमुष्ठानं क्रमेण क्रियते चेत् पदार्थानुसमयो भवति। विप्रमिश्रः[४८] काण्डानुसमयपक्षं संमनुते। दैवे सर्वाणि

---

४४। एतत्सपिण्डीकरणमेकोद्दिष्टं स्त्रिया अपि। इति अस्यार्थो हेमाद्रिणा कृतः। गन्धैश्चन्दनादिभिरुदकेन तिलैश्च उक्तं पात्रचतुष्टयं प्रेतादिभ्यो-ऽर्घ्यपात्रं कुर्यात्। तत्र प्रेतायार्घ्यं दत्त्वा शेषं तत्पात्रस्थजलं पितामहा-दिपात्रेषु ये समाना इति द्वाभ्यां मन्त्राभ्यां यथाक्रमं पितृदेवताभ्यां प्रसिंचेत्। इति—गौडीयश्राद्धप्रकाशः, पृ० ५७

४५। संवत्सरान्ते प्रेताय तत्पित्रे तत्पितामहाय तत्प्रपितामहाय च ब्राह्मणान् देवपूर्वान् भोजयेत्। अत्राग्नौकरणमावाहनं पाद्यं च कुर्यात्। संसृजतु त्वा पृथिवी समानी व इति प्रेतपाद्यपात्रं पितृ-पात्रतये योजनात्। —विष्णुधर्मसूत्रम्, २१।१३-१४

४६। आश्वलायनपरिशिष्टम्। अथ सपिण्डीकरणम्। चत्वार्युदपात्राणि। एकं मृतस्य। त्रीणीतरेषाम्। प्रथमं पात्रं त्रिषु पात्रेषु नियोजयेत्। समानीव आकूतिरित्येवमेव द्वाभ्याम्। एवं चतुर्थो अनुज्ञापितो भवति इति। कृत्यकल्पतरुः श्राद्धकाण्डे, पृ० २५३

४७। शौनकोऽपि—"अथ सपिण्डीकरणं चत्वार्युदपात्राण्येकं प्रेतस्य त्रीणीतरेषां प्रथमं पात्रं त्रिषु पात्रेषु नियोजयेत्। 'समानी व आकूतिः' इत्येवमेव प्रथमपिण्डं त्रिषु पिण्डेषु नियोजयेत्।" —श्राद्धकल्पलता, पृ० २३६

४८। देवेऽर्घ्यमन्नाद्यं च दत्त्वा अन्यानर्चयेत्। —द्र०, मूलभागः क्रमालोकः

अर्घ्यादिदेयवस्तूनि संस्थाप्य अनन्तरं तथैव पितृषु कुर्यात्। मित्रमिश्रस्तथैव[४९] श्राद्धप्रकाशे प्रस्तौति। श्रीदत्तप्रभृतयो मैथिला[५०] पदार्थानुसमयं स्वीकुर्वन्ति। एतद् विमृश्य[५१] रश्मौ अस्माभिः स्थापितं, तत्र मृग्यम्। (अत्र कात्यायन-याज्ञवल्क्यवचनयोरुपरि विचारो भवति।)

आभ्युदयिकश्राद्धे क्रमवैषम्यनिराकरणम्

आभ्युदयिकश्राद्धस्य अपरं नाम वृद्धिश्राद्धम्। पार्वणश्राद्धस्य अतिदेशेन अस्य सत्त्वात् अपि वचनात् पूर्वं भवति मातृश्राद्धम् इति शातातपमतम्[५२]। अन्वष्टकायां पारस्करगृह्यसूत्रमता[५३]नुसारमन्तिमे कर्त्तव्यमिति विप्रमिश्रस्य[५४] सिद्धान्तः। यतो हि गृह्यसूत्राणां वैदिकत्वात स्मृतीनां तदपेक्षयां दौर्बल्यात्

---

४९। तथा च याज्ञवल्क्येन काण्डानुसमयेन वैश्वदेविकमर्घ्याद्यर्चनं विधाय पश्चात् पैत्र्यमर्घदानमुक्त्वा

दत्त्वार्थं संस्रवांस्तेषां पात्रे कृत्वा विधानतः।
पितृभ्यः स्थानमसीति न्युब्जं पात्रं करोत्यधः।।

इति तेषामित्येतेन सर्वनाम्ना पितामहपात्रस्थसंस्रवाणामेवोक्तत्वात्।
—वी० मि०, श्रा० प्र०, पृ० २१

५०। यद्यपि याज्ञवल्क्येनासनादिदीपप्रदानान्तमेवोक्तं पित्रे आसनादिदानमर्थ-समय एवार्थस्तथापि कात्यायनमते पदार्थार्थसमय एव। देवावाहनादनन्तरं पित्रावाहनोक्तमेकैकस्मिन्नपि आसिंचतीति यः सर्वत्र पात्रेषु जलप्रक्षेपा वगमात्। तदनन्तरं चैकैकस्मिन्नेव तिलानावपतीति विधानत्। अत एवैकदीर्घपात्रे जलादिपुष्पान्तं प्रक्षिप्याघ्यर्पर्यन्तं वा निर्वर्त्य पात्रान्तर-पूरणमिति मतं न युक्तम्। किन्तु पदार्थानां क्रमान्तराभिधानादपि पदार्थसमय एवार्हति, अतो निमन्त्रणादावपि पदार्थार्थसमय एव।
—पितृभक्तिः, पृ० २६

५१। द्र०—पा० टी०, क्रमालोके, ३१–३२

५२। मातृश्राद्धं तु पूर्वं स्यात् पितॄणां तदनन्तरम्।
ततो मातामहानां च वृद्धौ श्राद्धत्रयं स्मृतम्।।

५३। अन्वष्टकासु सर्वासु पार्श्वसक्थिसव्याभ्यां परिवृते पिण्डपितृयज्ञवत् स्त्रीभ्यश्चोपसेचनं कर्षूषु। पा० गृ० सू० ३।३।१

५४। द्र०, मूलभागः, क्रमालोकः।

शातातपवचनं दुर्बलम् । विप्रमिश्रः शंभुकरवाजपेयिचरणानां मतमंगीकृत्यैतत् निर्णयति । दिव्यसिंहमहापात्रः[११] श्राद्धदीपे एतदुट्टंकितवान् ।

अतिदेशालोके शूलपाणिमतवैषम्यनिराकरणम्

नित्यश्राद्धमदैवं भवति, तत्र अर्घ्यपिण्डदानादिकं कर्म नास्ति । इति सर्वसामान्यपरामर्शः । शूलपाणिमतेन नित्यश्राद्धे अग्नौकरणाभावात् तस्याङ्गत्वेन पात्रालंभनवपादिकं न भवति । मुख्यहानौ अंगहानिः । विप्रमिश्रः एतत्पात्रालंभनादिकमंगत्वेनास्वीकृत्य तत्कालमात्रानुष्ठेयत्वेन स्वीकरोति । अंगत्वेन स्वीकारे मुख्यांगसम्बन्धः स्यात् । कालार्थसम्बन्धस्य सत्त्वात् । अपूर्वार्थत्वमात्रम् । रश्मौ एतत् सम्यक् विमृष्टं तत्र मृग्यम् ।

ऊहालोके मतवैषम्यनिराकरणम्

प्रकृतिगतानां धर्माणां विकृतौ अतिदेशेन प्राप्तौ समवेतार्थकतया प्रयोजनमुखेन ऊहो भवतीति रश्मौ अस्माभिर्विचारितम् । पितृश्राद्धगतधर्माणां मातामहश्राद्धे अतिदेशेन प्राप्तौ मातामहशब्दस्य पितृस्थाने ऊहेन प्रयोगो वचनवितानेन घटते । तद्वत् प्रेतश्राद्धेऽपि पितृस्थाने प्रेतपदोहो भवति । विप्रमिश्रः[१६] प्राकृतिकमन्त्रस्य विकृतौ ऊहनं वारयति । विज्ञानेश्वरो मिताक्षरायां (१।२३८) एतं वैकल्पिकसिद्धान्तमुपस्थापयति । यत्र यत्र अमुक[१७]-तुभ्यमित्यादिपदप्रयोगः

---

५५ । अन्वष्टकासु क्रमशो मातृपूर्वं तदिष्यते ।
मातामहानां यः कृत्वा मातॄणां संप्रयच्छति ।।
तर्पणं पिण्डदानं च नरकं चैव गच्छति ।

इति च वचनद्वयं प्रमाणमिति शंभुकरवाजपेयिभिरान्तुकानामन्ते निवेश इति न्यायेन मात्रादिश्राद्धानामन्ते कर्त्तव्यमित्युक्तम् । वस्तुतस्तु पुराणस्मृत्यपेक्षया गृह्यसूत्रस्य बलवत्त्वात् अन्वष्टकासु सर्वासां पार्श्वसक्थिसव्याभ्यां परिवृते पिण्डपितृयज्ञवत् स्त्रीभ्यश्चोपसेचनं कर्षूष्विति वचनादन्वष्टकाकर्मणि तथादर्शनादन्त एव कर्त्तव्यम् ।

—श्राद्धदीपः, पृ० ६५

५६ । अत्र वाचनिकोहः—विप्रमिश्रः, द्र०, ऊहालोकः
'मातामहानामप्येवम् इति विष्णुस्मरणात्' ७५।७

५७ । अन्नादिसंकलपवाक्ये अमुकसंज्ञ तुभ्यमन्नमिति स्थाने ऊहेन स्वशब्दप्रयोगो भवतीति—विप्रमिश्रः ।

प्रकृतावस्ति, तत्र तत्र एव ( प्राकरणिक ) पदोहः करणीयः। भवदेवभट्टः[५८] एतस्य मन्त्रभागत्वमस्वीकृत्य ऊहसद्भावाभावं वारयति। विप्रमिश्रस्तन्मतं[५९] दूषयित्वा मन्त्रभागत्वमेतस्येति प्रस्तौति। मातृसांवत्सरिकश्राद्धे कात्यायन-याज्ञवल्क्यवचनाभ्यां पितृयज्ञगता धर्मा अतिदिश्यन्ते। तत्रापि प्रयोगक्षेत्रे समवेतार्थानां प्रयोजनमुखेनोहः। तिलोऽसि मन्त्रे स्वाहापदाद्यूहो भवतीति विप्रमिश्रः[६०]।

एकोद्दिष्टमातामहादिश्राद्धे बहुवचनपदोहगतमतवैषम्यनिराकरणम्

प्रातिपदिकस्य मन्त्रस्य लिंगस्य चेति त्रितयस्य ऊहो भवति। एकोद्दिष्टे मातामहश्राद्धे च एतत्त्रयाणामूहो न भवति इति विप्रमिश्रः[६१]। समेऽपि निबन्धकाराः एतत् स्वस्वग्रन्थेषु प्रतिपादयामासुः। किन्तु युक्तिभंगी समेषां समानास्ति। विप्रमिश्रः[६२] पितर इति आवाहनपदे पितृप्रादिके बहुवचनस्य सत्त्वात् एकोद्दिष्टे एकोद्देश्येन क्रियमाणत्वेऽपि बहुवचनं स्थास्यतीति प्रस्तौति, तत्र पितॄणां सम्मिलितदेवतात्वात्। रघुनंदनोऽपि श्राद्धतत्त्वे तथा।

---

५८। एतस्य अमन्त्रभागवत्वम्—भवदेवः। तत्रैव।

५९। असौ स्वर्गाय इति अध्ययनाध्यापितभागपठितत्वात् मन्त्रभागत्वमेवेति। —तत्रैव।

६०। तिलोऽसि मन्त्रे स्वाहापदम्, अंगुष्ठावगाहनमन्त्रे कव्यपदं प्रकृतिमन्त्रत्वात् ऊहो न भवति। तत्रैव।

६१। एकोद्दिष्टमातामहश्राद्धे त्रयाणामूहो न भवति—विप्रमिश्रः।

६२। अस्य बहुवचनस्य सत्त्वादपि सम्मिलितदेवतात्वम्। तत्रैव।
एकोद्दिष्टे पुनःप्रातिपदिकस्य समवेतार्थत्वादूहाभावाद् वचनस्याप्यनूह एव ··· बहुवचनस्य छान्दसत्त्वात्। तत्रैव।
लेपभागिपितॄणामपि प्रकृतौ बहुत्वस्य प्रकाश्यत्वादेकोद्दिष्टेऽपि तत्सत्त्वात् छान्दसत्त्वेऽपि बहुवचनस्य नोहः। तत्रैव।
नह्यत्र देवदत्तादयः श्राद्धे संप्रदानभूताः पित्रादिशब्दैरुच्यन्ते। किन्त्वधिष्ठातृवस्वादिदेवतासहिता एव। यथा मैत्रशब्देन नाममात्रे न शरीरमात्रं किन्तु शरीरविशिष्टात्मा। वसन्ते ब्राह्मणोऽग्नीनादधीत (तै० ब्रा० १।१।२) इतिवत् सामानाधिकरण्यात्। एवं पित्रादिशब्देऽपि। —तत्रैव।

नीलकण्ठस्तु[६३] स्वमयूखग्रन्थे अत्र बहुवचनस्य समवेतार्थत्वमस्वीकृत्य तस्य ऊहासद्भावकत्वं प्रस्तौति। द्वैतपरिशिष्टे[६४] केशवमिश्रस्तथा किंचित् स्पष्टीकृत्य ब्रूते। एवं बहवः। एतस्य निखिला चर्चा मत्कृतरश्मौ अग्रे मृग्या।

---

६३। प्रकृतौ बहुवचनस्यासमवेतार्थत्वे विकृतावप्यविकृतस्यैव प्रयोगः इति नवमे पाशाधिकरणे व्यवस्थितत्वात्। एवं च शुन्धतां मातामहाः शुन्धन्तां मातरः इत्याद्येवोह्यम्। येषां च पितृभ्यः स्वधोच्यतां पितामहेभ्यः स्वधोच्यतां प्रपितामहेभ्यः स्वधोच्यताम् इति शुन्धनमन्त्रास्तेषामपि पूर्वोक्तन्यायेन भवत्येवोहः। —श्राद्धमयूखः, पृ० १२५

६४। उक्तमादाय पिण्डं तु कृत्वा विल्वफलोपमम्।
दद्यात् पितामहादिभ्यो दर्भमूलाद् यथाक्रमम्॥

बहुवचनं तु मातामहादिपिण्डापेक्षया, पितृपिण्डदानं तु पाणिभ्यामेव 'सव्येतराभ्यां प्रथमं पिण्डमावपेत्' इति वचनात्। न च 'क्षौमे वसनावग्नीनां दधीयाताम्' इति वदत्राप्यस्तु इति वाच्यम्। एवं हि प्रथमपदस्य वैयर्थ्यापत्तेरिति। न चैकवचनवन्मन्त्रानूहेन 'एकोद्दिष्टे' इति सूत्रात् प्रकृतिप्राप्तानां बहुवचनवन्मन्त्राणां समवेतार्थानां विकृतौ तावदेकवचनोहः, अत एवाऽनये त्वा जुष्टं निर्वपामीत्यत्र सूर्याय त्वा जुष्टं निर्वपामीति देवतोहः। असमवेतार्थानां तु नोहः। अतएव दक्षे पशावेकपाशिकायां विकृतावेकवचनान्तो द्विवचनान्तः कृत्वोह्यते, प्रकृतौ समवेतार्थकत्वात्। द्विवचनान्तस्तु नोह्यते, प्रकृतावेवासमवेतार्थकत्वात्। तथा च 'नमस्ते' माता रसाय नमस्ते पिता रसाय इति ह्यसिद्धिरस्तु। एतत्ते पितर्वास इति कथम्? प्रकृतावेवासमवेतार्थकत्वात्। 'एतद्वः पितरो वासः' इति जल्पन् पृथग् पृथगिति श्रवणात्। न च न्यायलभ्यो नायमूहः किन्तु वाचनिक एव, तथा चात्र स्यादेवेति वाच्यम्। तथा सति 'आयन्तु नः पितरः' इत्यादावप्यूहापत्तेः। तस्मादेतद्वः पितरो वास इत्यत्र बहुवचन नोह्यम्। किन्तु प्रकृतिभूतं पितृशब्दमात्रमिति केचित्तन्न, यत्र हि प्रकृतौ स्वारसिक्यसमवेतार्थकता, तत्र विकृतौ नोहः, यथा 'शुन्धंतां पितरः' इत्यत्र। अत्र तु पृथक् पृथगिति वचनात् प्रकृतौ बहुवचनस्यासमवेतार्थकता, तत्र तु विकृतावेकोद्दिष्टे बहुवचनस्योह एव, अन्यथा विभवतीनां साधुतैव न स्यात्। द्विधा हि विभक्तीनां साधुता, प्रकृते च त्वन्मते सौत्री साधुता नास्त्येव, प्रयोग साधुतापि तद्बहुवचनस्य पार्वण एव, वीप्साबलात्, नत्वेकोद्दिष्टे। तत्र वीप्सासहितवाक्याप्रवृत्तेरिति। तृतीया च विभक्तीनां साधुता नास्त्येवेत्यकामेनापि द्वयमप्यूह्यमेवेति। —द्वैतपरिशिष्टम्, पृ० १०३

एकोद्दिष्टे न्युब्जीकरणाकरणवैषम्यनिराकरणम्

न्युब्जीकरणं नाम अधोमुखीकरणम्। एकस्य पात्रस्योपरि अपरस्य पात्रस्य अधोमुखीकरणम् एव न्युब्जीकरणम्। 'संस्रवान्[६५]समवनीय' (पा० श्रा० सू०-२) इति पारस्करसूत्रेण संस्रवसमवनयनानन्तरं न्युब्जीकरणं भवतीति अर्थ आगतः। एतस्य व्याख्याने कर्काचार्याः[६६] न्युब्जीकरणमेकोद्दिष्टे निषेधयन्ति। तत्र तेषामाशयोऽयं यत् एकस्य पुरुषस्योद्देश्येन एकोद्दिष्टस्य क्रियमाणत्वे पात्रान्तराभावात् कस्य पात्रस्योपरि कस्य न्युब्जीकरणं भवेत्। न भवेदित्यर्थः। प्रकृते ग्रन्थे पारस्करवचनमुपजीव्य विप्रमिश्रः[६७] कर्काचार्यमतं न स्वीकरोति। तत्रायमाशयो यत्—पार्वणधर्माः एकोद्दिष्टे अतिदिश्यन्ते। प्रयोजनमुखेन तत्रोहो भवति। पार्वणे पात्रत्रितयसद्भावे संस्रवसमवनयनात्परं यन्न्युब्जीकरणं विहितमस्ति, एकोद्दिष्टे पात्रान्तराणामभावेऽपि तथा भवति, संस्रवसमवनयनाभावात् न्युब्जीकरणं न भवति इति न। न हि न्युब्जीकरणं समवनयनमाश्रित्य तिष्ठति, न वा तयोरंगांगिसम्बन्धः। तथा सति न्युब्जीकरणं वाधितं भवेत्। किन्तु संस्रवसमवनयनानन्तरं न्युब्जीकरणकालस्य उपदिष्टत्वात् कालमात्रद्योतकत्वेनायमवसरो वचनस्य। 'समवनीय' इत्यत्र क्त्वाल्यप्प्रत्यययोरियमेव आनन्तर्यद्योतकताविधायिनी शक्तिः। कल्पतरुकारः एवं वदति।

शूद्रकर्तृकसमन्त्रकश्राद्धकर्त्तव्यतावैषम्यनिराकरणम्

शूद्रस्य तुरीयवर्णत्वेन वेदमन्त्रेषु अधिकारो नास्तीति श्रुतम्। पिण्डदानकर्मणि अन्यत्र वा शूद्राणां मन्त्रवर्जितं कर्म भवति, किन्तु ब्राह्मणद्वारेण स मन्त्रपूर्वकं कर्त्तुं

---

६५। संस्रवः=शेषः, "संस्रवो हि परिशिष्टो भवतीति शतपथश्रुतेः"।
—निर्णयसिन्धुः—तृ० प०, पृ० ८६६

६६। द्रष्टव्यं—पार० गृ० सू०, श्रा० क०-२

६७। संस्रवान् समनीयेत्यत्र न्युब्जीकरणं लिखितम्। संस्रवान् समवनीयेत्यत्र द्वितीया श्रुत्या प्रतिपत्तिकर्मत्वावगतेः समवनयनन्युब्जीकरणयोः कालार्थसम्बन्धित्वेनांगांगिसम्बन्धित्वाभावात् संस्रवनिनयनाभावेऽपि एकोद्दिष्टे न्युब्जीकरणं भवत्येवेति तत्त्वम्। —द्र०, पा० टी०—ऊहालोकः ४

शक्नोतीति श्राद्धविवेके शूलपाणि[६८] निरूपयति। विप्रमिश्र[६९] एतन्मतं खण्डयति। तन्मते ब्राह्मणद्वारकसमन्त्रककर्मणि शूद्रोऽपि ब्राह्मणमुखोच्चारितं मन्त्रं शृणोति। किन्तु वेदमन्त्रश्रवणेन तस्य प्रायश्चित्तश्रुतौ तथा न कर्त्तव्यम्। शंकराचार्या[७०] अपि अपशूद्राधिकरणे (वेदान्तभाष्ये) तप्ततैलप्रायश्चित्तप्रसंग-मुट्टंक्य विमृष्टवन्तः। भामत्यां[७१] वाचस्पतिमिश्रा अपि तथा। अतः पौराणिकमन्त्राः शूद्रेण ग्राह्याः। कमलाकरः निर्णयसिन्धौ[७२] एतं विमृश्य हेमाद्रिधृतमरीचिवचनद्वारा प्रस्तौति। गौड़-श्रीदत्तप्रभृतयः यत्र यत्र शूद्रस्य मन्त्र-विषयकाधिकारत्वेन मन्त्रं कथयन्ति, तत्र तत्र पुराणमन्त्रा एव वक्तव्याः। न हि तन्मतानुसारं वैदिकमन्त्राः। विप्रमिश्र एतदेव प्रस्तौति।

---

६८। शूद्राणां मन्त्रवर्जितं कर्म—किन्तु विप्रेण स मन्त्रपूर्वकं कुर्यात्।
—द्र०, मूलभागः ऊहालोके

६९। ब्राह्मणेनापि मन्त्रपूर्वकं तत् न कार्यम्। यतः वेदमन्त्रश्रवणेनापि तस्य प्रायश्चित्तात्। ऊहालोकः—विप्रमिश्रः —द्र०, पा० टी० तत्र-११३

७०। द्र०, पा० टी० ऊहालोकः १२४

७१। तत्रैव।

७२। अत्र केचित्—वैदिकमन्त्रो विप्रस्य, पौराणस्तु शूद्रैः पठनीयश्च।

नहि वेदेष्वधिकारः क्वचिच्छूद्रस्य विद्यते।
पुराणेस्वधिकारो मे दर्शितो ब्राह्मणैरिह।

इति तत्रैव पाद्मोक्तेरित्याहुः। गौड़ा अप्येवम्। तन्न

नाध्येतव्यमिदं शास्त्रं वृषलस्य तु सन्निधौ।

इति कौर्मपुराणनिषेधेन वेदस्य दूरापास्तत्वात्। अध्येतव्यं ब्राह्मणेन वैश्येन क्षत्रियेण च।

श्रोतव्यमेव शूद्रेण नाध्येतव्यं कदाचन।
श्रौतं स्मार्त्तं च वै धर्मं प्रोक्तमस्मिन्नृपोत्तम॥
तस्माच्छूद्रैर्विना विप्रं न श्रोतव्यं कदाचन॥

इति तत्रैव पुराणाधिकारे भविष्योक्तेश्च। एतेन 'नाध्येतव्यम्' इति निषेधो मन्त्रेतरपुराणपर इति श्रीदत्तादिमतमपास्तम्। तेन पौराण-मन्त्राणामेव विप्रेण पाठो न वैदिकानामिति।
—निर्णयसिन्धुः तृ० प०, पृ० ७८५-७८६

न्युब्जीकरणस्थानवैषम्यनिराकरणम्

न्युब्जीकरणं नाम पात्रस्य अधोमुखीकरणम्। पात्रान्तरसद्भावे एतस्य सद्भावः सुकरः। पार्वणश्राद्धे पात्रान्तराणां पितृपितामह-प्रपितामहोद्देशकानां सत्त्वेन एकोद्दिष्टे पात्रैकसत्त्वात् पिधानीभूतपात्रान्तराभावात् न्युब्जीकरणासंभव-पक्षरूपपूर्वपक्षं खण्डयित्वा ग्रन्थकारः पात्रान्तराभावगतव्यतिरेकहेतुमस्वीकृत्य अङ्गाङ्गिसम्बन्धं च अनभ्युपगत्य कर्त्तव्यविधिचोदितत्वेन अनुष्ठातव्यत्वं न्युब्जी-करणस्येति सिद्धान्तितवान् प्रक्षेपे। किन्तु एतन्न्युब्जीकरणं कुत्र कर्त्तव्यमिति देशगतपृच्छायां सत्यां कर्त्तुर्वामपार्श्वे इति शूलपाणिसिद्धान्तो विप्रमिश्रेण पूर्व-पक्षत्वेनोपन्यस्तः। अत्र शूलपाणेरयमाशयो[७३] यत् श्राद्धीयं स्थानं दक्षिणाप्रवणं भवति। श्राद्धकर्त्ता दक्षिणां दिशं प्रति अभिमुखीभूय उपविशेत् पितृब्राह्मणाश्च दक्षिणदिशि उत्तरां दिशं मुखं कृत्वा उपविशन्ति। ब्राह्मणस्य हस्ते अर्घ्यं दीयते, तदनन्तरं तस्यैव दक्षिणहस्तपार्श्वे कर्त्तुरुत्तरस्यां दिशि न्युब्जीकरणं भवति। एतस्य कर्मणः कर्त्तृव्यापारेण साधयितव्यत्वात् तन्मूला निष्पत्तिरित्थम्। आख्यातेन कर्त्ता ज्ञायते। यतः कर्त्ता आख्यातवाच्य इति।

विप्रमिश्रः शूलपाणिमतं नांगीकरोति। वस्तुगत्या प्रक्रियादशायाम् उभयोः सिद्धान्तः अनुष्ठाने समः। किन्तु यया रीत्या प्रतिपाद्य शूलपाणिः सिद्धान्तयति, सा रीतिर्विप्रमिश्रेण न स्वीक्रियते। तथा सति उभयोः मीमांसकत्वं नश्यति। यतः—व्याकरणसिद्धान्तेन 'लः कर्मणिचाभावे चाकर्मकेभ्यः' (पा० सू० ३।४।६९) इति सूत्रे कर्त्ता आख्यातवाच्य इत्यभ्युपगतः। किन्तु मीमांसकानां मते कर्त्ता आक्षेपलभ्यः। धातोः क्रियारूपत्वेन सत्त्वात् दशलकारसाधारणत्वेन सह प्रतिलकारगताक्षेपेण कर्त्ता आक्षिप्तो भवति। अतः आक्षेपलभ्यः। कर्त्ता एकं कारकम्। क्रियान्वयित्वं कारकत्वम्। कर्त्तृकारकेण सह यथान्वयः अन्यैः कारकैः सहापि तथा क्रियाया अन्वयः। कर्त्तुराख्यातवाच्यत्वस्वीकारे

---

७३। पितृपात्रे निधायाथ न्युब्जमुत्तरतो न्यसेत्
इति वचनात् श्राद्धकर्त्तुः दक्षिणामुखेन प्राचीत्वस्य दिक्षणस्यां दिशि कल्पितत्वात् ब्राह्मणस्य हस्तेऽर्घ्यदानविधानेन ब्राह्मणस्यापि संनिहितत्वाद् ब्राह्मणदक्षिणहस्तपार्श्वे कर्त्तुरुत्तरस्यां दिशि कर्त्तव्यम्। आख्यातात् कर्त्तुरुपस्थितेः कर्त्तुर्वामपार्श्वे इति शूलपाणिः।

द्र०—मूलभागः श्राद्धप्रदीपस्य, श्राद्धविवेकस्य च।

कर्त्तृकारकं विहाय अन्यकारकैः सह तस्या अन्वयः न भवेत्। मीमांसाशास्त्रगतसिद्धान्तस्यानाङ्गीकृतत्वात् कर्त्ता आक्षेपलभ्यः तस्य वाच्यत्वाभावेन, आख्यातद्वारा तस्य केवलमुपस्थित्यभावः। अतः कर्त्तारमुपजीव्य तस्यैव वामपार्श्वे-न्युब्जीकरणं भवतीति शूलपाणिवचनं न मीमांसकत्वद्योतकमिति[७४]। वरमेतन्मन्तव्यम्[७५]—कर्त्ता पूजकः, पितरः पूज्याः, तत्प्रतिनिधिकाः ब्राह्मणाः, तथैव। पूज्य पूजकयोर्मध्ये दिशं प्राचीं प्रचक्षते इत्यभियुक्तोक्त्या कर्त्ता दक्षिणां दिशं मुखं कृत्वा उपविष्टोऽपि तस्य सम्मुखदिक् पूर्वा इति मन्तव्यम्। तस्यां दिशि ब्राह्मणः उपविशति। ब्राह्मणस्य दक्षिणहस्तपार्श्वे नाम स्वतः कर्त्तुरुत्तरस्यां दिशि पूज्यपूजकगतदिक्पक्षस्वीकारे नाम वस्तुगत्या पूर्वस्यां दिशि न्युब्जीकरणं भवति।[७६] कल्पतरुकारवचने उत्तरस्यां दिशि पूजकस्य उत्तरस्यां दिशि नामकर्त्तुरिति मन्तव्यम्।

श्रीदत्तः[७७] उत्तरतो न्यसेत् इति उत्तरस्थाने कर्त्तुः वामपार्श्वे इति उक्त्वा कर्त्तुराख्यातवाच्यत्वं स्वीकरोति पक्षान्तरेणेति विप्रमिश्रदिशा विविच्यते।

---

७४। तन्न जंजम्यमानवचनवत् क्रतुयुक्तपुरुषप्रतीतेराख्यातस्य च कर्त्तुरुवाचकत्वात्। —विप्रमिश्रः।

७५। न च ब्राह्मणस्योदंमुखत्वेन ब्राह्मणवामपार्श्वस्यैवोत्तरत्वमिति शंक्यम्। पितृकर्मणि दक्षिणोत्तरव्यवस्थाया दक्षिणस्याः प्राचीत्वावधिकत्वात्। विप्रमिश्रः—अधिकं तु द्रष्टव्यम्—बा० आ०, पा० टी० ३१

७६। उपदिष्टब्राह्मणस्य स उत्तरस्यां दिशि—इति कल्पतरुकारः।

७७। न्युब्जमधोमुखमुत्तरतो ब्राह्मणादुत्तरस्यां दिशीति कल्पतरुकृतः। तन्न। सा हि प्रचारभूमिवत्। सूत्र स्थापने चालनं निषिद्धं दुर्वारमनुष्ठानासौकर्यं स्यात्। तस्मादुत्तरपदं वामप्रदेशपरं तत्रापि मुख्यत्वात्। दक्षिणवैपरीत्याद् वा। शतपथश्रुतावपि 'तस्माद्यस्य दक्षिणतो लक्ष्मीर्भवति तं पुण्यलक्ष्मीकमाचक्षते।' उत्तरतः स्त्रियाः। उत्तरायतना हि स्त्रीत्युत्तरपदं वामार्थमिति। अतएव हलायुधीयश्राद्धन्याये 'उत्तरतो ब्राह्मणवासप्रदेशः' इति सिद्धवल्लिखितमिति।

—पितृभक्तिः—श्रीदत्तः, पृ० २८

पितृप्रतिनिधिस्थानीया ब्राह्मणाः पितृद्देशदत्तद्रव्यं गृह्णन्ति। तेषां ग्रहणं प्रतिपत्तिरिति कर्म। तत्तु उपयुक्तसंस्कारः। योगीश्वरवचनेन तत् सेव्यते। विप्रमिश्रः[७८] काकादिस्पर्शे न सेवितव्यमिति सिद्धान्तयति। शूलपाणिः[७९] मांसद्रव्यकमांसाष्टकाप्रभृतिश्राद्धे पितृपात्रे इत्थं देयं यथा शेषो न भवेत् इति ब्रूते, अनेन श्राद्धशेषमांसं न सेवितं भवति। विप्रमिश्र एतन्नांगीकरोति। तन्मतेन[८०] श्राद्धे शेषमांसमवश्यं भक्षितव्यम्। क्रत्वर्थहिंसावत् तत्र दोषो नास्ति। वैगुण्ये[८१] सति विष्णुस्मरणप्रायश्चितम्। आजीवनमांसभक्षणाभावपक्षे अथवा उपवासपक्षे आघ्राणमात्रं[८२] कर्त्तव्यम्। इति।

श्राद्धदीपे[८३] दिव्यसिंहः विप्रमिश्रमतं परमप्रमाणत्वेन स्वीकृत्य शूलपाणिमतखण्डनपुरःसरं प्रस्तौति। तन्मते श्राद्धशेषांगकमांसभक्षणं भवत्येव।[८४]

---

७८। 'प्रदक्षिणमनुव्रज्य भुंजीत पितृसेवितम्' (या०स्मृ० १।२४९) इति योगीश्वरवचने पुरोडाश ··· तुषानुपवपति (जै० सू० १।२०।९) इतिवत् परप्रयुक्तद्रव्योपजीवित्वेनाप्रयोजकत्वात्, द्वितीयानिर्देशेन प्रतिपत्तित्वात् च काकादिस्पर्शे शेषभक्षणलोपः। विप्रमिश्रः -द्र० पा० टी० —बाधा० आ० ६४।

७९। श्राद्धे तथा देयं यथा न अवशिष्येत्। अनेन मांसभक्षणं न भवति।

८०। प्रतिपत्तेः प्रतिपाद्यं प्रति प्रयोजकत्वाभावेऽपि धारणप्रयोजकत्वमेव। अतः श्राद्धशेषमांसस्य प्रतिपत्त्यर्थमवश्यभक्षणम् —विप्रमिश्रः।

८१। द्र० बाधा० आ०

८२। आघ्राय पितृसेवितम्—या० स्मृ०

८३। विप्रमिश्रास्तु यावज्जीवं कृतामिषवर्जनसंकल्पब्राह्मणनिमन्त्रणे हविष्यान्नेन वै मासं पायसेन च वत्सरमिति योगीश्वरवचनात् कांस्यभोजिन्यायेन यजमानेन निरामिषमेव श्राद्धं कर्त्तव्यम्। ब्रह्मचारित्रिदण्डिसन्न्यास्यामन्त्रणे तु "ब्राह्मणः काममश्नीयाच्छ्राद्धे व्रतमपीडयन्निति वचनात् तेन न भक्षणीयं मधुमासं चेत्याहुः"। —श्राद्धदीपः, पृ० १२५

८४। शेषभोजी न लिप्येत इति यजमानस्य श्राद्धशेषभोजनं विहितम्। तत्र सर्वतः समुपादाय ग्रासावरोधं प्राश्नीयादित्यापस्तम्बवचनान्मांसस्यापि भक्ष्यत्वम्। ग्रासावरार्थं ग्रासान्यूनम्। तत्र प्रतिपत्तित्वात् श्राद्धांगत्वेन विधेयत्वम्। तत्राभक्षणे श्राद्धवैगुण्यादवश्यमेव भक्षणम्। तथा चैकादश्यामुक्तम्

अस्य[८५] प्रभाटीकाकारः विप्रमिश्रसिद्धान्तं नांगीकुर्वन् शूलपाणिमतं समर्थयति ।

मातृसांवत्सरिकगतमतवैषम्यनिराकरणम्

बृहन्मनुवचनानुसारं[८६] यस्मिन् संवत्सरे पिता मृतः, तस्मिन् संवत्सरे मातृ-सांवत्सरिकं श्राद्धं न भवति । माता यस्मिन् संवत्सरे मृता, तस्मिन् संवत्सरे

---

—"आघ्राय पितृसेवितमिति । तेन चामावास्याष्टकादौ श्राद्धशेष-माहिताग्निना निरग्निना च निषेधस्य पुरुषार्थप्राप्तविषयत्वाद् विधेश्च क्रत्वर्थत्वाद् दीक्षितहोमाकरणवत् प्रतिषेधस्य विहितेतरविषयेत्वात् क्रत्वर्थहिंसावन्न दोषः । यत्तु प्रतिपत्तेः प्रतिपादकप्रयोजकत्वाभावेन तथा श्राद्धे देयं यथा शेषो न तिष्ठति । ततोऽमावास्यादौ मांसं न भक्षणीयमिति शूलपाणिनोक्तं तद्दूषितं विप्रमिश्रैः । पर्वसु मांसभक्षण निषेधस्यार्थकर्मत्वेन बलवत्त्वाच्छ्राद्धशेषभक्षणस्य प्रतिपत्तिरूपत्वेन दुर्बलत्वात् प्रतिपत्तिकर्मार्थिकर्मणो बोध्यबोधकत्वस्य बलाबलाधिकरणोक्तत्वाच्छेषमांसभक्षणं न कार्यमिति तु दीक्षिताः । एवं च महालयपक्षमध्ये यजमानस्य परदिनकर्त्तव्यश्राद्धांगनिरामिषभोजन पूर्वदिनश्राद्धांगशेषमांस-भक्षणयोरेकदिने सन्निपाते आमिषभक्षणस्यार्थकर्मत्वेन शेषभक्षणस्य प्रतिपत्तिरूपत्वेन बाध्यबाधकभावः । विप्रमिश्रैस्तु विहितनिरामिष-भोजनस्य कर्त्तृसंस्कारार्थस्य उपयोक्ष्यमाणसंस्कारस्य श्राद्धशेषभक्षणस्य उपयुक्तसंस्कारस्य विरोधे उपयुक्तस्य संस्कारादुपयोक्तव्यसंस्क्रिया । गरीयसी प्रशास्तुश्च तेन दृष्टं प्रयोजनम्" इति मैत्रावरुणदण्डाधिकरण-न्यायेन निरामिषभोजनमेव कर्त्तव्यमित्युक्तम् भुंजीत पितृसेवितमित्यत्र पुरोडाशकपालेन तुषानुपवपतीतिवत् पृथक्द्रव्योपजीवित्वेनाप्रयोजकत्वाद् द्वितीयानिर्देशेन प्रतिपत्तित्वाच्च । काकादिस्पर्शे शेषभक्षणलोपः, वैगुण्यसमाधानाय विष्णुस्मरणं कार्यम् ।

—श्राद्धदीपः, पृ० १३३-१३५

८५ । अत्र च प्रतिपत्तिकर्मणो गुणकर्मत्वेन अर्थकर्मणो दुर्बलमिति तात्पर्यम् । अतएव पर्वसु मांसभक्षणनिषेधस्यार्थकर्मत्वेन बलवत्त्वात् श्राद्धशेष-भक्षणस्य प्रतिपत्तिकर्मरूपगुणकर्मत्वेन दुर्बलत्वात् श्राद्धशेषमांसभक्षणं न कार्यमिति शूलपाणिमतमेव साधीयः तेनामावास्यादौ मांसभक्षणं न कार्यम् ।

—तत्रैव, पृ० १३३

८६ । पितर्युपरते पुत्रो मातुः श्राद्धान्निवर्त्तते ।
मातर्यपि वृत्तायां पितुः श्राद्धाद्धते समाः ।। —वृहन्मनुः

पितृसांवत्सरिकश्राद्धमात्रं कार्यम्। अत्र शंखवचनं[८७] पृष्ठपोषकं प्रमाणं भवति। किन्तु विप्रमिश्रः[८८] तत्कालीनम् उत्कलीयाचारं वीक्ष्य उभयोः मातृपित्रोः मरणसंवत्सरे उभयोः भवतीति सिद्धान्तितवान्। कृत्यकौमुदीकारः[८९] ततः पूर्ववर्त्तिकाले नैतत् सिद्धान्तयति, विप्रमिश्रस्य वाक्यार्थप्रक्रिया तेन सह सम्मेलतां नोपयाति। नञ् अव्ययस्य निकटवर्त्तिक्रियया सह सम्बन्धमसंस्थाप्य पूर्ववर्त्तिक्रियासंबन्धायोगात्। इति विषयो मृग्यो भवति। कृत्यकौमुदीकार-सिद्धान्तं वीक्ष्य स्वसिद्धान्तं परिवर्त्तयन् विकल्पपक्षमुपन्यस्यति। किन्तु गदाधर-राजगुरोः[९०] पिता नीलाम्बरराजगुरुः कृत्यकौमुदीपक्षं समर्थयति, विप्रमिश्रपक्षं

---

८७। मातर्यपि च वृत्तायां श्राद्धं कुर्वीत पैतृकम्।
तस्या न वत्सरं कुर्यात् प्रेते पितरि च क्वचित्।
—कालसारधृतं, पृ०, २३८

८८। एवं पितर्युपरते ··· समाः। इति बृहन्मनुवचनात् अन्वष्टकामावास्यादीनां तद्वर्षे निवृत्तिः। ऋते समा इति वचनादुभयोः सांवत्सरिकं तु कर्त्तव्यम्। केचित्तु ऋते समा इति सन्निधानात् पित्रैवान्वयं विधाय मातृसांवत्सरिकं न कर्त्तव्यमित्याहुः। अस्मद्देशेषु निर्विगानमातृसांवत्सरिकानुष्ठानादसंबद्धव्यवायाभावाद् अनुषंगाधिकरणन्यायसंभवात् उभयत्रान्वय एवेति तत्त्वम्। कौमुदीकारस्तु मातर्यपि च ··· पितरि क्वचित्। अत्र उपरिवत्सरपदसत्वेन प्रायः पाठात् पैतृकं सांवत्सरिकम्। नञश्च क्रियापदसत्वेनोत्तरवाक्येनैव सम्बन्धः। एतद्वाक्यस्य प्रामाण्ये मातृसांवत्सरिके विकल्पः। —विप्रमिश्रः

८९। ऋते समा इति सांवत्सरिकं श्राद्धं वर्जयित्वा इदन्तु सन्निहितवाक्येनैव संबध्यते। न तु पूर्ववाक्येनापीति। तदुक्तं स्मृत्यन्तरे ··· संवत्सरम्-सांवत्सरिकम्। पूर्ववाक्ये नञो न संबन्धः। कुर्यादिति पुनरुपादानात्
—कृत्यकौमुदी, बृहस्पतिः।

९०। पितर्युपरते पुत्रो मातुः श्राद्धान्निवर्त्तते।
मातर्यपि च वृत्तायां पितुः श्राद्धादृते समाः॥
समाः सांवत्सरिकं वर्जयित्वा इत्यर्थः। इदं सन्निहितवाक्येन संबध्यते। न पूर्ववाक्येनापि।
मातर्यपि च वृत्तायां श्राद्धं कुर्वीत पैतृकम्।
तस्या न वत्सरं कुर्यात् प्रेते पितरि च क्वचित्॥
इति शंखोक्तेरिति कृत्यकौमुदीकारादयः। कुर्यादिति पुनरुपादानात् नञः पूर्ववाक्ये सम्बन्धशंका नास्त्येवेति तन्मतं समीचीनम्। तस्यां

खण्डयति इति कालसारे गदाधरेण विवृतम्। अनेन आचारः प्रमाणं भवति अपि गदाधरसिद्धान्तो नाम कृत्यकौमुदीकारबृहस्पतिसिद्धान्तपक्षः इदानीमुत्कलेषु चलति, नाम पितृमरणाब्दे मातृसांवत्सरिकश्राद्धं न भवति, मातृमरणाब्दे पितृसांवत्सरिकमात्रं भवति।

श्राद्धदीपे[६१] दिव्यसिंहमहापात्रः विप्रमिश्रं समर्थयन् तन्मतमुपस्थापयति। तस्य प्रभाटीकाकारः एतद् विमृश्य गदाधरस्यापि सिद्धान्तमुपन्यस्य विप्रमिश्रस्य आशयं प्रकाशितवान्। अन्यत् सर्वं मत्कृतरश्मिटिपण्यां द्रष्टव्यम्। विस्तरभिया विरम्यते। भूमिका समाप्ता। कर्मणानेन विप्रमिश्रास्तृप्यन्तु इति शम्। ●

---

जनकमरणाब्दे। मातृवार्षिकमपि न कार्यम्। मातृमरणेऽब्दे तु पितुर्वार्षिकश्राद्धमात्रं कार्यम्। इतीयानेव भेदः। अमावास्यादिनित्यश्राद्धानि उभयोरप्यब्दे न कार्याणि। इति सिद्धान्तः। अत्र विप्रमिश्रै 'ऋते समाः' इत्युभयत्रापि योजयित्वा अस्मद्देशे निर्विगानं मातृसांवत्सरिकानुष्ठानाद्यसंबन्धव्यवायाभावात्तदनुषंगाधिकरणन्यायसंभवादुभयोः संवत्सरे उभये सांवत्सरिकं कार्यमिति उल्लिखितं तन्न विचारसहम् इत्यस्मत्पितृचरणाः। तथा हि—अनुषंगाधिकरणेषु असंबद्धव्यवायाभावो नानुषंगनिमित्तम्। किन्तु आकांक्षा सद्भाव एव तन्निमित्तमिति विचारितम्। 'पितर्युपरत' इति वाक्ये आकांक्षादिविरहान्नानुषंगप्रसंगोऽपि। अनेनैव स्वारस्येन "मातर्यपि चेति वाक्यस्य प्रामाण्ये मातृसांवत्सरिके विकल्प इति तैरप्युक्तम्। शंखस्मृतौ तद्वाक्यस्योपालंभादप्रामाण्यशंका दुरापास्तैव। यच्चोक्तं विकल्प इति तत्रापि द्रष्टव्यं। किं वाक्यै विरोधाद् विकल्प इति कल्पनीयम्? अथवा स्मृत्याचारयोरिति। तत्र न प्रथमः। उभयो र्वाक्ययोरपि संवत्सरे मातृसांवत्सरिकानुष्ठानाभावस्य स्पष्टमभिहितत्वेन विरोधाभावात्। तस्माद् द्वितीयपक्ष आश्रयणीयः। सोप्ययुक्तः। तथाचारस्य कृत्यकौमुद्यादिषु अलिखितत्वेन अनादृतत्वात्। स्मृत्यपेक्षपाद्यन्तरितप्रामाण्येनाचारस्य दुर्बलत्वमिति सिद्धान्ताच्चेति अलमतिविस्तरेण। —कालसारः, पृ० २३८-२३९

६१। अत्र संबन्धव्यवायाभावादनुषंगाधिकरणन्यायसंभवात्। 'ऋते समा' इत्युभयत्रान्वयः। उभयोः सांवत्सरिकं कर्त्तव्यमित्यर्थः। अतएव अस्मद्देशे निर्विशेषं मातृसांवत्सरिकमप्युनुतिष्ठतीति। विप्रमिश्राः। मातर्यपि च … क्वचित्। एतद्वाक्यप्रामाण्ये मातृसांवत्सरिके विकल्पः।
—श्राद्धदीपः, पृ० ३६-३

●●●

Last Folio of Palmleaf Sanskrit Manuscript of



*ŚRĀDDHAPRADĪPAḤ*
available at Śrī Sadāśiva Kendrīya Sanskṛt Vidyāpīth. PURI
Collection No. 35

—विप्रमिश्रकृतः

# श्राद्धप्रदीपः

( रश्मिसहितः )

जैमिनिं शबरस्वामिभट्टपादावनन्तरम् ।
नमामो वेदमीमांसासम्प्रदायप्रवर्तकान्[1] ।।
पौण्डरीकाग्निचिन्मिश्रश्रीनृसिंहगुरोः पदे ।
सम्राजोऽद्य नमस्यामो मीमांसासूक्ष्मदर्शिनः[2] ।।
जैमिनेर्मतमालोच्य विप्रमिश्रेण धीमता ।
श्राद्धप्रदीपः क्रियते प्रीतये मुरवैरिणः[3] ।।

अथ किं श्राद्धं नाम । अत्र कल्पतरुः (पृ० ४)—

पितॄनुद्दिश्य द्रव्यत्यागो ब्राह्मणस्वीकारपर्यन्तः श्राद्धम् ।[4]

---

( रश्मिः )

१ । धर्मशास्त्रनिबन्धे क्रियमाणे मीमांसाचार्याणां स्तुतिं प्रथममाचरन् अत्र ग्रन्थे मीमांसायाः प्राधान्यं सूचयति ग्रन्थकारः । जैमिनिः सूत्रकारः । शबरो भाष्यकारः । भट्टः कुमारिलभट्टः ।

२ । नृसिंहमिश्रोऽस्य गुरुः । स च नित्याचारप्रदीपादिप्रदीपग्रन्थमालानां कर्तुर्नृसिंहमिश्रादन्यः । अयं नृसिंहोऽग्निचिदुपाधिना, स च प्रदीपग्रन्थमालानां कर्ता वाजपेयिसंज्ञया निर्दिश्यते इत्येतदप्यनयोर्भेदबीजम् । अत्र गुरावैकवचनम् आत्मनि च बहुवचनम् अयुक्तं कथं प्रयुक्तमिति शंकायाः सपरिवारः शिष्य-प्रशिष्यादिसहितो वा आत्मा अत्रोपन्यस्तः इति समाधानम् ।

३ । विवेकिना प्रदर्शितो मार्ग इतरैर्निःसंशयमनुसरणीय इति धीमता इति विशेषणमुपन्यस्तम् ।

यत्करोषि यदश्नासि यज्जुहोसि ददासि यत् ।
यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम् ।। (भ० गी० ९-२७)

इति भगवन्निर्देशेन ग्रन्थनिर्माणरूपं कर्म मुरवैरिणि समर्प्यते । अथवा यथाशास्त्र-निरूपणेन धर्मरक्षया भगवतः स्वतः प्रीतिर्जायत इति ।

४ । अत्र श्राद्धस्वरूपं निरूपयिष्यन् किं श्राद्धं नामेति प्रश्नमुत्थापयन् तदुत्तरं स्वयमेवाभिधत्ते कल्पतरुक्तलक्षणोपन्यासेन । कल्पतरुकारश्च श्राद्ध-

**विप्रस्वीकारपर्यन्तस्त्यागो द्रव्यस्य यः पितॄन् ।**
**उद्दिश्य मुख्यं श्राद्धं तत्तदंगमितरत् स्मृतम्[५] ।।**

**एवं सति दैविकश्राद्धेऽव्याप्तिः । न च तस्यालक्ष्यत्वम् । दैविकं दशमं स्मृतमिति विभागा[६]नुपपत्तेः ।**

---

लक्षणं करिष्यन् आपस्तम्बवचनं सोपपत्तिकमुद्धरति । यथा—अथैतन्मनुः श्राद्धशब्दं कर्म प्रोवाच । प्रजानिःश्रेयसार्थं च । तत्र पितरो देवता ब्राह्मणस्त्वाहवनीयार्थे । मासि मासि कार्यम् । अपरपक्षस्यापराह्णः श्रेयानिति (आप० ध० सू० २-१६ । १-४) श्राद्धशब्दं श्राद्धमिति शब्दो वाचको यस्य तत्तथा । ब्राह्मणस्त्वाहवनीयार्थे आहवनीयवद्व्यक्तद्रव्यप्रतिपत्तिस्थानत्वेन । एतेन पितॄनुद्दिश्य द्रव्यत्यागो ब्राह्मणस्वीकारपर्यन्तं श्राद्धस्वरूपं प्रधानमित्यर्थादुक्तं भवति । (कृत्यकल्पतरु—श्राद्धकाण्डे पृ० ४)

मनुश्च—कुर्यादहरहः श्राद्धमन्नाद्येनोदकेन वा ।
पयोमूलफलैर्वापि पितृभिः प्रीतिमावहन् ।। (३-८२)
पितृयज्ञं च निर्वर्त्य विप्रश्चेन्दुक्षयेऽग्निमान् ।
पिण्डान्वाहार्यकं श्राद्धं कुर्यात् मासानुमासिकम् ।। (३-१२२)

इत्यादिना श्राद्धं कृतिसाध्यत्वेन कर्तृविधेयत्वेन च कर्मेति सूचयामास । तथा—
प्रथिता प्रेतकृत्यैषा पित्र्यं नाम विधुक्षये ।
तस्मिन् युक्तस्यैति नित्यं प्रेतकृत्यैव लौकिकी ।। (३-१२७)

इत्यत्र लौकिकीस्मार्तिकीप्रेतकृत्या पित्रुपकारार्था क्रिया गुणवत्पुत्रपौत्रधनादिफलप्रबन्धरूपा । एति कर्त्तारमुपतिष्ठते (मन्वर्थमुक्तावली) इत्युक्त्या श्राद्धं कर्मात्मकं प्रजानिःश्रेयसार्थकं चेति मनोरभिप्रायमापस्तम्बो जग्राह ।

उज्ज्वलाकारस्तु—अत्र मनुःवैवस्वतमनुरिति व्याचख्यौ । तन्न रोचते । वैवस्वतमनोः ग्रन्थकर्तृत्वाभावात् । धर्मशास्त्रपरम्पराप्रसिद्धे स्वायम्भुवे मनौ वर्तमाने तदुक्तिषु विषयवस्तुनि च प्रतिपादिते सति अप्रासंगिकस्य वैवस्वतः कीर्त्तनं सर्वथा प्रीतिकरं न भवति ।

५ । विप्रस्वीकारेति वचनं मुद्रितमनुस्मृतिषु न लक्ष्यते । किन्तु कालसारकारादिभिः परवर्तिभिः उद्ध्रियते । (पृ० २६५) अत्र श्लोके उक्तं मुख्यपदं कल्पतरुलक्षणधृतप्रधानपदं च एकार्थमेव ।

६ । दैविकश्राद्धं हि विश्वामित्रेण दशमस्थाने दर्शितम् । यथा—
नित्यं नैमित्तिकं काम्यं वृद्धिश्राद्धं सपिण्डनम् ।
पार्वणं चेति विज्ञेयं गौष्ठ्यां शुद्ध्यर्थमष्टमम् ।।

पिण्डपितृयज्ञ-हिरण्यदान-विष्टरब्राह्मणकश्राद्धाव्याप्तेश्च[७]। न च पिण्डपितृयज्ञस्याश्राद्धत्वम्। तच्छ्राद्धमितरदमावास्याया–(४-४) मिति[८] गोभिलविरोधात् इति। तदसंगतम्[९]। देवानामपि पितृलोकसम्बन्धेन पितृत्वोक्तेः।

वसुरुद्रादितिसुताः पितरः श्राद्धदेवताः।

(या० स्मृ० १-२६०) इति स्मरणात्।

एते वै पितरो देवा देवाश्च पितरः पुनः।

इति मन्त्रलिंगाच्च नाप्यव्याप्तिः[१०]। हिरण्यदानस्यापि श्राद्धत्वात्।

---

कर्माङ्गं नवमं प्रोक्तं दैविकं दशमं स्मृतम्।
यात्रास्वेकादशं प्रोक्तं पुष्ट्यर्थं द्वादशं स्मृतम्॥

(स्मृतिचन्द्रिका–श्राद्धकाण्डे पृ० ४) इति। अत्र–

देवानुद्दिश्य यच्छ्राद्धं तत्तु दैविकमुच्यते।
हविष्येण विशिष्टेन सप्तम्यादिषु यत्नतः॥ इति

—मन्वर्थमुक्तावलीधृत (३-२५४) भविष्यपुराणोक्त्या देवानुद्दिश्य विहितं दैविकमिति दैविकलक्षणे सिद्धे तत्र पितृद्देश्यकताभावेन श्राद्धलक्षणाव्याप्तिरिति पूर्वपक्षस्याशयः।

७। पिण्डदानमात्रविधेये पिण्डपितृयज्ञे ब्राह्मणस्वीकाराभावात् लक्षणासंगतिः। हिरण्यस्य भोज्यद्रव्यत्वाभावेन श्राद्धेतिकर्तव्यताविरहात् दानस्य वा परस्वत्वापत्तिफलकत्वेन सम्प्रदानोद्देशेन सिद्धत्वात् पितृद्देश्यकत्वासिद्धे लक्षणाव्याप्तिः। विष्टरब्राह्मणकश्राद्धे च सत्यपि पितृद्देश्यकत्वे विष्टरस्याचेतनत्वेन द्रव्यस्वीकारासम्भवाद् विप्रस्वीकारपर्यन्त इति लक्षणासङ्गतेरव्याप्तिरिति पूर्वपक्षस्याशयः।

८। पिण्डपितृयज्ञस्य अश्राद्धत्वं निराकुर्वन् पूर्वपक्षं द्रढयति न चेत्यादिना। अन्वष्टक्यस्थालीपाकेन पिण्डपितृयज्ञो व्याख्यातः। अमावास्यायां तच्छ्राद्धमितरदन्वाहार्यम् (४-४-१-२) इति गोभिलगृह्यसूत्रेण पिण्डपितृयज्ञस्य श्राद्धत्वं सिद्धमिति तत्राश्राद्धत्वाशंका न कार्या।

९। अतएव अव्याप्तिदोषग्रस्तत्वेन पूर्वपक्षदर्शिता लक्षणस्य या अयुक्तता सा तदसंगतमित्यनेन न समीचीनेति ग्रन्थकारो न्यवारयत्।

१०। तत्रादौ दैविकश्राद्धे लक्षणसंगतिं दर्शयति देवानामपीत्यादिना। याज्ञवल्क्येन (१-२६९)–

वसुरुद्रादितिसुताः पितरः श्राद्धदेवताः।
प्रीणयन्ति मनुष्याणां पितॄन् श्राद्धेन तर्पिताः॥

**हिरण्यश्राद्धस्य यथोक्तलक्षणसत्त्वात्[११] । पिण्डपितृयज्ञस्या[१२](पि) श्राद्धत्वात् ।**

---

इत्यनेन वस्वादिदेवानां पितृत्वोक्तेः—एते वै इति मन्त्रेणापि लिंगेन शब्दसामर्थ्यात्मकेन देवेषु पितृत्वस्य पितृषु च देवत्वस्य निर्देशात् पितृदेवयोरभेदप्रतिपादनात् देवानुद्दिश्य विधीयमाने दैविकश्राद्धेऽपि पित्रुद्देश्यकत्वमस्त्येवेति दैविकश्राद्धे कल्पतरूक्तश्राद्धलक्षणाव्याप्तिर्नास्ति ।

इत्येते पितरो देवा देवाश्च पितरः पुनः ।
अन्योऽन्यपितरो ह्येते देवाश्च पितरश्च ह ।। (२-३-९-३८)

इति ब्रह्माण्डपुराणवचनेन पितृदेवतयोरन्योन्यपितृत्वसिद्ध्या देवेष्वपि पितृत्वमस्तीति सर्वमनाकुलम् । पितृदेवतयोरभेदात् वस्वादिदेवतोद्देश्यमपि पित्रुद्देश्यमिति श्राद्धलक्षणाव्याप्त्यभाव इति सारः ।

११ । हिरण्यश्राद्धे श्राद्धलक्षणाव्याप्तिं वारयति ।

दर्शे रविग्रहे पित्रोः प्रत्याब्दिकमुपस्थितम् ।
अन्नेनासम्भवे हेम्ना कुर्यादामेन वा सुतः ।।

इति कालसारधृतगोभिलवचनेन हिरण्यश्राद्धे विहिते पित्रुद्देश्यकद्रव्यत्यागस्य ब्राह्मणस्वीकारस्य च सत्त्वात् लक्षणासंगतिर्नास्ति । यद्यपि तत्र पार्वणश्राद्धादि इतिकर्तव्यता नास्ति तथापि हिरण्यदानस्य विहितत्वेन हिरण्यदानेतिकर्तव्यता एव श्राद्धेतिकर्तव्यतेति सर्वथा तत्राश्राद्धत्वशंका न कार्येति भावः ।

१२ । पिण्डपितृयज्ञस्य श्राद्धत्वं प्रतिपादयति ।

पितृयज्ञं तु निर्वर्त्य विप्रश्चेन्दुक्षयेऽग्निमान् ।
पिण्डान्वाहार्यकं श्राद्धं कुर्यान् मासानुमासिकम् ।। (३-१२२)

इति वचनेन मनुना पितृयज्ञश्राद्धयोर्भेदेन पौर्वापर्यविधेयत्वेन च निर्देशात् तथा साग्निरमावास्यायां पिण्डपितृयज्ञाख्यं कर्म कृत्वा श्राद्धं कुर्यात् (३-१२२) इति कुल्लूकेन मन्वर्थमुक्तावल्यां पिण्डपितृयज्ञ-श्राद्धयोर्भेदेनोपन्यस्तत्वात् पिण्डपितृयज्ञस्य स्वतन्त्रश्राद्धत्वम् । पारस्कराचार्योऽपि पिण्डपितृयज्ञवदुपचार इति सूत्रे भेदनिर्देशकवतिप्रत्ययेन श्राद्धपिण्डपितृयज्ञयोर्भेदमाह । तेन पिण्डपितृयज्ञस्य श्राद्धत्वमेव ।

पिण्डपितृयज्ञस्याश्राद्धत्वात् इति मातृकाद्वये पाठो यद्यपि लभ्यते तथापि निखिलस्मृतिसागरे गृह्यतरंगिणीषु च पिण्डपितृयज्ञस्य श्राद्धत्वं निश्चिततया अङ्गीकृतमिति तत्र पिण्डपितृयज्ञस्यापि श्राद्धत्वादिति पाठोऽवश्यमादरणीयः ।

अन्यथा[१३]—

न दर्शेन विना श्राद्धमाहिताग्नेर्द्विजन्मनः । (३-२८२)

इति मनुवचनेन श्राद्धस्य पिण्डपितृयज्ञस्यांगतापत्तेः । तथा च पितृयज्ञः

---

पिण्डपितृयज्ञस्य श्राद्धत्वमालोचितं वीरमित्रोदये (संस्कारप्रकाशे पृ० १०७) गोभिलगृह्यव्याख्याने—अमावास्यायां तच्छ्राद्धम् । अमावस्यायां दर्शे तत् पिण्डपितृयज्ञाख्यं श्राद्धं कर्तव्यमिति शेषः इत्यादिना, तथा श्राद्धप्रकाशेपि पिण्डपितृयज्ञस्तु श्राद्धमेव (पृ० ४) इति एवकारेण दृढ़तया मित्रमिश्रेणापि पिण्डपितृयज्ञस्य श्राद्धत्वं दर्शितम् । पिण्डपितृयज्ञस्याश्राद्धत्वादिति पाठे कल्पतरूक्तदिशा पितृद्देश्यकत्यागस्य ब्राह्मणस्वीकारपर्यन्ततया श्राद्धलक्षणे सिद्धे पिण्डपितृयज्ञे ब्राह्मणस्वीकाराभावेनापि तत्र लक्षणाव्याप्तिर्नास्ति तस्याश्राद्धत्वात् । अश्राद्धत्वमत्र गौणश्राद्धत्वम् ।

तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता ।
अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्तिताः ।।

इत्यभियुक्तोक्त्या न श्राद्धमश्राद्धं तस्य भावः, अश्राद्धत्वमिति नञा तदल्पतया तस्य गौणश्राद्धत्वेन स्वीकारो घटते । प्रकृते ग्रन्थकारोऽपि तदंर्गामतरत् स्मृतमित्यादिना एतन्मतं पोषयति । किन्तु पिण्डपितृयज्ञ-हिरण्यदान-विष्टर-ब्राह्मणश्राद्धानामव्यापकतया पूर्वपक्षेण एकस्यां कोटौ स्थापितत्वात् हिरण्यदानस्य यथोक्तलक्षणसत्त्वादित्यादिना साधनात्परं पिण्डपितृयज्ञस्यापि श्राद्धत्वमित्यात्मकं विवरणं ग्रन्थकर्तुराशयीभूतं स्यात् इति धिया अत्र अपि इति पाठो युक्तार्थत्वेनाभिमतः ।

अपिसम्भावनाप्रश्नशंकागर्हासमुच्चये ।
तथा युक्तपदार्थेषु कामचारक्रियासु च ।। (१८८-३)

इति विश्वे अपिपदस्य युक्तार्थत्वेनोक्तेः ।

१३ । यदि पिण्डपितृयज्ञस्य श्राद्धत्वं न स्यात् तर्हि—

न पैतृयज्ञियो होमो लौकिकेऽग्नौ विधीयते ।
न दर्शेन विना श्राद्धमाहिताग्ने द्विजन्मनः ।। (३-२८२)

इति मनुवचनेन पिण्डपितृयज्ञः दर्शे विहितस्य श्राद्धस्य अङ्गं भवेत् । न चात्र इष्टापत्तिः । यतः पितृयज्ञः स्वकालत्वात् अनङ्गं स्यात् (४-४-८) इति

स्वकालत्वादनंगं स्यात् (४-४-८-११) इति चतुर्थाधिकरणबाधः। साग्नि-क्रियमाणस्यापरपक्षश्राद्धस्य दर्शकाल एव इति साग्नेरितरदिनेऽप्यपरपक्ष-श्राद्धं न भवतीत्युक्तं तन्त्ररत्ने[१४]। विष्टरब्राह्मणकश्राद्धस्यापि पश्चाद् ब्राह्मणस्वीकारान्न तत्राव्याप्तिः[१५]। भवतु प्रतिनिधिब्राह्मणकश्राद्धे श्राद्धशब्दो

---

सूत्रेण स्वयं जैमिनिमुनिः पितृयज्ञस्य श्राद्धांगत्वं नानुमनुते। अयं विषयो जैमिनीयन्यायमालायां चतुर्थाधिकरणे—

क्रत्वंगं स्यान्न वा पिण्डपितृयज्ञः क्रतौ हि सः।
अमावास्योक्तितो मैवं तत्कालोक्तेः पुमर्थता ॥

अत्र विस्तरो यथा—इदमाम्नायते—अमावास्यायामपराह्णे पिण्डपितृयज्ञेन चरन्तीति। अत्र अमावास्याशब्दवाच्ये कर्मणि विधीयमानत्वादयं पिण्डपितृ-यज्ञः क्रत्वंगम् इति पूर्वपक्षः। सिद्धान्तोय था—अमावास्याशब्दस्य कालवाचित्वात् कर्मणि त्वयं शब्दो लाक्षणिकः। न च वाक्येन क्रत्वंगत्वाभावेऽपि प्रकरणेन तद् भवेदिति वाच्यम्।

किं च पिण्डपितृयज्ञपद्धतौ—पिण्डपितृयज्ञो दशाङ्गमिति कर्मादयः सर्वे भाष्यकाराः, नेति सम्प्रदाय इति त्रिकाण्डमण्डनः —१-५, ६

चिन्नस्वामिशास्त्रिचरणा अपि—अनङ्गमेव तु युक्तम्। अन्यथा दर्श-विकृतिष्वतिदेशेन प्राप्तिः केन वार्येतेति। यज्ञतत्त्वप्रकाशः —पृ० ३६

१४। पिण्डपितृयज्ञस्य अपरपक्ष (दर्श) श्राद्धस्य च साग्निकर्तृकत्वेन दर्शापराह्णकाले विहितत्वात् साग्नेः अमावास्येतरदिने श्राद्धं न भवति। य एवं विद्वान् अमावास्यां यजते इत्यत्र अमावास्याशब्दः न कर्मवाची अपितु कालवाची इति एतत् स्पष्टमुक्तम् तन्त्ररत्ने (पृ० २१४, २१५)। यथा—अमावास्यायामपराह्ण इति समानाधिकरण्यमवगम्यते। तच्च कालवचनत्वे सत्युपपद्यते। इतरथा इति कालवचनो न स्यात् तथा सत्यमावास्याशब्देनाग्ने-यादीन्युच्चेरन्। तेषामङ्गत्वेन पिण्डपितृयज्ञो विधीयते। तस्य च पितृयज्ञ-स्यापराह्णकालोऽगत्वेन विधीयत इत्यनुषङ्ग इत्यनेन द्वारेण वैयधिकरणात् सामानाधिकरण्यं कीदृशमपि स्यात् अयुक्तं स्यादित्यर्थः।

१५। विष्टरब्राह्मणश्राद्धे यद्यपि विष्टरस्य द्रव्यस्वीकारो न सम्भवति तथापि श्राद्धसमाप्तौ ब्राह्मणेनैव श्राद्धीयद्रव्यस्य गृहीतत्वेन ब्राह्मणस्वीकारो वर्तते। तेन तत्र विष्टरब्राह्मणकश्राद्धे पित्रुद्देश्येन द्रव्यत्यागस्य ब्राह्मणस्वीकार-पर्यन्तता सुतरामस्तीति श्राद्धेऽपि लक्षणं सम्पूर्णं समन्वेति। अतस्तत्र लक्षणा-

गौणः[१६]। अन्यथा पौर्णमास्यां क्रियमाणश्चातुर्मास्यान्तर्गतमहापितृयज्ञोऽपि श्राद्धं स्यादिति।

---

व्याप्तिशङ्का न कार्या इति सारः। विष्टरब्राह्मणकश्राद्धेऽपि पश्चाद् ब्राह्मणस्वीकाराल्लक्षणसमन्वय इत्युक्तं कालसारे (पृ० २९५)।

१६। ब्राह्मणस्वीकारपर्यन्तत्वेन पितृद्देश्यकत्यागस्य श्राद्धलक्षणत्वेनोक्तत्वात् स्वीकारकर्मरूपिणि यागे द्रव्यदेवतावत् स्वीकर्तव्यस्वीकर्त्रोर्गुणत्वम्। यागे यथा देवता इतिकर्तव्यतायां द्रव्यं स्वीकरोति, तथा प्रकृते स्वीकारात्मके यागे ब्राह्मणः भोज्यद्रव्यं स्वीकरोति। अतः भोज्यद्रव्यस्य ब्राह्मणस्य चोभयोरङ्गत्वेन गुणत्वम्। प्रारब्धस्य कर्मणोऽगापचारे प्रतिनिधिरिति विद्वदुक्त्या श्राद्धे कर्मणि विहितस्य अङ्गात्मकस्य ब्राह्मणस्याभावे प्रतिनिधित्वेन विष्टरब्राह्मणस्य ग्रहणं भवति। एतादृगुपपत्तौ श्राद्धशब्दो गौण इति ग्रन्थकर्तुरभिप्रायः। अतः विष्टरब्राह्मणकश्राद्धस्य साक्षाच्छ्राद्धलक्षणाव्याप्त्या गौणश्राद्धत्वे सत्यपि नैवाश्राद्धत्वमिति भावः। गौणश्राद्धस्यापि श्राद्धत्वात्। अन्यथा नाम पिण्डपितृयज्ञस्य दर्शश्राद्धाङ्गत्वस्वीकारे पौर्णमास्यां विहितायाश्चातुर्मास्येष्टेर्मध्यपतितस्य महापितृयज्ञस्यापि श्राद्धत्वं सम्भवेत्। किन्तु नैतत् कस्यापि सम्मतम्।

तद् इत्थम्—वैश्वदेव-वरुणप्रधास-साकमेध-शुनासीरीया इति चत्वारि पर्वाणि चातुर्मास्येष्टौ भवन्ति। वरुणप्रघाससमाप्तेश्चतुर्मासानन्तरं कार्तिकमार्गशीर्षयोः पूर्णिमायां साकमेधेष्टिः क्रियते। अत्राह आपस्तम्बः (श्रौ० सू० ८-९-२)—अथ पौर्णमास्या उपवसथेऽग्नयेऽनीकवते पुरोडाशमष्टाकपालं निर्वपति साकं सूर्येणोद्यता इति। अत्र साकमेधपर्वणोऽङ्गत्वेन महापितृयज्ञः क्रियते। किन्तु पूर्वोक्तस्य पिण्डपितृयज्ञस्य स्वतन्त्रत्वेन न दर्शेष्ट्यंगत्वं यथा, तथा न महापितृयज्ञस्य स्वतन्त्रत्वं तदङ्गत्वोक्त्या। अतः पिण्डपितृयज्ञमहापितृयज्ञयोर्नैकरूपत्वम्। यथा—महापितृयज्ञे पिण्डपितृयज्ञस्य सर्वाणि अनुष्ठानानि भवन्ति। महापितृयज्ञे सोमः पितृमान्, पितरो बर्हिषदः, पितरोऽग्निष्वात्ता इति एता देवताः। आम्यः षट्कपालपुरोडाशः, धानाः, निवान्याया गोः पयसा मिश्रितानि भर्जितयवचूर्णानि च दीयन्ते। अत्र आ स्वधा इति आश्रावणम्। अस्तु स्वधा इति प्रत्याश्रावणम्। सोमं पितृमन्तं यज इति प्रैषः। पिण्डपितृयज्ञीये ये यजामहे इति स्थाने ये स्वधामहे इति, वौ उषट् इति स्थाने स्वधा ३ नमः इति च पठ्यन्ते। इति अनयोः भेदबीजम्।

**एतच्च[१७] श्राद्धं दानमेव। ननु° स्वस्वत्वध्वंसपरस्वत्वापत्तिफलकत्यागस्य दानत्वात् गयाश्राद्धादौ तदभावात् कथं दानतेति चेत्, परस्वत्वा[१८]पत्तेः**

---

१७। एतत्—कल्पतरुलक्षणलक्षितं श्राद्धं स्वरूपतः दानं दानस्वरूपमेवेत्यर्थः। सर्वत्रददातिश्रुतिरेवात्र दानरूपत्वे निदानम्। तद् यथा—श्राद्धप्रकाशे (पृ० ३) (वीरमित्रोदये)

बृहस्पतिः — संस्कृतं व्यञ्जनाढ्यं च पयोमधुघृतान्वितम्।
श्रद्धया दीयते यस्माच्छ्राद्धं तेन निगद्यते॥

ब्राह्मे — देशे काले च पात्रे च श्रद्धया विधिना च यत्।
पितॄनुद्दिश्य विप्रेभ्यो दत्तं श्राद्धमुदाहृतम्॥

मरीचिः — प्रेतान् पितॄनप्युद्दिश्य भोज्यं यत् प्रियमात्मनः।
श्रद्धया दीयते यत्तु तच्छ्राद्धं परिकीर्तितम्॥

नृसिंहपुराणे— दिव्यपितृभ्यो देवेभ्यः स्वपितृभ्यस्तथैव च।
दत्त्वा श्राद्धमृषिभ्यश्च मनुष्येभ्यस्तथात्मनः॥

वसिष्ठः — अपरपक्ष ऊर्ध्वचतुर्थ्याः पितृभ्यो दद्यात्। (११-१६)

मनुः — यद्यद्ददाति विधिवत् सम्यक् श्रद्धासमन्वितः। (३-२७५)
अपि नः स कुले जायाद्यो नो दद्यात्त्रयोदशीम्।
पायसं मधुसर्पिर्भ्यां प्राक्छाये कुंजरस्य च॥ (३-२७४)

इति सर्वत्र मुनिभिः ददातिकीर्तनात् श्राद्धस्य दानरूपतैव सिध्यति।

पितुः प्रतिनिधित्वेन निमन्त्रिताय ब्राह्मणाय द्रव्यस्य दीयमानत्वात् साक्षाद् दत्ते द्रव्ये दातुः स्वत्वध्वंसः, ग्रहीतुर्ब्राह्मणस्य स्वीकरणात् स्वत्वोत्पत्तिश्च। अतो दानमिति। दानस्वरूपमाह स्मार्तवाचस्पतिमिश्रः—दानं स्वस्वत्वनिवृत्तिपूर्वकपरस्वत्वापत्तिफलक इच्छाविशेष इत्यवेहि। अस्य चेच्छाविषय इदं न ममेति शरीरम्। तच्च सम्प्रदानस्य स्वीकारं ददस्वेति रूपमासाद्य जायते। जातं च दातुः स्वस्वत्वध्वंसं ग्रहीतुश्च स्वत्वं जनयति। द्वैतनिर्णयः —पृ० ३

१८। दानपदस्य यः अर्थः तत्र परस्वत्वापत्तिर्नान्तर्गता, यतः परस्वत्वापत्तिं विनैव दानं निष्पद्यते। यदि तत्र स्वीकरणं दानपदार्थान्तर्गतं स्यात्तर्हि प्रतिग्रहीतुरपि दातृत्वमापद्येत इत्याह दायभागे जीमूतवाहनः। अतः दानकर्मणि दातृव्यापार एव मुख्यः व्यापारान्तरं तु तदङ्गमिति न मुख्यम्। तस्माद् गयाश्राद्धादौ प्रतिग्रहाभावेऽपि दानता सिध्यत्येव।

---

° न च इति क ख पुस्तकयोः पाठः। ननु इति कालसारो द्धृतांशे पृ० २९६

**दानपदार्थानन्तर्गतत्वात्, प्रतिग्रहस्य[१९] वृत्त्यर्थत्वेन प्राप्तत्वात् विधेयत्वा[२०]-भावात्। नचैवं प्रीतिदत्तादिस्वीकार इव मन्त्रा[२१]दिनियमो न स्यादिति वाच्यम्। भोजनादौ दिङ्मुखनियमस्यैवादृष्टार्थत्वात्। न चैवं चतुर्थे[२२]**

---

१९। अध्यापनमध्ययनं यजनं याजनं तथा।
दानं प्रतिग्रहश्चैव षट्कर्माण्यग्रजन्मनः।। (मनुः १०-७५)

इति ब्राह्मणस्य षट्सु कर्मसु

षण्णां तु कर्मणामस्य त्रीणि कर्माणि जीविका।
याजनाध्यापने चैव विशुद्धाच्च प्रतिग्रहः।। (मनु० १०-७६)

इति मनुना प्रतिग्रहो वृत्त्यर्थत्वेनोक्तः। वृत्तिस्तु स्वतः प्राप्ता भवतीति तत्र विधिवाक्यं नापेक्षितं भवति। नहि क्वापि कश्चित् शास्त्रप्रेरणामाश्रित्यैव धनमुपार्जयति तत्र पुरुषाणां स्वतः प्रवृत्तिर्भवत्येव। ततः प्रतिग्रहस्य विधेयत्वं नास्ति एव।

२०। विधातुं योग्यो विधेयः। स तु चोदकप्रात्तो नाम विधिना ज्ञातः। विधेरप्राप्तप्रापकत्वे वृत्त्यर्थत्वेन प्राप्तस्य इच्छाविशेषस्य प्रतिग्रहस्य न विधि-प्राप्तत्वमिति भावः।

२१। यदि नाम श्राद्धे ब्राह्मणस्य द्रव्यस्वीकारो न विधेयः, तर्हि प्रीति-दत्तादिस्वीकारवत् कथं स विना मन्त्रं न सिध्यति, अपितु इतरप्रतिग्रहवत् काम-स्तुत्यादिपाठपूर्वकं समन्त्रकं प्रतिगृह्यते इति पूर्वपक्षः। अस्य उत्तरमाह भोजनादाविति। यतः —

आयुष्यं प्राङ्मुखो भुङ्क्ते यशस्यं दक्षिणामुखः।
श्रियं प्रत्यङ्मुखो भुङ्क्ते ऋतं भुङ्क्ते ह्युदङ्मुखः।। (मनुः २-५२)

इत्यादौ रागप्राप्तस्य क्षुधानिवारकस्य भोजनस्य दिङ्नियममन्तरेणापि सिद्धत्वे प्राङ्मुखत्वादिनियमोऽदृष्टार्थमेव साधयति। तथैवात्र वृत्त्यर्थत्वेन प्राप्तस्य ब्राह्मण-प्रतिग्रहस्य विधेयत्वाभावेऽपि अदृष्टार्थसिध्यर्थमेव प्रतिग्रहमन्त्रादिपाठ इति सुव्यक्तम्।

२२। चतुर्थे नाम जैमिनीयमीमांसादर्शनस्य चतुर्थाध्याये इत्यर्थः। तत्र यजतिचोदना द्रव्यदेवताक्रियं समुदाये कृतार्थत्वात् (४-२-२७) इति सूत्रे यागस्वरूपं निरूपितम्। यजतिपदेन याग उच्यते इति भाष्यकारः शबर आह। यथा—यजतिचोदना तावद् द्रव्यदेवताक्रियम्। द्रव्यं देवतामुद्दिश्य त्यज्यते,

**यजतिचोदनाद्रव्यदेवताक्रियमिति (जै० सू० ४-२-२७) सूत्रे तन्त्ररत्ने तथाविध-ज्ञानलक्षणानुपपत्तिः। लोक[२३]व्यवहारानुसारिण्यां मीमांसायां लक्षणकरणाभावात्। एतदभिप्रायेणैव[२४] वर्णकान्तरम्। प्रतिग्रहस्यां[२५]गत्वेन तदभिप्रायं वा लक्षणम्।**

---

तस्य च क्रिया, यथा क्रियया तयोः सम्बन्धो भवति। समुदाये समुदितेष्वेषु यजतिशब्दो भवति। लोके इष्टोऽनेन पशुपतिरिति। तेन मन्यामहे, द्रव्य-देवताक्रियस्यार्थस्य यजतिशब्देन प्रत्यायनं क्रियत इति। लक्षणकर्मणि प्रयोजनं न वक्तव्यम्। ज्ञानमेवात्र प्रयोजनमिति।

एतद् भाष्यं परिष्कुर्वन्ति कुमारिलश्रीचरणाः यथा—
यजेत स्वर्गकाम इति साधनत्वेन यागस्य चोद्यमानस्य प्रयोगः कथ्यते। यो देवतोद्देशेन द्रव्यं त्यजति तेन यागोऽनुष्ठितो भवति न त्यागमात्रेण यागः कृतो भवतीति। तस्मात् प्रयोगकथनमेवैतत्। सूत्रकारश्च यजतिचोदनेत्याह। चोदनेति हि वाक्यमुच्यते। इति।

अत्र भाष्यकारेण लक्षणपरमेतत् सूत्रद्वयं व्याख्यातम्। द्रव्यदेवताक्रियं समुचितं यजत्यर्थः समुदितेष्वेषु लोके यजतिशब्दो भवतीति तन्त्ररत्ने (पृ० १४२) पार्थसारथिमिश्राणामाशयः।

२३। यजतिशब्दो युगपद् बहूनर्थान् प्रकटयितुं शक्यः। न हि द्रव्यदेवतयो-र्यजिवाच्यतां मन्यन्ते लौकिकाः इति तन्त्ररत्ने पूर्वपक्षत्वेनोक्तम्। तस्य सिद्धान्त इत्थम्—न पदार्थलक्षणमिदम् (टुप्टीका-तन्त्ररत्नयोः) न हि लोकसिद्धपदार्थ-व्यवहारिण्यां मीमांसायां पदार्थपरिभाषा कर्तव्येत्युक्तं लोके येष्वर्थेष्वित्यत्र यागादीनामपि कात्यायनादिकृतपरिभाषाप्रत्याख्यानेन लोकसिद्धत्वादलक्षणीयत्वं तत्रैवोक्तं ये यागहोमादयः सिद्धान्तेष्वपि अनेन न कार्यमपरं तेषां स्वयं लक्षणम्।

यागादिशब्दा येष्वेव लोकेऽर्थेषु यथोचिवान्।
प्रयुङ्क्तेऽत्रापि तेऽर्थाः स्युः सूत्रेष्वपरिभाषिताः॥
यथैव हि गवादीनां प्रयोगादर्थनिर्णयः।
यागादीनां तथैवेति किं तन्न परिभाव्यते॥

इति लोकव्यवहारानुपातिगवादिलक्षणत्वाद् यागादीनां कथं लोकसिद्धत्वमित्यत्रा-प्युत्तरं तत्रैवोक्तम्—यश्च यैर्व्यवहरति स तत्र लोकः। लोक्यते हि अनेन शब्दार्थ इति। तन्त्ररत्नम् (पृ० १४३)

२४। द्रष्टव्या पादटिप्पणी २२

२५। दानत्वेन स्वीकाररूपस्य प्रतिग्रहस्य दानरूपिश्राद्धलक्षणे पाठः कृत इति भावः।

यथा—यजतिजुहोतीनां को विशेषस्तिष्ठद्धोमा वषट्कारप्रदाना याज्यापुरोऽनुवाक्यावन्तो यजतयः। उपविष्टहोमाः स्वाहाकारप्रदाना जुहोतय (का० श्रौ० सू० १-२६-२८) इति कात्यायनलक्षणम्। न हि याज्यापुरोऽनुवाक्यावत्त्वं यज्ञस्वरूपान्तर्गतम्। एवं परस्वत्त्वापत्तिरपि। यथा च प्रति[२६]ग्रहो न दान-

---

२६। दोषात्त्विष्टिर्लौकिके स्यात्, शास्त्राद्धि वैदिके न दोषः स्यात्। अर्थवादो वानुपपातात्, तस्माद्यज्ञे प्रतीयेत। अचोदितं कर्मभेदात्। लिंगादार्त्विजे स्यात् (जै० सू० ३-४-२८-३१) इति सूत्रेषु अश्वप्रतिग्रहविषयो विचारितः। तत्र प्रजापतिर्वारुणायाश्वमनयत् इति वाक्येन अश्वस्य दानकर्मणि कर्ता प्रजापतिः। प्रतिगृहीता वरुणः। अश्वस्य दानप्रतिग्रहयोः परं यावतोऽश्वान् प्रतिगृह्णीयात् तावतश्चतुष्कपालान् वारुणान्निर्वपेत् इति अर्थवादाद् वारुणेष्टिः क्रियते। किंकर्तृकेयमिष्टिरिति शंकायां प्रतिग्रहीतृकर्तृकेति पूर्वपक्षस्याशयः।

अत्राह भाष्यकारः—नैषा प्रतिग्रहकर्तुः, हेतुकर्तुः स्यात्। कुतः। लिंगात्। किं लिंगम्। पूर्वपदानामुत्तरैः पदैर्यथार्थमभिसम्बन्धः। इदं श्रूयते। प्रजापतिर्वारुणायाश्वमनयत् इति प्रजापतिरश्वस्य दाता कीर्तितः। वरुणः प्रतिग्रहीता, स स्वां देवतामार्च्छत् इति। स इति सापेक्षं पूर्वप्रकृतं वाक्यशेषमपेक्षते। स इति प्रजापतिं प्रतिनिर्दिशतीति तेन सहैकवाक्यतां याति। सामान्याधिकरण्याच्च प्रजापतिरेव प्रतिनिर्देशोऽवकल्पते न तु वरुणस्य, वैयधिकरण्यात्। स पर्यदीर्यत इत्येषोऽपि प्रजापतिमेव प्रतिनिर्दिशति पूर्वप्रकृतम्। तेन च सहैकवाक्यतां याति। स एवैतं वारुणं चतुष्कपालमपश्यत् इति प्रजापतिरेवेति तं निरवपत् प्रजापतिरेवेति, ततो वै स वरुणपाशादमुच्यत प्रजापतिः। वरुणो वा एतं गृह्णाति इति हेत्वपदेशोऽयम्। यस्मादेव प्रजापतिर्वरुणायाश्वं दत्त्वा परिदीर्णस्तस्माद्योऽश्वं प्रतिगृह्णाति प्रयच्छति तं वरुणो गृह्णाति, स परिदीयति इति। यतस्तु वारुणेन प्रतिमुक्तस्तस्मादन्येनाप्यश्वं प्रयच्छता वारुणो निर्वप्तव्य इत्यश्वस्य दातुर्वारुणेष्टिः प्रशस्यते। कर्तव्यानेनाख्यातेन। तस्मादश्वं दत्त्वा वारुणीमिष्टिं निर्वपेदिति। आह। ननु योऽश्वं प्रतिगृह्णाति स निर्वपेदित्युच्यते। एवं सति अन्यथोपक्रान्ते वाक्येऽन्यथोपसंहृते उपक्रमोऽप्यनर्थकः स्यादुपसंहारोऽपि। तस्मादुपक्रमे वा शब्दार्थः उपसंहारवशेन कल्पनीयः, उपसंहारे वोपक्रमवशेन। तत्र प्रजापतिर्वरुणायाश्वमनयदिति, वरुणादश्वं प्रत्यगृह्णादित्युपसंहारानुरोधेन कल्प्येत। यदोपक्रमवशेनोपसंहार योऽश्वं प्रतिगृह्णातीति योऽश्वं प्रतिग्राहयतीति। तत्र मुख्यं वा पूर्वं चोदनाल्लोकवदिति प्रथममनु-

पदार्थान्तर्गतस्तथोक्तमश्वप्रतिग्रहेष्ट्यधिकरणे वार्तिके । अतएव पारस्करसूत्रे

ग्रहीतव्यं विरोधाभावात् । पश्चात्तनं तु विरोधाल्लक्षणया कल्पनीयम् । अपि च प्रजापतिर्वरुणायाश्वमनयदिति वरुणादश्वं प्रत्यगृह्णादिति बह्वसमंजसं कल्पयितव्यम् । प्रतिगृह्णातीत्येष शब्दः प्रतिग्राह्यतीत्येतमर्थं शक्नोति यथा कयाचिच्छक्त्या वक्तुम् । यो हि तदा चरति, येन च क्रिया प्रणाड्याऽपि सिध्यति, स तस्याः क्रियायाः कर्तेति शक्यते वदितुम् । यथा षड्भिर्हलैः कर्षतीति संविधानं कुर्वन् विलेखनमकुर्वन्नाप्युच्यते, तत्समर्थमाचरतीति । एवमिहापि स प्रतिग्रहसमर्थमाचरति यो ददाति । तस्माद्ददत् । प्रतिगृह्णातीति शक्यते वदितुम् । तस्मादध्यवधार्येदमवक्लृप्तम् । ददत्प्रतिगृह्णातीत्युच्यते । तस्य च वारुणीष्टिरिति । सिद्धान्तः—दातुर्वारुणीष्टचधिकरणमिति ।

प्रतिग्रहे न विध्युद्देश इत्येतत्प्रसंगे वार्तिककार आह—

स्तुतिर्लब्धात्मकत्वेन विध्युद्देशेन बाध्यते ।
प्रतिग्रहीतरि त्वत्र विध्युद्देशो न कल्पितः ।। इति ।

यदि लब्धात्मकोऽत्र प्रतिग्रहीतृविषयो विध्युद्देशो भवेत्ततो विचार एव न क्रियते न त्वसौ लब्धात्मकः ।

एतत्परिष्कृतं जैमिनीयन्यायमालायाम्—

अश्वप्रतिग्रहेष्टिस्तु दातुरित्यभिधास्यते ।
दानद्वये लौकिके वा वैदिके वा भवेदियम् ।।
अविशेषाद् द्वयोर्यद्वा न देयः केसरीत्यतः ।
निषेधाल्लौकिकात्तत्र प्रायश्चित्तिरियं भवेत् ।।
न जलोदरहेतुत्वं प्रमितं लौकिके क्वचित् ।
वैदिके तु श्रुतं तस्मात्तत्प्रायश्चित्तयेऽत्र सा ।।

इति । अत्र विस्तरो यथा—इदमाम्नायते— यावतोऽश्वान् प्रतिगृह्णीयात्तावतो वारुणांश्चतुष्कपालान् निर्वपेत् इति । तत्र प्रतिग्रहशब्दो दानपरः इत्यनन्तरमेव वक्ष्यते । तत्र विशेषाश्रवणाल्लौकिकवैदिकदानयोरुभयोरप्यसाविष्टिः इत्येकः पक्षः । न केसरिणो ददाति इति स्मृत्या मित्रदायादिभ्यः प्रीत्या क्रियमाणं लौकिकमश्वदानं निषिद्धम् । तदनुष्ठाने प्रायश्चित्तरूपेयमिष्टिः इति द्वितीयः पक्षः ।

वरुणो वा एतं गृह्णाति योऽश्वं प्रतिगृह्णाति इत्यश्वदाने जलोदव्याधिरूपो दृष्टदोषो वरुणग्रहवाक्येनोच्यते । न च लौकिकस्याश्वदानस्य तद्धेतुत्वं प्रमितम् ।

विवाहे[२७] पित्रा प्रत्तामादाय (१-४-१५) इ°त्युक्तम् । अन्यथा प्रत्तामित्यनेनैव सिद्धे रादायेति व्यर्थं स्यात् । अतएव

मनसा पात्रमुद्दिश्य ततो भूमौ जलं क्षिपेत् ।
विद्यते सागरस्यान्तस्तस्यान्तो न हि विद्यते ।।

---

वैदिकस्य तु जन्मान्तरविषयं दोषश्रवणम् । अतो वैदिकदाने सेष्टिः प्रायश्चित्तम् । अस्ति हि वैदिकमश्वदानम् । वडवा दक्षिणा इत्यादिश्रवणात् ।

किंच दातुर्वारुणीष्ट्यधिकरणे—

यावतः प्रतिगृह्णीयादश्वांस्तावत्य इष्टयः ।
प्रतिग्रहीतुर्दातुर्वा स्यादाद्योऽस्तु यथाविधि ।।
असंजातविरोध्यर्थवादाद्दातुः प्रजापतेः ।
इष्टिः श्रुता ततो दातुर्णिजर्थेऽपि विधिं नयेत् ।।

अत्र विस्तरो यथा—पूर्वोदाहृते वाक्ये प्रतिगृह्णीयात् इति विधिपदश्रवणात् प्रतिग्रहीतुरिष्टिः—इति चेत्—न । उपक्रमरूपेणार्थवादेन दातुस्तदिष्टिप्रतीतेः । उपक्रमश्चैवं श्रूयते—प्रजापतिर्वरुणायाश्वमनयत्, स स्वां देवतामार्च्छत् । स पर्यदीर्यत, स एतं वारुणं चतुष्कपालमपश्यत्, तं निरवपत्, ततो वै स वरुणपाशादमुच्यत इति अनयद्दत्वान् । स च दाता प्रजापतिः स्वकीयां वरुणदेवतां जलोदररोगप्रदां प्राप्तवान् । तेन च रोगेण ग्रस्तः स प्रजापतिर्विदीर्णो भूत्वा रोगपरिहारायेष्टिं कृत्वा रोगादमुच्यत इत्यत्र दातुरिष्टिः इत्यवगम्यते ।

अत्र दातुरिष्ट्यधिकारसिद्धौ प्रतिग्रहीतुस्तदभावात् दाने प्रतिग्रहस्यान्तर्भावो न भवतीति सिद्धम् ।

२७। पित्रा प्रत्तामादाय गृहीत्वा निष्क्रामति यदैषि मनसा दूरं दिशोऽनुपवमानो वा । हिरण्यपर्णो वैकर्णः स त्वा मन्मनसां करोत्वित्यसाविति । ( पारस्करगृह्यसूत्रम्—१-४-१५ )

अस्य सूत्रस्य व्याख्याने भाष्यकारः कर्को यथा—आदाय गृहीत्वेति चोभयं न वक्तव्यम् । उच्यते च किमर्थं तत् ? अप्रतिग्रहस्यापि प्रतिग्रहविधिना दानं यथा स्यादिति ।

जयरामो यथा—पित्रा प्रत्तामित्यत्र आदाय गृहीत्वेति उभयग्रहणम् अप्रतिग्रहस्यापि प्रतिग्रहविधिना दानं यथा स्यादिति । अप्रतिग्रहस्य क्षत्रियादेः ।

---

° इत्युक्तेः इति खपुस्तकपाठः ।

**इति त्यागमात्रस्यैव प्रशंसा। वस्तुतः प्रतिग्रहस्यांगत्वादंगानां प्रधानदेशकालान्वयित्वाद् दानकाले प्रतिग्रहाननुष्ठाने वैगुण्यमन्यथा समग्रफलम्। वचनात्तु**

---

गदाधरोऽपि—पित्रा दत्तां कन्यामादाय वरः प्रतिग्रहविधिना प्रतिगृह्य वस्त्रान्ते गृहीत्वा यदैषि मनसा दूरमित्यनेन मन्त्रेण निष्क्रामति गृहमध्याद् बहिःशालायां स्थापितमग्निं प्रति गच्छति। असावित्यत्र सम्बुध्यन्तं कन्यानामग्रहणम्। अत्र कर्म भाव्यम्। आदाय गृहीत्वेति चोभयं न वक्तव्यम्।

उच्यते च तत् किमर्थमप्रतिग्रहस्यापि प्रतिग्रहविधिना दानं यथा स्यादिति। अयमर्थः। अप्रतिग्रहस्यापि कन्याद्रव्यस्य प्रतिग्रहविधिना आदानं प्रतिग्रहो यथा स्यादित्येतदर्थमुभयग्रहणम्। ननु कन्यां दद्यात् कन्यां प्रतिगृह्येति स्मरणात् कथमप्रतिग्रहयोग्यं कन्याद्रव्यमित्युच्यते। सत्यम्। उच्यते—स्वत्वत्यागपूर्वकं हि परस्वत्त्वापादनं दानम्। न च कन्या कथंचिदप्यस्वकन्या कर्तुं शक्यते नापि यस्य कन्या भवति विवाहोत्तरमपि ममेयं कन्येत्यभिधानादत्र गौणो ददातिः। यत्तु स्मृतिषु पुत्रदानं चोद्यते तत्रापि गौणो ददातिः। पितुरेव परस्यापि पिण्डदानं रिक्थभाक्त्वं च भवतीत्यर्थः। षष्ठाध्यायस्य सप्तमे पादे आद्याधिकरणे अयमर्थस्तन्त्ररत्ने। यद्वा। अप्रतिग्रहयोग्यस्य प्रतिग्रहविधानतः क्षत्रियादेर्यथादानं स्यादादायेति सूत्रितमिति रेणुः।

हरिहरो यथा—पित्रा जनकेन प्रत्तां संकल्प्य दत्तामादाय प्रतिग्रहविधिना प्रतिगृह्य गृहीत्वा हस्ते धृत्वा निष्क्रामति गृहमध्याद् मण्डपाद् वा। अग्निसमीपं गन्तुम्। यदैषि मनसेत्यादिना मन्त्रेण करोत्वमुकदेवि इत्यनेन। अत्र पित्रेत्युपलक्षणम्।

> पिता पितामहो भ्राता सकुल्यो जननी तथा।
> कन्याप्रदः पूर्वनाशे प्रकृतिस्थः परः परः ॥ (१-६३)

इति याज्ञवल्क्येन अन्येषामपि कन्यादाने अधिकारस्मरणात्। इति

विश्वनाथो यथा—पित्रा जनकेन उपलक्षणमेतत्। पितुरभावे पितामहादिस्मृत्युक्तदानाधिकारिणा प्रत्तां कन्यादानकाले दत्ताम्। केचिदमुमेव कन्यादानावसरमाहुः। आदाय प्रतिगृह्य गृहीत्वा वरः स्वदक्षिणहस्तेन कन्यादक्षिणहस्तं गृहीत्वा निष्क्रामति च तुरिकायां गन्तुं कौतुकागारान्निर्गच्छति।

अस्मद्गुरुचरणाः पण्डितकुलमणिमिश्रशर्माणश्च मार्गदर्शिन्याम्—अनेन विधिना पित्रा कन्यापित्रा कन्यादानाधिकारिणा प्रत्तां भार्यात्वेन प्रदत्तां कन्याम्

परोक्षदानस्थले काम्यकर्मण्यप्यंगवैगुण्ये फल॰मिति । मैथिलास्तु[२८]यागदान-होमविलक्षणम् उत्सर्गाभिधमपि त्यागमाहुः । पुष्करिण्युत्सर्गादावाब्रह्म[२९]स्तम्ब-पर्यन्तानां स्वीकाराभावेन दानत्वाभावात् । अयमेव न्यायः परोक्षदानस्थल[३०] इति । तत् सिद्धं श्राद्धस्य दानत्वम् ।

अतो गङ्गातीरादौ[३१]

सार्धहस्तशतं यावत् परितस्तीरमुच्यते ।
तत्र न प्रतिगृह्णीयात् प्राणैः कण्ठगतैरपि ॥

इति निषेधात् श्राद्धस्य दानत्वात् आमन्त्रणं न स्वीकार्यमिति । ननु पितॄनु-द्दिश्य द्रव्यत्यागस्य श्राद्धत्वे ब्राह्मणभोजनपिण्डदानयोः किं प्रधानम् उभयं वेति । तत्र विप्रस्वीकारपर्यन्त इत्यादिमनुवचनात् ब्राह्मणभोजनमेव प्रधानं पिण्डदान-

---

आदाय स्वीकृत्य गृहीत्वा हस्तावच्छेदे धृत्वा अग्निसमीपं निष्क्रामति वर इत्याहुः ।

एतेन दानमात्रेण प्रतिग्रहस्य सिद्ध्यभावात् पुनरादायेति सूत्रकृता सूत्रितम् ।

२८ । ससम्प्रदानको हि त्यागो दानम्, देवतोद्देश्यकस्त्यागो यागः, हविः प्रक्षेपावच्छिन्नस्त्यागो होमः, एतत्त्रितयभिन्नस्त्याग उत्सर्ग इति द्वैतनिर्णये (पृ० ५) वाचस्पतिमिश्रः आह । तदाश्रित्य ग्रन्थकारो यागदान इत्यादिना मैथिलमतं विशेषयति ।

२९ । आब्रह्मस्तम्बपर्यन्तं ये केचित् सलिलार्थिनः ।
ते तृप्तिमधिगच्छन्तु मद्दत्तेनैव वारिणा ॥
अद्यप्रभृति नास्माकं न कर्त्ताहं न पापभाक् ।
यथैवान्यस्तथैवाहं वासुदेवो नमोऽस्तु ते ॥

इति प्रार्थनावाक्येन आब्रह्मस्तम्बपर्यन्ताः सर्वे सम्प्रदानरूपेण विवक्षिताः इति जलाशयप्रतिष्ठाकर्मकाण्डे ।

३० । परोक्षदानस्थले--उत्सर्गस्थले इत्यर्थः । परोक्षदानस्थले प्रतिग्रहस्य प्रागभावमाहुर्गौडाः ।

३१ । सार्धहस्तशतं यावत् परितस्तीरमुच्यते ।
भाद्रकृष्णचतुर्दश्यां यावदाक्रमते जलम् ॥

इति प्रायश्चित्ततत्त्वोद्धृतस्मृतिवचनमिति शब्दकल्पद्रुमे ।

---

॰ निष्कर्षः इति अधिकपाठः कालसारोद्धृतांशे—पृ० २९०

मंगम् । तत्र गयाश्राद्धभीमष्मपिण्डदाने अ°नन्तहस्तोत्थानदर्शनकेवलपिण्डदानविधिभ्यः पिण्डदानं प्रधानमिति[३२] कर्काचार्याः । पंक्तिपावननिमन्त्रणापांक्तभोजनदोषामश्राद्धदर्शनश्राद्धिकप्रतिग्रहानध्यायादिदर्शनात् ब्राह्मणभोजनं प्रधानमित्यपरे[३३] ।

---

३२। (क) श्रौतकर्मानन्तरं स्मार्तान्यावसथ्यादीन्यनुविहितानि तत्र श्राद्धमनुक्तं तद् वक्तव्यमित्यत आह । अपरपक्षे श्राद्धं कुर्वीत । श्राद्धमिति कर्मणो नामधेयं द्रव्यगुणादावप्रसिद्धेः । तच्च समुदायस्य सन्निधानाविशेषात् राजसूयवत् । स्मृतेश्च श्राद्धमनेन भुक्तमिति । पिण्डदानप्रधानो हि भुज्यर्थानुपपत्तिः । कर्मत्वाविशेषाच्च । तस्मात्समुदायनामधेयमिति । एवं प्राप्ते उच्यते—पिण्डदानस्यैव श्राद्धमिति नामधेयं प्रवृत्तेस्तादर्थ्यात् । तत्कुतः ? स्मृतेः ।

अपि नः स कुले भूयाद् यो नो दद्यात् त्रयोदशीम् ।
पायसं मधुसर्पिर्भ्यां वर्षासु च मघासु च ॥

इति प्रार्थना पिण्डदानविषयैषा । तत्र हि तेषां देवतात्वमसावेतत्तेऽन्नमिति मन्त्रवर्णलिंगाच्च । इति कात्यायनश्राद्धसूत्रभाष्ये कर्काचार्याः । (प्रथमकण्डिका पा० गृ० सू०, पृ० ४२३-२४ )

(ख) ब्राह्मणभोजनाभावेऽपि गयादौ पिण्डदानमात्रदर्शनात् । तत्र द्वैपायनोऽपि दर्शयति पिण्डदानकाले पितॄणां हस्तोत्थानम् ।

भीष्मस्य ददतः पिण्डान् हस्तोत्थानं तु शन्तनोः ।

इति । यत्पुनरुक्तं सन्निधानाविशेषादिति । तन्नैवम् । विशेषावगमात् । अवगम्यते हि विशेषः प्राक्प्रतिपादितवाक्येभ्यः सकाशात्, तस्मात् पिण्डदानस्य प्राधान्यं, तदंगमितरत् इति । वस्तुतस्तु अत्र पायसेन पिण्डदानासम्भवात् मघायां पिण्डदाननिषेधाच्च ब्राह्मणभोजनमेवात्र प्रधानमिति ।

३३। यजुषा पिण्डदानं तु बह्वृचानां द्विजार्चनम् ।
श्राद्धशब्दाभिधेयं स्यादुभयं सामवेदिनाम् ॥

तच्च पितॄन् यजेन, पितृभ्यो दद्यात् इत्युभयप्रयोगदर्शनात् यागदानोभयात्मकम् । पितरो देवता ( आप० ध० सू० ) इति पितुद्देशकत्वाद् यागत्वं, विप्रापेक्षया च दानत्वमित्यविरुद्धम् इति निर्णयसिन्धुघृतधर्मप्रदीपे—पृ० २९७ । श्राद्धदीपेऽपि यागदानोभयरूपता निरूपिता ।

---

° शान्तनुहस्तोत्थानदर्शन इति कालसारोद्धृतांशपाठः । पृ० २९७

उभयश्रुतेरुभयं प्रधानमिति नारायणभट्टः[३४]। शूलपाणिस्तु—

नित्यश्राद्धमदैवं स्यादर्घ्यपिण्डविवर्जितम्।
तत्रापि महती पूजा कर्तव्या पितृदैवते ।।
ऋक्षपिण्डप्रदानं तु ज्येष्ठपुत्री विवर्जयेत्[३५]।

इति हारीतदेवीपुराणाभ्यां (दे० ५९-१७) पिण्डदानप्रतिषेधात्।

अयनद्वितये श्राद्धं विषुवद्द्वितये तथा।
युगादिषु च सर्वेषु पिण्डनिर्वपणादृते।

इति वृद्धगर्गवचनेऽपि[३६] तन्निषेधाच्च[३७]। अप्राप्तेषु निषेधायोगात् एषु च अतिदेशादेव पिण्डदानप्राप्तेरतिदेशस्य अंगमात्रविषयत्वात् प्रधानफलयोरतिदेशाभावात् सप्तमे[३८] चोपकारमुखेनैवातिदेशनिर्णयात् अंगं पिण्डदानं ब्राह्मणभोजनमेव

---

देवतास्तर्पयति इत्याश्वलायनादिसूत्रस्थदेवतापदेन तत्समर्पणात्। अंगकत्वोक्त्या च विप्रस्वीकृतेः श्राद्धस्वरूपघटकता व्यावर्त्यते तेन तदभावेऽपि प्रधानसिद्धिरविहिता। पिण्डदानस्य च प्राधान्यसिद्धिः। अन्यथा तस्य विप्रस्वीकरणान्तत्वाभावेन प्राधान्यं न स्यात्। एतेन विप्रस्वीकारान्तो द्रव्यत्यागः श्राद्धं पिण्डदानाग्नौकरणयोश्च तत्पदशक्यत्वमिति विरुद्धं प्रलपन्तः केचिदपास्ताः इति श्राद्धमयूखः—पृ० २

३४। (क) श्राद्धं नाम पितॄनुद्दिश्य द्रव्यत्यागः। तत्र ब्राह्मणभोजनं पिण्डदानं चोभयं प्रधानमिति बहवः इति श्राद्धदीपे दिव्यसिंहमहापात्रः—पृ० १

(ख) नारायणभट्टः त्रिस्थलीसेतुकारः। नारायणभट्टप्रभृतयस्तूभयं प्रधानमिति कालसारेऽपि तन्मतमुत्थापयति गदाधरः—पृ० २९७

३५। शूलपाणिनापि एतद्वचनमुद्धृतमिति निर्णयसिन्धौ—पृ०७५८। पितृदैवते नाम मघानक्षत्रे इत्यर्थः।

३६। हेमाद्रौ पुलस्त्यवचनात् इति निर्णयसिन्धौ—पृ० १८७

३७। तन्निषेधात्—पिण्डदाननिषेधात्।

३८। प्राकृतात् कर्मणो यस्मात्तत् समानेषु कर्मसु।
धर्मोपदेशो येन स्यात् सोऽतिदेशोऽभिधीयते ।।

इति च पदार्थस्य शब्दभाव्यत्वात् प्रकरणनिबन्धनाच्छब्दादेवान्यत्र भावः स्यात् (७-१-१२) इति जैमिनीयसूत्रस्य भाष्ये उदाहृतम्। अतिदेशो नाम ये परत्र विहिता धर्मास्तमतीत्यान्यत्र तेषां देशः। यथा देवदत्तस्य भोजनविधिं कृत्वा

**प्रधानम्। पिण्डदाने फलश्रवणं तु द्रव्यस्वीकारकर्मसु इति न्यायादर्थवाद एव। पिण्डदानविधिस्तु अंगभूतपिण्डदानात् कर्मान्तरमेव प्रक[39]रणान्तरन्यायादित्याह। तदसंगतम्। न तावत् पिण्डदानस्य प्रतिषेधः। किन्तु दानशब्देन श्राद्धमुद्दिश्य पिण्डद्रव्यमेव प्रतिषिध्यते। फलचमसे[40] संस्कारविधित्वेन यागसिद्धौ तस्मै**

---

शालिसूपमांसापूपैर्देवदत्तो भोजयितव्य इति। तमेव विधिं यज्ञदत्तेऽतिदिशति। देवदत्तवद् यज्ञदत्तो भोजयितव्य इति तत्रैव।

अन्यत् अतिदेशविचारांशे विस्तरशो विवृतः।

३९। अनुपादेयगुणविशिष्टा पूर्वकर्मानुपस्थितिः प्रकरणान्तरम्। तेनापि कर्मभेदः सिध्यति। तथा हि अस्ति कुण्डपायिनाख्यः सत्रविशेषः संवत्सर-साध्यः। तत्सन्निधौ श्रूयते—उपसद्भिश्चरित्वा मासमग्निहोत्रं जुह्वति। मासं दर्शपूर्णमासाभ्यां यजन्ते (ता० ब्रा० २५-४-१) इत्यादि। तत्र प्रसिद्धान्नित्या-ग्निहोत्रदर्शपूर्णमासादेर्भिन्नं कर्मात्र विधीयते। न च नैयमिकाग्निहोत्रमनूद्यैवात्र मासरूपो गुणो विधीयतामिति वाच्यम्। तेषामतिदूरस्थत्वेनात्रानुपस्थितेः। तदुद्देशेन गुणविधानासम्भवात्। न च नाम्नस्तदुपस्थापकत्वम्। तस्याग्नि-देवताककर्ममात्रोपस्थापकत्वेऽपि पूर्वकर्मोपस्थापकत्वे मानाभावात्। न ह्यग्नि-देवताकं पूर्वं कर्मैवेत्यत्र प्रमाणमस्ति। यत्रोपादेयगुणश्रवणं, तत्र विधिशक्तेः गुणे संक्रमात्। धात्वर्थस्यानुवादापेक्षायां दूरस्थानामपि कर्मणां कथंचिदनुवादो युक्तः। यथा—यदाहवनीये जुहोति इत्यत्र। प्रकृते तु मासस्यानुपादेयत्वात् तत्र विधिशक्तेरसंक्रमात् धात्वर्थ एव सा संक्रामतीति तस्यैव विधेयत्वम्। धातुना च न पूर्वकर्मोपस्थितिः। अतोऽपूर्वमेव कर्मोपसदुत्तरकालिकत्वमासादिविशिष्टं विधीयते। तस्य चाग्निहोत्रपदं गौण्या वृत्त्या नामधेयम्। अनेकत्र शक्ति-कल्पनायां गौरवात् प्रमाणाभावाच्च। नित्याग्निहोत्रसादृश्यं चात्र तदीयधर्म-वत्त्वरूपं गौणीवृत्तिनिमित्तम्। तच्च न प्रमाणान्तरावगतमित्यनेनैव पदेन साध्यसादृश्यविधयाऽवबोध्यते। तेन च तदीयधर्माणामत्रातिदेशः। अतः सिद्धः प्रकरणात् कर्मभेदः। अत्र कालरूपोऽनुपादेयगुणः कर्मभेदोपयोगी। एवं देशनिमित्तफलसंस्कार्यरूपाणामप्यनुपादेयगुणानां योगे सति प्रकरणात् कर्मभेदो द्रष्टव्यः। इति। तन्त्रसिद्धान्तरत्नावली—पृ० ८७

४०। एतदधिकरणं फलचमसो नैमित्तिको भक्षविकारः श्रुतिसंयोगात्। इज्याविकारो वा संस्कारस्य तदर्थत्वात्। होमात्। चमसैश्च तुल्यकालत्वात्। लिङ्गदर्शनाच्च इति जैमिनिकसूत्राणां (३-५-४-५१) भाष्ये विचारितम्।

मैक्ष्यं प्रयच्छेत् न सोममिति प्रतिषेधवत् न सोमयाजी सन्नयेत् इति

तत्राह भाष्यकारः शबरो यथा—ज्योतिष्टोमे श्रूयते, स यदि राजन्यं वैश्यं वा याजयेत्, स यदि सोमं विभक्षयिषेत् । न्यग्रोधस्तिभिनी (मुकुलानि) राहृत्य ताः संपिष्य दधन्युन्मृज्य तमस्मै भैक्षं प्रयच्छेत्, न सोमम् (आप० श्रौ० सू० १२-१२४-५) इति । तत्र सन्देहः । किं फलचमसो भक्षविकारः उत इज्याविकार इति । किं फलचमसं भक्षयेदित्यर्थः उत फलचमसेन यजेतेति । किं प्राप्तम् । फलचमसो नैमित्तिको भक्षविकारः । भक्षणेन हि श्रुतेनैकवाक्यता भवतीति । तमस्मै भक्षं प्रयच्छेदीति, न तेन यजेतेति शब्दोऽस्ति । तस्माद् भक्षविकारः । पूर्वः

इज्याविकारो वा फलचमसः । फलचमसेन यजेतेत्यर्थः । कथम् । यदेतद् भक्षणम्, एतत् सोमसंस्कारार्थं फलचमस्यापि यदि भक्षणं फलचमससंस्कारार्थं फलचमसस्यान्यत्रानुपयोगादनर्थकम् । अथ भक्षणं प्रधानम् । तथा न सोमम्, इत्यनुवादो नावकल्पते । यदि त्विज्याविकारो भवेत्ततः फलचमससंस्कारोऽवकल्पते । तस्मादिज्याधिकारः । आह । कथं यजिसम्बन्धेऽसति, इज्याधिकारो भविष्यतीति । उच्यते । अस्ति यजिसम्बन्धः । कथमिति । यदि राजन्यं वैश्यं वा याजयेत्, न्यग्रोधस्तिभिनीः संपिष्य तमस्मै भक्षं प्रयच्छेत्, याजयितुमिति गम्यते । भक्षसम्बन्धे हि न पूर्वमुत्तरेण सम्बध्यते । यदि सोमं भक्षणेन संस्कर्तुमिच्छेन्न्यग्रोधस्तिभिनीः संस्कुर्यात् इति । तस्मान्न भक्षणसम्बन्धः । यागो हि प्रकृतोऽस्ति, तेन सह संमन्त्स्यते, न दोषो भविष्यति । ननु, तमस्मै भक्षं प्रयच्छेत् इति वचनाद् भक्षसाधनमिति गम्यते न यागसाधनमिति । भक्षशब्दानन्तर्यात् । उच्यते । श्रूयमाणे सम्बन्धेऽनर्थकमिति कृत्वा प्रकृतसम्बन्ध इत्युच्यते । कथं तु भक्षसम्बन्ध इति । यदि यागद्रव्यं, भक्षयितव्यं तच्चोदकेन भवति, तस्माद् भक्षसम्बन्धं लभते, भक्षसम्बन्धेन च यागसम्बन्ध एव लक्ष्यते । यदि तेनेज्यते ततः स भक्षो भवति तस्माद् भक्षवचनात् सुतरां तेनेज्यत इति गम्यते । सैषा व्यवधारणकल्पना । तमस्मै भक्षं प्रयच्छेत्— तमस्मै भक्षं कुर्यादित्यर्थः । यथा स भक्षो भवति तथा कुर्यादिति, यदि च तेनेज्यते, ततोऽयं भक्षो भवति । तस्मात्तेन यष्टव्यमिति सिद्धान्तः ।

होमविशेषवचनं भवति, यदाऽन्यांश्चमसाञ्जुहोति । अथैतस्य दर्भतरुणकेन उपहृत्य जुहोति इति इज्याविकारे सति दर्भतरुणकेनेति जुहोतौ गुणवचनमवकल्पते । तस्मादपीज्याविकारः ।

यदाऽन्यांश्चमसानुन्नयन्ति, अथैनं चमसमुन्नयन्ति इति । इज्याविकारे सति उन्नयनदर्शनं युज्यते, न भक्षविकारे । तस्मादपीज्याविकारः ।

इतश्च पश्याम इज्याविकार इति । कुतः । लिङ्गदर्शनात् । किं लिङ्गं भवति । सोमप्रतिषेधानुवादः । तमस्मै भक्षं प्रयच्छेन्न सोमम् इति । इज्याविकारे सति सोमो न भज्यते । तस्मात् पश्याम इज्याविकार इति ।

जैमिनीयन्यायमालायां माधवाचार्यो यथा—

न्यग्रोधपिष्टं सोमस्य स्थाने क्षत्रियवैश्ययोः ।
भक्षमात्रे विकुर्यात्तत् सोमयागेऽपि वा तथा ।।
विभक्षयिषया वाक्यमुपक्रम्योपसंहृतम् ।
भक्षं यच्छेदिति ततो विकारो भक्षमात्रगः ।।
फलाख्यचमसेनासौ यजेतेति श्रुतत्वतः ।
इज्यायां च विकारोऽस्ति यामाघी भक्षसंस्कृतिः ।।

अत्र विस्तरो यथा—ज्योतिष्टोमे श्रूयते—यदि राजन्यं वैश्यं वा याजयेत्, स यदि सोमं विभक्षयिषेत्, न्यग्रोधस्तिभिनीराहृत्य ताः संपिष्य दधन्युन्मृज्य तमस्मै भक्षं प्रयच्छेत् न सोमम् इति । स्तिभिन्यो मुकुलानि । तत्र उपक्रमोपसंहारयो र्भक्षविषयत्वाद् भक्षमात्रे सोमः पिष्टेन विक्रियते इति चेत्—मैवम् । यदाऽन्यांश्चमसान् जुह्वति, अथैतस्य दर्भतरुणकेणोपहृत्य जुहोति इति श्रुतम् । तत्र फलचमसरूपेण यथोक्तपिष्टेन यागमङ्गीकृत्य तरुणकगुणो विधीयते । किञ्च इष्टद्रव्यसंस्कारो हि भक्षः । स च यागमन्तरेणानुपपन्नः । तस्मात् यागोऽपि विकारः इति । अत्र भक्षसंस्कारः सोमप्रतिषेधश्च यागार्थः प्रकृतौ पिण्डद्रव्य-प्रतिषेधः श्राद्धार्थ इति समन्वयः ।

४१ । नासोमयाजी सन्नयेत् अनागतं वा एतस्य पयः इति वाक्यं दर्श-पूर्णमासप्रकरणे पठितम् । दर्शपूर्णमासीयपौर्णमासे यागत्रयम्—(१) आग्नेय-पुरोडाशयागः, (२) आज्यद्रव्यकोपांशुयागः, (३) अग्नीषोमीय एकादशपुरो-डाशयागश्चेति । दर्शेऽपि यागत्रयम्—(१) आग्नेयपुरोडाशयागः, (२) इन्द्र-देवताकदधिद्रव्यकयागः, (३) इन्द्रदेवताकपयोद्रव्यकयागश्चेति । एते सम्भूय षट् यागा भवन्ति । येन सोययागः कृतः, तस्य एतेषु अधिकारोऽस्ति, येन न कृतस्तस्य दर्शे सान्नाय्ययागे (दधिपयोविकारात्मके) अधिकारो नास्ति । तस्येदं प्रमाणम्—नासोमयाजी सन्नयेत् । अनागतं वा एतस्य पयः । अतः

**च संस्काराधिकरणन्यायेन विकृतित्वात् अतिदेशेनैव धर्मप्राप्तेः। वृद्धगर्ग-वचनस्यैव पिण्डद्रव्यस्य विकृतौ प्रतिषेधः। गर्गवचने तु निर्वापस्यैव प्रतिषेध इति।**

**प्रदक्षिणमनुव्रज्य भुञ्जीत पितृसेवितम्।[४३] ( या० स्मृ० १-२४९ )**

**इति वचनेन श्राद्धशेषस्यापि पितृसेवितत्वावगमात् कृत्स्नस्य पाकस्य पैतृकत्वेन° सर्वदानाधिकरण[४४]न्यायेन पिण्डनिर्वापादिविधेः प्रक्षेप[४५]संस्कारमात्रार्थत्वात्॥**

---

साान्नाय्यद्रव्यं प्रतिषिध्यते। किन्तु यागो भवत्येव। तद्वत् प्रकृते मघाश्राद्धादौ दानशब्देन श्राद्धमुद्दिश्य पिण्डद्रव्यस्य प्रतिसिद्धत्वेऽपि श्राद्धं सिद्ध्यत्येव।

४२। तन्त्रवार्तिके—विभक्षयिषेदिति श्रुतिसंयोगात्तामिति प्रकृतग्राहिश्रुति-संयागात् पुनरपि भक्षश्रुतिसंयोगादानन्तर्यश्रुतेः समानवाक्योपादानाच्च भक्षो भूत्वा तत्समानस्थानं भक्षगतमेव सोमं विकुर्यादिति (३-५-४७) कुमारिलभट्टः।

प्रकृतिवत् विकृतिः कर्तव्या इति न्यायेन च प्रकृता विकृतौ अतिदिश्यन्ते इति न्यायेन च यथा न्यग्रोधस्तिभिन्या आतिदेशिकी भक्षत्वरूपधर्मप्राप्तिस्तद्वत् प्रकृते श्राद्धे अतिदेशेन प्राप्तं पिण्डदानम्। तस्य प्रतिषेधः गर्गवचनेन कृतः इति।

४३। प्रदक्षिणमनुव्रज्य भुञ्जीत पितृसेवितम्।
ब्रह्मचारी भवेत्तां तु रजनीं ब्राह्मणैःसह॥ (या० स्मृ० १-२४९)

४४। सर्वदानाधिकरणं जैमिनीययोः सर्वप्रदानं हविषस्तदर्थत्वात् (३-४-३७) निरवदानात्तु शेषः स्यात् (३-४-३८) इति सूत्रयोः विचारितम्। तत्रेदं भाष्यं यथा—स्तो दर्शपूर्णमासौ। तत्र समाम्नायते यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतो भवति इति। तत्र सन्देहः। किं कृत्स्नं हविरग्नये प्रदातव्यमुत शेषयितव्यं किञ्चित्। किञ्चिद्दातव्यमिति। किं प्राप्तम्। कृत्स्नं हविः प्रदीयेत। कुतः? तदर्थत्वात्। पुरोडाश आग्नेयः कर्तव्य इति वचनम्। तस्मात् सर्वं प्रदातव्यमिति पूर्वपक्षः।

निष्कृष्यावदानं निरवदानम्। तद्धि श्रूयते—द्विहविषोऽवद्यति इति। अपरमपि वचनं द्व्यवदानं जुहोति इति। तेन द्व्यवदानमात्रं होतव्यमन्यत् परिशेषणीयमिति सिद्धान्तः।

एतत् स्पष्टीकृतं तन्त्रवार्तिके भट्टस्वामिना यथा—अष्टाकपालादिशब्दैः समस्तं द्रव्यं देवतार्थमवगमितमाहवनीयप्रक्षेपेण च हविषो देवतार्थता भवति।

---

° पैतृकत्वेन इति खपुस्तकपाठः।

यदाहवनीये जुह्वति इति विधेः अग्निमुखा वै देवाः इति चार्थवादात्। एवं च सति ततश्चेत् किञ्चिदप्यपनीयेत तदाऽन्यच्छ्रुतमन्यत् क्रियेत। तस्मात् सर्वप्रक्षेपः। किं पुनरयं पूर्वपक्षवादी शेषकार्याणां स्विष्टकृदिडाप्राशित्रशंयुवाक-कालभक्षचतुर्धाधिकरणानां विधिं न पश्यति। सत्यं न पश्यतीति केचित्। न त्वेतद्युक्तमेव। न ह्येवं क्वचित् पूर्वपक्षो न भवेत्।

अतः पश्यन्नेवानेनाभिप्रायेण मन्त्रयतः इति वक्तव्यम्।

विद्यमानेषु शेषेषु द्रव्याणामप्रयोजकाः।
भवेयुः शेषभाजो हि निःशेषे तु प्रयोजकाः॥

यदा हि द्व्यवदानमात्रे हुते पुरोडाशादयः सशेषाः क्रियन्ते तदा उत्तरार्धात् स्विष्टकृते समवद्यति इत्येवमादिचोदनावशेन एकदेशद्रव्यं चोत्पत्तौ विद्यमान-संयोगात् इत्येवं स्विष्टकृदादीनामप्रयोजकत्वं भवति। यदा तु खलु सर्वप्रदान-मवगम्यते तदा विद्यमानसंयोगासम्भवाच्चोदितैकदेशानुष्ठानानुपपत्त्या शक्यमेक-देश्युत्पादनवध्यवसातुमिति स्विष्टकृदाद्यर्थं पुरोडाशान्तराण्युत्पाद्येरन्। शेष-शब्दः शेषात् स्विष्टकृते समवद्यति इत्यादिषु कथमिति चेत्—उच्यते। हवि-रन्तरमालोच्य शेषशब्दो भविष्यति। आज्येन शेषं इतिवत्तच्छेषेणेति वच्च नः। यथैव आज्येन शेषं संस्थापयति इति पूर्वकर्मणः पर्यवसानादधिके पूर्वसदृशे वा शेषशब्दः प्रयुज्यते। यथा च ततः शेषेण विशिष्टदेशजात्यादिमन्तो जन्म उत्पद्यन्ते इति स्वर्गफलकर्मणो निःशेषोपयोगादन्यफलस्य चान्यत्र व्यापारा-सम्भवात् ततोऽन्येनेति वक्तव्ये ततः शेषेणेति गौलभाचार्येणोक्तम्। एवमिहापि यत्प्रधानहविर्भ्योऽन्यद्धविस्तेनैवान्यत्वेनाधिक्येन वा भविष्यति। अथवा गुणत्वेन वा शेषादित्येवमभिधास्यते। शेषशब्दो ह्युपयुक्तेतरद्विद्यमानं ब्रवीति। न च प्रधानहविषां किञ्चिद् विद्यते। अन्येषां च सर्वमेतद्रूपमस्ति। तस्माद् द्रव्यान्तराणि गृह्येरन्। यथा वक्षति—निर्देशात्तस्यान्यदर्थादिति चेत् इति। अथाप्यत्यन्तं शेषशब्दानुरोधं कृत्वा तेषामेव किञ्चिच्छेष्यते। तथाप्यस्त्येवान्यद् विचारस्य प्रयोजनं नावश्यं पक्षोक्तेनैव प्रयोजनेन भवितव्यम्। इदमपि सम्भवति। यदा प्रधानवाक्यादशेषप्रदानप्रसक्तौ सत्यां शेषकार्यवशेन शेषाः स्थाप्यन्ते, तथा यथैव प्रधानं तस्य हविषः प्रयोजकमेवं स्विष्टकृदादीन्यपीति। तदर्थावदाननाशदोषापहारेष्वपि प्रधानवदेव हविरन्तरमुत्पाद्येत। यदा पुनः प्रधानचोदनाक्षिप्तस्यैव शेषस्य स्विष्टकृदादीनि ग्राहकाणि भवन्ति तदा तेषां परप्रयुक्तद्रव्योपजीवनादप्रयोजकत्वे सति नाशदोषापहारेष्वप्यक्रिया सिद्धा भवति। तस्मात् सत्यप्युभयोः पक्षयोरसर्वप्रदानेऽस्ति प्रयोजनमित्यर्थवान् विचारः।

चतुरवत्तं जुहोतीतिवत्[४६]। किंच हारीतवचनम्[४७] अर्घ्यसाहचर्येणाङ्गभूतपिण्ड-द्रव्यविषयकमेव न प्रधानभूतपिण्डदानविषयकम्। पिण्डदाने फलश्रवणमपि वैश्वानरवत्[४८] प्रधानफलस्यार्थवादः। अत उभयं प्रधानं केवलमसोमयाजिनः

---

यद्याग्नेयोऽष्टाकपाल इत्येवमाद्येव भवेत्ततः सर्वप्रदानमेवावधार्येत। अत्र पुनस्तस्मात् पुरोडाशादेर्निष्कृष्य किञ्चिदेव होतव्यं श्रूयते। द्विर्हविषोऽवद्यति मध्यात् पूर्वार्धाच्च द्विरवद्यति, अंगुष्ठपर्वमात्रमवदानं भवति द्व्यवदानं जुह्वति इत्येवमादिवाक्यालोचनेन हि किञ्चिदेव होतव्यमवगतमतः शेषयितव्यं किंचित्।

४५। प्रक्षेपसंस्कारो नाम प्रतिपत्तिसंस्कारः। स इत्थं यथा—आकीर्णकरस्य द्रव्यस्य विहितदेशे प्रक्षेपः प्रतिपत्तिः। (मी० प०—पृ० ४५-४६) यथा—

पिण्डांस्तु गोऽजविप्रेभ्यो दद्यादग्नौ जलेऽपि वा।
प्रक्षिपेत् सत्सु विप्रेषु द्विजोच्छिष्टं न मार्जयेत्॥
(या० स्मृ० १-२५६)

४६। अग्निहोत्रहोमे गुणत्वेन (द्रव्यत्वेन) दधि चतुर्वारं हूयते। होमो देवतोद्देशेन पूर्वं विधीयमानत्वात्। तस्य अवदानप्रक्रियया हवनं प्रतिपत्तिकर्मात्मकप्रक्षेपसंस्कारो यथा, तथा निखिलस्य श्राद्धद्रव्यस्य पितृद्देश्येन त्यक्तत्वे तस्य निर्वापः प्रतिपत्तिकर्म।

४७। नित्यश्राद्धमदैवं स्यादर्घ्यपिण्डविवर्जितम् इति वचनम्।

४८। वैश्वानरमुपास्ते इति वाक्येन वैश्वानरविद्योपासनन्यायः कालमाधवे शिवरात्रिव्रतस्य संज्ञानिर्णयविषये विचारितः। स न्यायः अत्र उपस्थाप्यते। विद्युत्-आदित्य-वायु-आकाश-उदक-पृथिवीणां समवायेन वैश्वानरः सिध्यति। तत्रेदं वाक्यं यथा—वैश्वानरमुपास्ते विद्युदादित्यवाय्वाकाशोदकपृथिव्यात्मकैरुपेतम् इति। आदित्येभ्यो जुहोतीत्यादि यो वै देवता इति वाक्येन अङ्गभूताया आदित्यपदोपात्ताया देवतायाः स्तुतेः श्रुतिरपि तत्पदे लक्षणया प्रधानस्य नाम वैश्वानरस्य स्तुतिः सिध्यति। तद् वाक्यमर्थवाद एव। तद्वत् प्रकृते श्राद्धस्य पिण्डदानब्राह्मणस्वीकारपर्यन्तत्वे अङ्गभूतपिण्डदाने फलश्रवणं प्रधानस्य श्राद्धस्य अर्थवादः। फलश्रवणं यथा— (मनु० ३-२६७) इत्यादि।

तिलैर्व्रीहियवैर्माषैरद्भिर्मूलफलेन वा।
दत्तेन मासं तृप्यन्ति विधिवत् पितरो नृणाम्॥

४९। अस्मादेव कारणात् पिण्डदानं ब्राह्मणभोजनं चेत्युभयं प्रधानम्। केवलं नासोमयाजी सन्नयेत् अनागतं वा एतस्य पय इतिवत् पिण्डदानविरहेऽपि प्रधानस्य नाम श्राद्धस्य सिद्धिर्भवति इत्यर्थः। द्रष्टव्या पादटिप्पणी—४१

**सान्नाय्यविरहेऽपि प्रधानसिद्धिवत्[४९] । जैमिनिमते अग्नीषोमीयपशुपुरोडाश-विरहे[५०] असोमयाजिनः पौर्णमासफलसिद्धिवत् क्षत्रियसोमचमसविरहेऽपि फल-चमसेऽपि तत्सिद्धिवत् मघादौ पिण्डविरहेऽपि श्राद्धफलं भवत्येव[५१] । यत्तु विप्रस्वीकारपर्यन्त इति मनुवचनं तद् विप्रस्वीकारांशे अनुवादमात्रम् अर्थप्राप्त-त्वात् प्रतिग्रहस्य । श्राद्धस्य दानत्वेन प्रतिग्रहस्यांगत्वात्[५२] । अन्यथा[५३]**

---

५० । दर्शपूर्णमासीये पौर्णमासे यागत्रयम् । (क) आग्नेयपुरोडाशयागः (ख) आज्यद्रव्यक उपांशुयागः (ग) अग्नीषोमीय एकादशपुरोडाशयागश्चेति । दर्शेऽपि यागत्रयम् (क) आग्नेयपुरोडाशयागः (ख) इन्द्रदेवताकदधिद्रव्यकयागः (ग) इन्द्रदेवताकपयोद्रव्यकयागश्च । सान्नाय्यं नाम दधिपयोविकारात्मकं द्रव्यम् । येन सोमयागः कृतः स सोमयाजी, तस्य एतेष्वधिकारोऽस्ति । येन न कृतः, स असोमयाजी । तस्य दर्शगतसान्नाय्ययागेऽधिकारो नास्ति । किन्तु सान्नाय्यस्य विरहेऽपि यागः सिध्यति । तद्वत् वृद्धगर्गवचनेन पिण्डप्रतिषेधेऽपि श्राद्धं सिध्यति ।

५१ । असोमयाजिनः अकृतसोमयागस्य दर्शगतसान्नाय्यविरहे पौर्णमास-गतसान्नाय्यद्वारा यथा दर्शपूर्णमासयागो निष्पद्यते ( द्रष्टव्या पादटिप्पणी-४१ ) सोमं भक्षयितुमिच्छोः क्षत्रियस्य सोमचमसविरहेण फलचमसेन भक्षक्रियासिद्धिः यथा ( द्रष्टव्या पादटिप्पणी-४० ), तथा मघाश्राद्धे ( यथा नक्षत्रयुक्ते श्राद्धे ) पिण्डविरहेऽपि श्राद्धफलं भवतीत्यर्थः । तत्र वचनं यथा—(देवी० पु० ५८-१७)

भौजंगीं तिथिमासाद्य यावच्चन्द्रार्कसंगमम् ।
तत्रापि महती पूजा कर्तव्या पितृदैवते ।।
ऋक्षे पिण्डप्रदानं तु ज्येष्ठपुत्री विवर्जयेत् ।

इति । अत्र भौजंगी तिथिः पंचमी, पंचम्यां नागपूजाया विहितत्वात् अपरपक्षे ऊर्ध्वं चतुर्थ्याः पितृभ्यो दद्यात् ( ११-१६ ) इति वसिष्ठवचनात् गौतमोक्तेश्च ।

५२ । दानस्य प्रतिग्रहे पर्यवसानात् प्रतिग्रहो दानस्य अंगम् । प्रतिग्रहा-भावेन दाननिष्पत्तेरभावात् श्राद्धे प्रतिग्रहीतृस्थानीयविप्रकर्तृकस्वीकारेण दाननिष्पत्तेरवश्यम्भावात् । विप्रस्वीकारपर्यन्त इति मनूक्तिरनुवादमात्रमिति मानान्तरप्राप्तस्य पुनः कथ्यमानरूपत्वमनुवादत्वम् ( मी० प० पृ०—२ ) इति अनुवादस्य स्वरूपेण तत्साम्यात् ।

५३ । अन्यथा नाम पिण्डदानस्य अंगत्वे ।

पितॄनुद्दिश्येत्यसंगतेः। अत एवामुकामुकगोत्र इति तत्तुभ्यमन्नं स्वधा नम इत्येवं वाक्यं ब्रह्मपुराणेऽभिहितम्। न त्वामन्त्र्य गोत्रोच्चारणम्। एवं यथा अतिरात्रे षोडशिनं न गृह्णाति (मै० सं० ४-७-६) इत्यत्र षोडशिग्रहस्यैव° प्रतिषेधः[५४]। ग्रहणस्य ग्राह्यप्राप्तिफलत्वात्। सोमाभावाच्च षोडशियाग-निवृत्तिः। एवं पिण्डद्रव्यप्रतिषेधात् पिण्डदाननिवृत्तिरिति। अतएव—

अग्नौ हुतेन देवस्थाः पितृस्था द्विजतर्पणैः।
नरकस्थाश्च तृप्यन्ति पिण्डैर्दत्तैस्त्रिभिर्भुवि॥

इति पिण्डदानस्य ब्राह्मणभोजनसाम्येन समकक्षफल[५५]श्रवणम्°। न चैवमग्नौ-करणहोमस्यापि प्रधानत्वापत्तिरिति वाच्यम्। तस्य यावदितिकर्तव्यताम्नातं तावद्विशिष्टस्यैव प्रधानत्वात्। अतएव

अग्नौकरिष्यन्नादाय पृच्छत्यन्नं घृतप्लुतम्।
कुरुष्वेत्यभ्यनुज्ञातो हुत्वाग्नौ पितृयज्ञवत्॥ (या० स्मृ० १-२३६)

इति याज्ञवल्क्येन वाचनिको धर्मातिदेश उक्तः[५६]। अन्यथा "उच्छिष्टसन्निधौ

---

५४। ज्योतिष्टोमयागप्रकरणे श्रूयते—अतिरात्रे षोडशिनं गृह्णाति, नातिरात्रे षोडशिनं गृह्णाति (मै० सं० ४-७-६) इति। अत्र ग्रहशब्देन गृह्यते इति ग्रह इति व्युत्पत्त्या ग्राह्यं वस्तु सोमरसः, गृह्यते अस्मिन् इति ग्रहः पात्रविशेषः, गृह्यते अस्य उद्देश्येनेति ग्रहो नाम उद्देश्यभूता देवता, गृह्यते अनेनेति ग्रहो नाम ग्रहणकालीनपठ्यमानो मन्त्रश्च गृह्यते। अत्र ग्रहशब्देन ग्राह्यं वस्तु सोमरसो विवक्षितः। स च अतिरात्राख्ये यागे षोडश-संख्यापूरणभूते ग्रहे विकल्पेन न गृह्यते। अर्थात् षोडशिग्रहे पात्रविशेषे सोमरसस्य ग्रहणाभावेन (षोडशिग्रहाधिकरणकस्य तद्देवतोद्देश्येन त्यागाभावात्) ग्रहणक्रियायां ग्राह्यवस्तुनः सोमस्य ग्राहकेण देवताभूतेन प्राप्तेरसम्भवात् षोडशियागनिर्वाहो न भवति यथा तथा मघादौ पिष्टद्रव्यप्रतिषेधात् पिण्डदान-क्रिया न भवति।

५५। पिण्डदान-ब्राह्मणस्वीकारयोः श्राद्धस्वरूपत्वेन कथनात् तयोः समत्वं दर्शयितुमेतद्वचनमुपन्यस्तम् अग्नौ हुतेन इति। किन्तु श्राद्धे अग्नौ-करणहोमो न प्रधानम्। पद्धतौ यस्मिन्नंशे दर्वीद्वारा अवदातस्य हविषोऽग्नौ प्रक्षेप आम्नातस्तस्मिन्नंशे अग्नौकरणहोमस्य प्राधान्यं, न तु निखिले श्राद्धयागे इत्यर्थः।

५६। अग्नौकरणहोमस्य निखिले श्राद्धभागे प्रधानत्वाभावेऽपि, यस्मिन्नंशे

---

° षोडश इति खपुस्तकपाठः। ° श्रवणात् इति खपुस्तकपाठः।

पिण्डान् प्रदद्यात् पितृयज्ञवदि"त्यनेनैव अग्नौकरणहोमप्राप्तेः पृथगतिदेशवचनं व्यर्थं स्यात् । अतएव न क्रममात्रं विधीयते धर्मातिदेशवचनवैयर्थ्यात् ।

वस्तुतस्तु[५७] पितॄनुद्दिश्य द्रव्यत्याग एव प्रधानम् । सपिण्डकश्राद्धे प्रथममेव कृत्स्नस्य पाकस्य पित्रुद्देश्येन त्यक्तत्वात् पिण्डदानमपि वपाप्रचारहृदयाद्यङ्गप्रचारविप्रकर्षवत् तावत्कालव्यापी प्रधानपदार्थः[५८] । उत्पत्तिविधावेकत्वश्रवणात् सोमवद्वैक एवाभ्यस्यते[५९] । पशुपुरोडाशवद् देवतास्मारकत्वेन तत्स-

---

प्राधान्यं तत् पितृयज्ञवत् इति वचनात् पिण्डपितृयज्ञे यथा भवति, तथाऽत्र कर्तव्यम् । तत् स्पष्टं मिताक्षरायाम् ( १-२३६ ) यथा—अनन्तरमग्नौ करिष्यन् घृतप्लुतं घृताक्तमन्नमादाय, ब्राह्मणान् पृच्छेत् अग्नौ करिष्ये इति । घृतग्रहणं सूपशाकादिनिवृत्त्यर्थम् । ततस्तैः कुरुष्वेत्यप्यनुज्ञातः प्राचीनावीती शुद्धमन्नमुपसमाधायावदानसम्पदा जुहुयात्, सोमाय पितृमते स्वधा नमः, अग्नये कव्यवाहनाय स्वधा नमः इति पिण्डपितृयज्ञकल्पेन अग्नौ हुत्वा इति ।

५७ । यदुक्तं पिण्डदानं ब्राह्मणभोजनमिति द्वयं प्रधानमिति तन्न । किन्तु पितॄनुद्दिश्य द्रव्यत्याग एव प्रधानम् । सपिण्डकश्राद्धे प्रथमं पितृभ्यस्त्वा जुष्टं प्रोक्षामि इत्यादिना प्रोक्षणकाले अपि सर्वस्य पाकस्य पित्रुद्देश्येन त्यक्तत्वात् पित्रुद्देश्यकत्यागस्यैव प्राधान्यं न तु ब्राह्मणभोजनस्य न वा पिण्डदानस्य न वा तयोरुभयोरिति ।

५८ । पशुना यजेतेत्यत्र पशुद्रव्यके यागे देवतोद्देश्येन पशोस्त्यक्तव्यत्वमीरितम् । किन्तु तत्र पशोः साक्षात् नांगत्वम् । हृदयस्याग्रेऽवद्यति ( तै० सं० ६-३-१०-४ ) इति श्रुत्या पशोरवदानं विहितम् । तत्रोत्पन्नानां लोहितशकृदादीनां मलत्वे शकृन्निरस्यति, लोहितं निरस्यतीत्यादि श्रुत्या तेषां त्यागो विहितः । अथ शिष्टानां वपादिद्रव्याणां देवतोद्देश्यकत्यागेन पशुपुरोडाशको यागः सिध्यति । अत्र अवदानप्रक्रिययोत्पन्नैः पशुगतांगकलापैर्वपादिभिः पशोर्द्रव्यत्वं सिध्यति । तत्स्पष्टं मी० न्या० प्र० टीकायां प्रभाख्यायां ( पृ ७५ ) पशुना यजेतेत्यत्र हविष्ट्वेन रूपेण निर्दिष्टोऽपि पशुर्न साक्षाद्यागाङ्गं किन्तु स्वकीयहृदयाद्यवयवद्वारैव याग उपयुज्यत इति यथा, तथा सपिण्डकश्राद्धे निखिलस्य पाकस्य पित्रुद्देश्येन त्यक्तत्वेऽपि श्राद्धे पिण्डदानावधिकालव्यापि तस्योपयोज्यत्वमस्ति ।

५९ । कर्मस्वरूपमात्रबोधको विधिरुत्पत्तिविधिः ( मी० न्या० प्र० पृ०-७६ ) । सोमेन यजेत ( तै० सं० ३-२-२-१५ ) इत्यत्र सोमयागस्वरूपमात्रबोधनादुत्पत्तिविधिः । यागस्य द्रव्यदेवतांगकत्वेऽत्र द्रव्याकांक्षायां सोमो

न्निपातिसंस्कारविशेषोंऽगं पिण्डदानम्[६०]। ब्राह्मणभोजनसमय एव कृत्स्नपाकस्य पित्रुद्देश्येन त्यक्तत्वेऽपि पिण्डदानकाले पुनः स्वीकरणं स्विष्टकृद्वदविरुद्धम्[६१]। इत्यपि गभीरोऽयं न्यायमहाह्रद इति उपरम्यते इति श्राद्धप्रदीपे अङ्गप्रधाननिर्णयः प्रथम° आलोकः ।।

—०—

---

बोध्यते। सोमरूपस्य द्रव्यस्य विनियोगाधिकरणत्वेन सोमयागस्योक्तौ सोमवान् याग इत्यर्थ आयाति। सोमोऽस्यास्तीति सोमो यागस्तेन यजेतेति स्पष्टार्थः। अत्र यथा एकस्मिन् सोम इति पदे यागो, यागस्य विशिष्टत्वं (सोमविशिष्टो यागः) च अभ्यासात् एकमेव बोध्यते तथा पितॄनुद्दिश्य द्रव्यत्याग इत्यत्र एकस्मिन् द्रव्यत्यागपदे अभ्यासेन कृत्स्नपाकत्यागस्य पिण्डदानोपसंहारेण एकत्वं सिध्यति।

६०। उत्पत्तिविधि-विनियोगविधि-प्रयोगविधि-अधिकारविधिषु विनियोगविधेः (अंगप्रधानसम्बन्धबोधको विधिः विनियोगविधिः—मी० न्या० प्र० पृ०—७२) अंगं द्विविधम्। सिद्धिरूपं क्रियारूपं चेति। क्रियारूपं पुनः द्विविधम्। सन्निपत्योपकारकम्, आरादुपकारकं चेति। कर्मांगभूतद्रव्यदेवतादिकमुद्दिश्य तत्संस्कारत्वेन विधीयमानं सन्निपत्योपकारकांगम्। यथा—पशुपुरोडाशस्विष्टकृद्वाजिनयागादि। पशुपुरोडाशो नाम पशुयागांगभूतो वपायागानन्तरं हृदयाद्यंगयागात्पूर्वं क्रियमाणः पशुदेवतोद्देशकः पुरोडाशद्रव्यको यागः। स च वपायागे उद्दिष्टां हृदयादियागे उद्देश्यमाणां देवतां स्मारणेन संस्करोति (त० सि० र—पृ० १०६) इति। श्राद्धीयविनियोगविधौ क्रियारूपांगं पिण्डदानादि कर्म। तत्र द्रव्यमन्नादि, देवता पित्रादि। पितॄनुद्दिश्य त्यक्तस्य (द्रव्यस्य) अन्नस्य पिण्डदानकाले पितॄन् देवतात्वेन संस्कृत्य त्यागात् पिण्डदानस्य सन्निपत्योपकारकांगता।

६१। स्विष्टकृद्यागः प्रधानयागोपयुक्तं द्रव्यं प्रक्षेपांशेन संस्करोति। (त० सि० र०—पृ १०७)। प्रकृते तु पित्रुद्देश्यकत्यागरूपप्रधानयागोपयुक्तः कृत्स्नः पाको ब्राह्मणभोजनकाले तन्मुखे हस्ते वा प्रक्षेपेण संस्क्रियते। अतः स्विष्टकृद्यागवत् न विरुद्धम् इति।

विप्रमिश्रकृतश्राद्धप्रदीपस्य अङ्गप्रधाननिर्णये प्रथमालोके श्रीव्रजकिशोरस्वाईकृता रश्मिटिप्पणी समाप्ता।।

—०—

---

° प्रथमालोक इति खपुस्तकपाठः।

# क्रमालोकः

जैमिनेर्मतमालोक्य[1] विप्रमिश्रेण धीमता ।
क्रियते श्राद्धदीपस्य क्रमालोकः सुनिर्मलः[2] ।।

ततः[3] श्रुत्यर्थपठनस्थानमुख्यप्रवृत्तयः क्रमप्रकरणानि । तत्रैकप्रयोगवचनविधेयानामेव[4] क्रमो भिन्नप्रयोगवचनविधेयेष्वानन्तर्यमात्रम् ।

---

रश्मिः १ । एतस्मिन्नालोके कः क्रमः ? तस्य वा का उपादेयता ? श्राद्धभागे कुत्र कुत्र तस्य प्रवेशो दृश्यते इति विषया आलोचिताः । स क्रमो विधिमन्त्रनामधेयनिषेधार्थवादात्मकस्य वेदस्य विधिभागविषयः । तदुक्तं मीमांसान्यायप्रकाशे (१७१-७३) आपदेवेन—विधिमन्त्रनामधेयनिषेधार्थवादात्मको वेदः । तत्र विधिश्चतुर्विधः । उत्पत्तिविधिर्विनियोगविधिः प्रयोगविधिरधिकारविधिश्चेति । तत्र प्रयोगविधिर्नाम प्रयोगप्राशुभावबोधको विधिः । स चाङ्गवाक्यैकवाक्यतामापन्नः प्रधानविधिरेव । स हि साङ्गं प्रधानमनुष्ठापयन् विलम्बे प्रमाणाभावादविलम्बापरपर्यायं प्रयोगप्राशुभावं विधत्ते । स चाविलम्बो नियते क्रमे आश्रियमाणे भवति । अन्यथा हि किमेतदनन्तरमेतत् कर्त्तव्यमेतदनन्तरं वेति प्रयोगविक्षेपापत्तेः । अतः प्रयोगविधिरेव स्वविधेयप्रयोगप्राशुभावसिध्यर्थं नियते क्रममपि पदार्थविशेषेण तथा विधत्ते इति ।

२ । सुनिर्मल इति शूलपाणिमतनिरासार्थः ।

३ । श्रुतिक्रमः, अर्थक्रमः, पाठक्रमः, स्थानक्रमः, मुख्यक्रमः, प्रवृत्तिक्रमश्चेति षड्विधः क्रमो जैमिनीये पञ्चमाध्याये दर्शितः ।

४ । तत्र क्रमः कीदृश इति क्रमलक्षणं विवृणोति—एकप्रयोगवचनविधेयानामेवेति । अत्र वचनं नाम वाक्यम् । तस्य पदान्तरसमभिव्याहाररूपत्वात् । एकप्रयोगवचनं नाम एकस्मिन् प्रयोगविधौ वर्तमानं यद् वाक्यं, तेन प्रतिपादिता द्रव्यदेवतात्मिका गुणपदार्था विधेया भवन्ति । तेषां स्वरूपप्रदर्शनमुखेन विधिना सह सम्बन्ध उक्तो युक्तिस्नेहप्रपूरण्याम् (५-१-१)—यथा—विधिः कार्यात्मा स्वस्य कार्यतासिध्यर्थं यस्यानुष्ठानमाक्षिपति तद्विधेयमिति । भिन्नप्रयोगवचनविधेयेषु इत्यत्र भिन्ने नाम विविधे प्रयोगविधौ वर्तमानेन विविधेन वाक्यजातेन प्रतिपादिता ये विधेयाः पदार्थाः, तेषां यदानन्तर्यमात्रं तत्पौर्वापर्यमात्रमेव न तु मीमांसादर्शनदर्शितः क्रमपदार्थः । क्रमस्य स्वरूपं भङ्ग्यन्तरेण प्रदर्शितं

तदुक्तम्[5]—

क्रमोऽपि शेष[6] एवैकप्रयोगवचनाश्रयः[7] । इति ।

तत्र श्रुतिक्रमो[8]—यत्र[9] क्रमपरवाक्यं विशिष्टपदार्थाभिधायकं वा । यथा—

---

मी० न्या० प्रकाशे (पृ० १७३)—तत्र क्रमो नाम विततिविशेषः पौर्वापर्यरूपो वा इति । विततिं विवृणोति युक्तिस्नेहप्रपूरणीकारो यथा—विततिर्नाम तृणादिप्रचयस्यैकस्मिन् देशे पूर्वापरभावापन्नतद्देशावयवशो विस्तार एव एकस्मिन् पौर्णमास्यादिकालेऽनुष्ठेये क्रियाप्रचयस्य पूर्वापरभावापन्नानेकक्षणेषु विस्तार इति ।

५ । अत्र स्वलक्षणसमर्थकवचनमुत्थापयति तदुक्तमित्यादिना । तस्मादुक्तं तदुक्तमिति तत्पुरुषसमासः । तेन क्रमोपि शेष इति वचने पूर्वपक्षशङ्का न कार्या ।

६ । शेषो नाम अङ्गम् । तच्चाङ्गत्वं शेषत्वं पारार्थ्यमिति यावत् इति अङ्गविषयकविचारे मीमांसापरिभाषायां (पृ० ४२) कृष्णयज्वना शेषस्याङ्गार्थत्वं प्रदर्शितम् ।

७ । एकप्रयोगवचनाश्रयो नाम विध्याक्षिप्तानां विधेयानां पदार्थानां प्रयोजनवशेन पूर्वापरतया च एकस्मिन् प्रयोगे यस्य कृते आश्रयभूतत्वं सः । अर्थात् क्रमः ।

८ । श्रुत्यादीनां षण्णां क्रमाणां स्वरूपं सोदाहरणं दर्शयति ग्रन्थकारः । तत्रादौ श्रुतिक्रमस्य तत्र श्रुतिक्रम इत्यादिना । जैमिनीये—श्रुतिलक्षणमानुपूर्व्यं तत्प्रमाणत्वात् (५-१-१) इति सूत्रे श्रुतिक्रमो विचारितः । तत्रोपोद्घाते भाष्यकारः शबर आह—श्रुतिः श्रवणमक्षराणां, तन्निमित्तं यस्य क्रमस्य स साधुः क्रमः । श्रुतिप्रमाणिका हि वैदिका अर्थाः । नैतदन्यत्प्रमाणमस्तीत्युक्तम् इति । अत्र अक्षराणणामिति क्त्वाल्यब्त्वादिरूपाणां पौर्वापर्यकालबोधकानामिति यावत् । तच्च विशदीकृतं तन्त्रसिद्धान्तरत्नावल्यां (पृ० ११६) चिन्नस्वामिशास्त्रिणा—तत्र श्रुतिर्नाम वृत्त्या क्रमबोधकः क्लृप्तशब्दः । सः अथ-ततः-क्त्वा-ल्यबादिरूपः । तत्र अथ-ततः शब्दयोरानन्तर्यवाचित्वं शक्त्यैव । क्त्वाप्रत्ययादीनां तु पूर्वकालत्वादिवाचिनामपेक्षावशात् क्रमबोधकत्वं लक्षणमिति ।

९ । तस्य श्रुतिक्रमस्य द्वैविध्यं ग्रन्थकारेण प्रदर्शितं यत्र क्रमपरम् इत्यादिना । यथा—केवलक्रमपरः, क्रमविशिष्टपदार्थपरश्चेति । यत्र क्त्वाल्यबादिरूपैः क्रमबोधकशब्दैः क्रमः साक्षादुक्तः स केवलक्रमपरः । यत्र तु क्रमो विधेयान् पदार्थान् द्रव्यदेवतादिरूपान् आश्रित्य वर्तते स क्रमविशिष्टपदार्थपरः इति ।

**अध्वर्युर्गृहपतिं[१०] दीक्षयित्वा ब्रह्माणं दीक्षयति, ऐन्द्रवायवान्[११] ग्रहान् गृह्णीयादिति । यत्र[१२] प्रयोजनवशेनादृष्टार्थतापरिहाराय य आश्रीयते सः अर्थक्रमः । यथा—अग्निहोत्रं जुहोति यवागूं पचतीति ।**

---

१०। केवलक्रमपरस्य उदाहरणं द्वादशाहे सत्रभूते श्रूयते । यथा—अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयति, तत उद्गातारं, ततो हातारम् । ततस्तं प्रतिप्रस्थाता । दीक्षयित्वार्धिनो दीक्षयति, ब्राह्मणाच्छंसनं ब्रह्मणः, प्रस्तोतारमुद्गातुः, मैत्रावरुणं होतुः । ततस्तं नैष्टा दीक्षयित्वा तृतीयिनो दीक्षायति, आग्नीध्रं ब्रह्मणः, प्रतिहर्तारमुद्गातुः, पोतारं ब्रह्मणः, सुब्रह्मण्यमुद्गातुः, ग्रावस्तुतं होतुः । ततस्तमन्यो ब्राह्मणो दीक्षयति ब्रह्मचारी वाचार्यप्रेषित इति । अत्र वाक्ये दीक्षयित्वा ततस्तम् इति पदयोः क्त्वा ततोऽक्षराणां श्रवणात् केवलक्रमपरः श्रौतक्रम इति ज्ञायते ।

११। क्रमविशिष्टपदार्थपरस्य श्रौतक्रमस्य उदाहरणं यथा—ऐन्द्रवायवाग्रान् ग्रहान् गृह्णीयात् ( मै० सं ४-५-८ ) इति । एतस्यानन्तरवाक्यं यथा—मैत्रावरूणं गृह्णीयात् ईति । सोमयागेषु अग्निष्टोमसंस्था एका संस्था । सा सर्वासां संस्थानां प्रकृतिः । तत्र ग्रहो गृह्यते । प्रयोजनं वीक्ष्य ग्रहशब्दे पञ्च अर्थाः कल्प्यन्ते । ग्रहणं ग्रहः नाम ग्रहणक्रिया इत्येकोऽर्थः । गृह्यते यः स ग्रहः सोमरस इति द्वितीयोऽर्थः । गृह्यते सोमरसोऽस्मिन्निति ग्रहो नाम पात्रविशेषः इति तृतीयोऽर्थः । गृह्यते अस्यै देवतायै इति ग्रहो नाम देवता विशेषः इति चतुर्थोऽर्थः । गृह्यते उच्चारणेन अस्य इति ग्रहो नाम मन्त्रविशेषः इति । अत्र प्रकृते ग्रहपदे पात्रविशेषो विवक्षितः । ग्रहं सम्मार्ष्टि इति वाक्येन ग्रहपदे गृहीतानां पात्राणां सम्मार्जनविधिरुक्तः । सति ग्रहाणां बाहुल्ये सम्मार्जनक्रियाया एककर्तृकसम्पाद्यत्वे यदृच्छया सम्मार्जनमुत कश्चन क्रम आश्रयणीय इति शङ्कायाम् ऐन्द्रवायवाग्रान् ग्रहान् गृह्णीयादिति वाक्यस्यावतारः । अत्रायं भावो यत् इन्द्रवायुदेवतोद्देशेन सोमरसः येषु ग्रहविशेषेषु नाम पात्रविशेषेषु गृहीतः, तान् प्रथमं गृह्णीयात् अनन्तरं मित्रावरुणोद्दिष्टान् । अत्रायं क्रमः पदार्थं नाम पात्रविशेषमाश्रित्य वर्तमानत्वात् क्रमविशिष्टपदार्थपरः इति ।

१२। अर्थक्रमस्य लक्षणं सोदाहरणं दर्शयति ग्रन्थकारः यत्र प्रयोजन इत्यादिना । लक्षणे अर्थः स्पष्टः । अग्निहोत्रहोमे यवागूः द्रव्यम् । सा पचनसाध्या । पचनेन लब्ध्या यवाग्वा अग्निहोत्रं भावयेदिति शास्त्रार्थः । अत्र हवनस्य प्रथमपाठः, पचनस्य अनन्तरपाठः । हवनपचनयोः पचनसाध्यभूतेन

**विधायकवाक्यस्थो[13] मन्त्रवाक्यस्थो वा यः पदार्थेष्वाश्रीयते स पाठक्रमः। यथा—प्रयाजादीनाम्। प्रकृतौ[14] नानादेशावगतानां पदार्थानां विकृतौ° एकस्य**

---

यवाग्वात्मकद्रव्येण अग्निहोत्रस्य सिद्धौ पचनस्य प्राक्प्रयोजनत्वात् तत् प्रथमम्, अनन्तरं होमः। होमानन्तरं यवाग्वाः पाके दृष्टफलस्य कस्यचनाभावात् केवलमदृष्टं कल्पनीयं स्यात्। लोकव्यवहारिण्यां मीमांसायां सति दृष्टार्थे अदृष्टार्थकल्पनायाः गौरवलक्षणदोषसत्त्वात् तत्परिहाराय प्रयोजनानुसारेण यवागूपाकस्य प्राथमिकता सिध्यति। अर्थाच्च (५-१-२-२) इति जैमिनीय-सूत्रस्य भाष्ये शबरेणाप्येतत् सिद्धान्तितम्। यथा—अग्निहोत्रं जुहोतीति पूर्वमाम्नातम्। ओदनं पचतीति पश्चात्। असम्भवात् पूर्वमोदनः पक्तव्यः इति। एतद्भाष्यं स्पष्टीकुर्वता माधवाचार्येणापि उक्तं जै० न्या० विस्तरे, यथा—द्रव्यमन्तरेण होमासम्भवात् द्रव्यनिष्पत्त्यै पाकस्यैव प्राथमिकत्वावश्यम्भावात्। होमद्रव्यत्वं च यवाग्वाः यवाग्वाग्निहोत्रं जुहोति इति तृतीययावगम्यते। तस्मात् पाठक्रमं बाधित्वार्थतः क्रमोऽभ्युपगन्तव्यः इति।

१३। अर्थक्रमं निरूप्य पाठक्रमं निरूपयति ग्रन्थकारः विधायकवाक्यस्य इत्यादिना। यागे विहितानां पदार्थानां विधायकं यद् वाक्यं तद् ब्राह्मण-वाक्यापरपर्यायान्तर्गतम्। मन्त्रवाक्यं तु प्रयोगकाले प्राकरणिकमर्थं स्मारयति। तदुक्तं मीमांसापरिभाषायाम् (पृ० १०)—प्रयोगकालीनार्थस्मरणहेतुतया मन्त्राणामुपयोग इति वक्ष्यते। प्रयोगोऽनुष्ठानं तत्कालीनेत्यर्थः। विधायकं वाक्यं ब्राह्मणम् इति। मन्त्रवाक्यद्वारा ब्राह्मणवाक्यद्वारा च पाठक्रमो लक्ष्यते। यथा—प्रयाजादिषु इति। दर्शपूर्णमासयोः सहकारित्वेन प्रयाजयागो विधीयते। तत्र समिद्यागः, तनूनपाद्यागः, इडोयागः, बर्हियागः, स्वाहाकारयागश्चेति अवयवाः सन्ति। ब्राह्मणवाक्येषु एषामवयवभूतानां यागानामनुष्ठानगतक्रम-विषयेऽनुक्तत्वात् यत्क्रमेण केवलंपाठोऽस्ति तत्क्रमेण अनुष्ठातव्यः इति जैमिनीये क्रमेण वा नियम्येत क्रत्वेकत्वे तद्गुणत्वात् (५-१-४) इति सूत्रे विचारितः। तत्राह भाष्यकारः शबरः—दर्शपूर्णमासयोराम्नातं—समिधो यजति, तनूनपातं यजति, इडो यजति, बर्हिर्यजति, स्वाहाकारं यजतीति। तत्र संशयः किम-नियमेनैव क्रमेणैषामनुष्ठानमुत यः पाठक्रमः स एव नियम्येतेति। किं प्राप्तम्। नियमसारिणः शास्त्रस्याभावादनियम इत्येवं प्राप्ते ब्रूमः क्रमेणैव नियम्येतैकस्मिन् क्रताविति। कुतः। तद्गुणत्वात्, तद्गुणत्वं हि गम्यते पदार्थानाम्। यथा

---

° विकृतावेकदेशे इति खपुस्तकपाठः।

देशे सर्वेषामनुष्ठाने वचनात् कर्तव्ये यस्य देशेनुष्ठीयते तस्य प्रकृत्यवगतस्थाना-बाधेनागन्तुकः यः क्रमः समाश्रीयते स स्थानक्रमः। यथा साद्यस्क्रे° सर्वनाम-स्थाने अग्नीषोमीयादिषु सहपशूनालभेत इति वचनात् अनुष्ठीयमानेषु आश्विन-ग्रहं गृहीत्वा आग्नेयं सवनीयं पशुमुपाकरोतीति आश्विनग्रहान्वयं न बाध्यते। प्रवृत्तिक्रमस्तु° सहप्रयुज्यमानेषु[15] प्रधानेषु संनिपातिनामङ्गानामावृत्त्यानुष्ठाने

---

स्नानादनुलिम्पेत्, भुंजीतेति च क्रमेणानुष्ठानमवगम्यते वाक्यात्पदार्थानाम्। यथा चादृष्टार्थेषुपदिश्यमानेषु कश्चिद् ब्रूयात् देवाय धूपो देयः, पुष्पाण्यव-कारितव्यानि, चन्दनेनानुलेप्तव्यः, उपहारोऽस्भा उपहर्तव्यः एवं कृते देवः तुष्यतीति। तमन्यः प्रतिब्रूते–नैतदेवं, न प्रथमं धूपो दातव्यः, प्रथमं पुष्पाण्यव-कारितव्यानीति। एवं मन्यते, धूपदानस्य प्राथम्यमनेनोक्तमिति। तस्माद् वाचनिक एषामेव क्रमः इति।

१४। पाठक्रमं निरूप्य इदानीं स्थानक्रमं निरूपयति ग्रन्थकारः प्रकृतौ इत्यादिना। प्रकृतियागे विभिन्नदेशेषु विहिता भवन्ति ये पदार्थाः, विकृति-यागेषु प्रकृतिवत् विकृतिः कर्तव्या इति न्यायेन अतिदिश्यन्ते। विशेषवचनेन प्रकृतिगताः नानादेशविहितपदार्थाः यदा विकृतौ एकस्मिन् देशेनुष्ठानाय चोद्यन्ते तदा प्रकृतिद्वारा बोधितस्थानं न बाधित्वा यो नूतनक्रमः आश्रीयते स स्थानक्रम इति। उदाहरणं यथा–साद्यस्क्रे इति। सर्वेषां सोमयागानां ज्योतिष्टोमः प्रकृतिः। तत्र त्रयः पशुयागाः अग्नीषोमीयः, सवनीयः, आनुबन्धश्चेति। ते भिन्नेषु देशेषु भवन्ति। यथा–अग्नीषोमीयः औपवसथ्ये अह्नि। सवनीयः सुत्याकाले। आनुबन्धस्तु अन्त्ये। साद्यस्क्रो ज्योतिष्टोमस्य विकृतियागः सांग एकदिनसाध्यः। तत्र प्रकृतिगता दीक्षणीयाध्यवभृथान्ताः सर्वे पदार्थाः एकस्मिन्नेव अहनि चोदकप्राप्ताः। सहपशूनालभेत (आप० श्रौ० सू० २२-३-१०) इति विशेषवचने सहशब्दप्रयोगात् अग्नीषोमीयादयस्त्रयः पशुयागाः एककालानुष्ठेयतया विहिता भवन्ति। ते च सवनीये स्थाने भवन्ति। कारणं तु इत्थं यत् सवनीयदेशे हि अनुष्ठाने क्रियमाणे अग्नीषोमीय-आनुबन्ध्ययोः स्वस्वस्थानातिक्रममात्रं भवति। अग्नीषोमीयदेशेऽनुष्ठाने क्रियमाणे सवनीयस्य स्वस्थानातिक्रममात्रम्। आनुबन्ध्यस्य तु स्वस्थानातिक्रमः सवनीयस्थानाति-क्रमश्च स्यात्। एवमानुबन्ध्येऽग्नीषोमीयस्य द्रष्टव्यः। एवं च सवनीयदेशे त्रयाणां पशूनामनुष्ठाने प्राप्ते तत्र सवनीयस्यैव प्रथमोपस्थितत्वेन तस्यैव

---

° साद्यस्क्रे इति खपुस्तकपाठः।

कर्तव्ये प्रथम इव द्वितीयादिष्वपि अङ्गप्रधानसाहित्याबाधार्थमाश्रीयते । यथा—

---

प्रथममनुष्ठानम् । सवनीयपूर्वतने पदार्थेऽनुष्ठिते सवनीयस्यैवोपस्थितेः । प्रकृतिभूते ज्योतिष्टोमे—आश्विनं ग्रहं गृहीत्वा त्रिवृता यूपं परिवीयाग्नेयं सवनीयं पशुमुपाकरोति ( शत० ब्रा० ४-२-४-१२, आप० श्रौ० १२-१८-१२ ) इति वचनेन आश्विनग्रहग्रहणोत्तरं सवनीयपशूपाकरणं विहितम् । तथा च साद्यस्क्रेऽपि आश्विनग्रहणे कृते सवनीय एवोपस्थितो भवतीति युक्तम् । एवं क्रियमाणे आश्विनग्रहग्रहणपरवर्ति यत् सवनीयपशूपाकरणगतमानन्तर्यं न बाध्येत इति । अनेन सवनीयस्य प्रथममनुष्ठानम् । अग्नीषोमीय-आनुबन्ध्ययोश्च स्थानक्रमात् पश्चात् इति ग्रन्थकर्तुरभिप्रायः । सोऽयं विषयः जैमिनीये स्थानाच्चोत्पत्तिसंयोगात् ( ५-१-१३ ) इति सूत्रे विचारितः । तत्राह भाष्यकारः शबरोः यथा—साद्यस्क्रे श्रूयते सहपशूनालभत इति । तत्रैषोऽर्थः समधिगतः । सवनीयकाले त्रयाणामालभ्य इति । अथात्र पाठक्रमात् किमग्नीषोमीयः पूर्वमालब्धव्य उत स्थानक्रमात् पूर्वं सवनीय इति । किं प्राप्तम् । पूर्वमग्नीषोमीयः इति । कुतः, पाठक्रमात् । एवं प्राप्ते ब्रूमः सवनीयः पूर्वं स्थानात् । यदि पूर्वमग्नीषोमीयः स्यात् सवनीयस्थानं व्याहन्येत । आश्विनं गृहीत्वा त्रिवृता यूपं परिवीयेति । नन्वितरत्रापि पाठक्रमो बाध्येत । बाध्यताम् । तस्य हि प्रतिषेधार्थः सहशब्दसमाम्नातः । अप्रसिद्धं चाश्विनग्रहस्थानम् । तन्न बाधितव्यम् इति ।

१५ । अथ प्रवृत्तिक्रमो निरूप्यते ग्रन्थकृता प्रवृत्तिक्रमस्त्वित्यादिना । मुख्ययागमुपकुर्वतामंगानां सन्निपत्योपकारकांग-आरादुपकारकांगभेदेन भागद्वयम् । तत्राद्यस्य लक्षणमाह मीमांसापरिभाषाकारो (पृ० ४३ ) यथा यान्यंगानि साक्षात् परम्परया वा प्रधानयागशरीरं निष्पाद्य तद् द्वारा तदुत्पत्त्यपूर्वोपयोगीनि तानि सन्निपत्योपकारकाणि । यथा— व्रीह्यादिद्रव्याणि, तत्संयुक्तावहननप्रोक्षणादीनि, अग्न्यादिदेवतातत्संयुक्तयाज्यानुवाक्यावचनादीनि च । तत्र प्रोक्षणादेर्व्रीहिगतातिशयद्वारा, अवहननादेस्तुषविमोक्षादिरूपदृष्टद्वारा, व्रीह्यादीनां पिष्टद्वारा पुरोडाशनिष्पादकत्वं, तद्द्वारा यागशरीरतदुत्पत्त्यपूर्वोपयोगित्वं च । याज्यानुवाक्यादेर्देवतासंस्कारद्वारा देवतायाश्च साक्षाद्यागशरीरनिर्वर्तकत्वं तद्द्वारा तदुत्पत्त्यपूर्वोपयोगित्वं च यागस्य देवतोद्देश्येन द्रव्यत्यागरूपत्वात् । द्रव्यदेवते हि यागस्वरूपमिति सिद्धान्ताच्च । एतान्येव सामवायिकानीत्युच्यन्ते । इति । वाजपेयप्रकरणे प्रजापतिदेवतोद्देश्येन सप्तदशपशूनाम् आलम्भनम् विहितमस्ति ।

तत्रेदं वाक्यं यथा— सप्तदश प्राजापत्यान् पशूनालभते ( ऐ० ब्रा० १-३-४ ) इति । एकेन कर्त्रा एकस्मिन् समये पशूनामालम्भनस्य कर्तव्यत्वेनोक्तेः सप्तदशसु यं कंचित् पशुं स्वेच्छया गृहीत्वा तस्य उपाकरण-नियोजन-पर्यग्निकरणादीनि अनुष्ठानानि क्रियन्ते । प्रयोगविधौ एकस्मिन् समये एककर्तृकत्वेन आलम्भनस्योक्तावपि युगपदुपाकरणादीनां कर्तुमशक्यत्वे किंचित् आनन्तर्यं स्वीकृत्य प्रथमे पशौ उपाकरणादीनि यत्क्रमेणानुष्ठीयते तत्क्रमेण द्वितीयादिष्वपि । अनेन प्रतिप्रधानं गुणावृत्तिः इति न्यायेन आवृत्त्यानुष्ठाने प्रतिपश्वालम्भनम् अंगप्रधानयोः यत् व्यवधानं तन्न व्यतिक्रान्तं भवति, साहित्यं च न बाध्यते । अनेन प्रथमे पशौ यथा प्रवृत्तिः द्वितीयादिष्वपि तथेति प्रवृत्तिक्रमस्य आशयीभूतः विषयः । सोऽयं प्रवृत्तिक्रमः जैमिनीये "प्रवृत्त्या तुल्यकालानां गुणानां तदुपक्रमात् ।" ( ५-१-८ ) इति सूत्रे विचारितः । तत्राहुर्भाष्यकारो यथा— वाजपेये सप्तदश प्राजापत्यान् पशूनालभत इति श्रूयते । तेषु पशुषु चोदकप्राप्ताः प्रोक्षणादयो धर्माः । तत्र प्रथमः पदार्थो यतः कुतश्चिदारब्धव्यः । द्वितीयादिषु भवति संशयः । किं तत एव द्वितीयोपि पदार्थः आरब्धव्य उत द्वितीयादिष्वनियमः इति । किं तावत् प्राप्तम् । नियमकारिणः शास्त्रस्याभावादनियम इति । एवं प्राप्ते ब्रूमः । यतः पूर्वं आरब्धस्तत एव द्वितीयादयोपि पदार्था आरब्धव्या इति । कुत एतत् । तदुपक्रमात् । सर्वे हि पदार्थाः प्रधानकालान्न विप्रकृष्टव्याः । प्रधानं हि चिकीर्षितम् । कृतं वा तेषां तेषां निमित्तम् । सहवचनं हि भवति । पदार्थैः सह प्रधानं कर्तव्यमिति । बहुपदार्थसमाम्नानात्त्ववश्यम्भावी विप्रकर्षः । तथापि तु यावद्भिर्नाव्यवहितः शक्यः पदार्थः कर्तुं तावद्भिर्व्यवधानमवश्यं कर्तव्यं, ततोऽभ्यधिकेन न व्यवधातव्यमिति । यदि द्वितीयं पदार्थमन्यत आरभ्यते ततोऽधिकैरपि व्यवदध्यात् । तथा प्रयोगवचनं बाधेत । ननु तथा सति कश्चिदल्पैर्व्यवहितो भविष्यति । उच्यते, अनुमतानां व्यवधायकानां त्यागेन कश्चिदभ्यधिको गुणो भवतीति । तस्माद्यतः पूर्वपदार्थ आरब्धस्तत एवोत्तर आरम्भणीय इति ।

टुप्टीकायां भट्टपादा विवृण्वन्ति, एतद्यथा– वैश्वदेवीं कृत्वा प्राजापत्यैश्चरन्तीति । अस्मिन् काल उपादीयमानाः सेतिकर्तव्यताका इतरेतरयुक्ताः सह कार्या इत्यवगम्यते क्रमश्चिन्त्यते । तत्र प्रथमे पदार्थेऽनियमो यतः कुतश्चिद् कर्तव्यः । द्वितीयस्तु किं प्रथमो यत आरब्धस्तत एवारम्भणीय उतानियम इति । श्रुत्यर्थपाठाभावादनियमे प्राप्ते, प्रवृत्त्यैव नियमः । कुतः । एतदुपक्रमात् । सर्वे हि पदार्थाः प्रधानकालान्न विप्रकृष्टव्याः । सहवचनं भवति, पदार्थैः सह

प्रधानं कर्तव्यमिति । एवं व्यवहितो ग्रन्थसम्बन्धः । कथं, प्रधानकालान्न विप्रकृष्टव्या इत्यस्य हि सहवचनं भवतीत्युपपत्तिः । कथं भवन्तं भावयेद्यागेनेत्थमिति । तत्र यस्यामेव वेलायां स्वर्गो भवने कर्तृत्वं प्रतिपद्यते तस्मिन्नेव क्षणे करणेतिकर्तव्यते अपि व्याप्रियेते । तस्मात् त्रितयस्य फलकरणेतिकर्तव्यतात्वस्य यजतेत्यनेन कर्तव्यतोच्यते । शब्दवृत्तं तु तावदेवं, वस्त्वप्येवमेव । यदि भूतकालं भाव्यं, भविष्यति काले करणेतिकर्तव्यते ततोऽनयोः करणेतिकर्तव्यतात्वमेव न स्यात् । भविष्यति भाव्ये भूते करणे य एव दोषः करणेतिकर्तव्यतयोरपि विप्रकर्षे अयमेव दोषः । अतः शब्दवस्तुभ्यामेककालतैषाम् । तत्र यदि फलस्य कालोऽवगम्यते ततस्तदीयेन कालेन करणेतिकर्तव्यतयोः परिच्छेदः स्यात् । इह तु स्वर्गस्थानावगतः कालः करणेतिकर्तव्यतयोस्त्ववगतः । तयोस्तु कालेन स्वर्गभवनकालः परिच्छिद्यते । ततः प्रधाने सेतिकर्तव्यता । एकैकस्मिन् क्षणे सह कर्तव्ये प्राप्ते, एककर्त्रा बहूनि प्रधानानीतिकर्तव्यतां वासमर्थः कर्तुं यौगपद्येनेत्यवश्यम्भावी विप्रकर्षः । ईदृशेन विप्रकर्षेण क्रियमाणेनापि सहैव पदार्थाः कृता भवन्ति । तत्र प्रधाननियमेन पदार्थाः प्राप्नुवन्ति । आग्नेयादीनां सकाशात्तत्र श्रुत्यर्थपाठैरनियमेन या प्रसक्तिः सा व्यावर्त्यते । अवश्यम्भाविनि विप्रकर्षे प्रधानं हि चिकीर्षितं, कृतं वा तेषां निमित्तमित्यर्थतो ग्रन्थसम्बन्धः । अग्न्यन्वाधानादीनां करिष्यमाणं प्रधानं निमित्तम् । स्विष्टकृदादीनां तु कृतम् । तेनैव केचित् पदार्थाः क्षणव्यवहिता अपेक्ष्यन्ते । केचिद् द्वाभ्यां केचिद् बहुभिः । प्रकृतावयमर्थ इति विकृतावप्ययमेव न्यायः । अग्न्यन्वाधानादि प्रागुपाकरणात् साधारणं सर्वेषां सकृत् कृतम् । उपाकरणादयोऽपि सन्निपत्योपकारकाः साहित्येनानुभवितव्याः सहचोदितत्वात्तेषाम् । तदेवं यस्य प्रथममुपाकरणं क्रियते, तस्य पाठेन यद्यपि द्वितीयः पदार्थः उपस्थाप्यते तथापि सहवचनादिसमर्थमाकांक्षति सजातीयेन षोडशक्षणाव्यवहितं द्वितीयपदार्थम् । द्वितीयस्तु पंचदशभिरुपाकरणक्षणैरेकेन च नियोजनक्षणेन । एवं तृतीयादयोपि सजातीयविजातीयव्यवहितानपेक्षन्ते । अन्त्यस्तु विजातीयक्षणव्यवहितमेवापेक्षते । संनिपत्योपकारकानालोच्येदृश्यपेक्षा प्रधानानां भवति । अत्र आह यावद्भिः नाव्यवहितः शक्यः पदार्थः कर्तुं तावद्भिर्व्यवधानमवश्यं, ततोऽभ्यधिकैस्तु न व्यवधातव्यम् । यद्येकं पदार्थं कृत्वा द्वितीयोपि तस्यैव क्रियेत सहवचनं नोपपद्येत । एवं सर्वत्र योज्यम् । उच्यते । अनुमानानां व्यवधायकानां त्यागे न कश्चिदभ्यधिको गुणो भवतीति — किमुक्तं भवति । अनुमतैर्व्यवधायकैः परित्यज्यमानैर्दोष एव । अभ्यधिकै-

प्राजापत्येषु उपाकरणक्रम° इव° । नियोजनादिष्वपीति । मुख्यक्रमस्तु[१६] प्रधानक्रमो योऽङ्गेष्वपि प्रयोगवचनावगताङ्गप्रधानसाहित्याबाधार्थमाश्रीयते ।

---

र्व्यवधानेऽश्रुतकरणं, न्यूनैरप्यश्रुतकरणमेव । तस्मात् साहित्यसम्पत्तये यः क्रमोऽपेक्षितः स द्विधा बाध्यते इति ।

१६ । प्रवृत्तिक्रमनिरूपणानन्तरं मुख्यक्रमं निरूपयति ग्रन्थकारः । तत्र प्रयोगवचनं नाम प्रयोगविधिः । तेन प्रधान-तदङ्गयोः साहित्यं बोध्यते । प्रधानस्य सम्पादनकाले येन क्रमेण प्रधानगतकर्मणानुष्ठानं भवति तेनैव क्रमेण प्रधानगतानि अङ्गकर्माण्यपि भवन्ति । अनेन क्रमेण प्रधान-अङ्गयोः साहित्यं न बाध्यते । अयमेव मुख्यक्रम इति । उदाहरणं यथा—दर्शे दधिपयसोः इत्यादि ।

दर्शपूर्णमासयोः दर्शे पूर्णमासे च प्रत्येकं त्रयो यागा भवन्ति । तत्र आग्नेय-यागः सामान्यतो भवति । विशेषेण दर्शे इन्द्रदेवताको दधियागः पयोयागश्चेति मिलित्वा त्रयः, पूर्णमासे अग्नीषोमीयः उपांशुश्च मिलित्वा त्रयो भवन्ति । प्रकृतानुसारं दर्शयागगतः क्रमोऽत्र विचार्यते । याज्यानुवाक्यापाठक्रमात् ऐन्द्र-यागात्पूर्वं आग्नेययागोऽनुष्ठीयते । तत्र वचनं यथा—अग्निमूर्धा दिवः ककुत्पतिः पृथिव्या अयम् । अपां रेतांसि जिन्वति (तै० ब्रा० ३-५-७-१) इत्याग्नेयी पुरोऽनुवाक्या । अत्र पूर्वार्धे अग्निशब्दोऽस्ति । तदुक्तं—पुरस्ताल्लक्ष्मा पुरोऽनु-वाक्या भवति (तै० सं० २-६-२-३) इति । मन्त्रप्रतिपादितायाः देवतायाः नामधेयं लक्ष्म । तच्च लक्ष्म यस्यामृचि पूर्वार्धे विद्यते सा पुरोऽनुवाक्या ज्ञेयेत्यर्थः । अत्र मूर्धन्वती पुरोऽनुवाक्या भवति (तै० सं० २-६-२-२) इत्युच्यते । मूर्धशब्दो यस्यामृचि अस्ति सा मूर्धन्वती अग्निमूर्धेति ऋक् ।

तथा भुवो यज्ञस्य रजसश्च नेता । यत्रानियुद्भिः सचसे शिवाभिः । दिवि मूर्धानं दधिषे सुवर्षाम् । जिह्वामग्ने चकृषे हव्यवाहम् (तै० ब्रा० ३-५-७-१) इत्याग्नेयी याज्या । अत्र उत्तरार्धे अग्निशब्दोऽस्ति । तदुक्तम्—उपरिष्टाल्लक्ष्मा याज्या (तै० सं० २-६-२-३) इति । यस्यामृचि उत्तरार्धे देवतानाम दृश्यते सोपरिष्टाल्लक्ष्मा । (मी० न्या० प्र० प्रभा० पृ० १८५-१८६)

आभ्यां याज्या—पुरोऽनुवाक्यापाठाभ्याम् आग्नेययागस्य पूर्वानुष्ठेयत्वं बोध्यते, ऐन्द्रयागस्य च पश्चात् । एतद्यागत्रयं मुख्यं भवति । एषामङ्गत्वेन प्रयाज-

---

° क पुस्तके नास्ति ।

° एव इति क पुस्तकपाठः ।

यथा—दर्शे दधिपयसोर्दध्नः प्रथमं शाखाछेदनादि° धर्मे प्रवृत्ते चरमं शृतस्याग्रे

याग: आग्नेययागात् पूर्वं क्रियते। प्रयाजस्य शेषत्वेन नाम अङ्गत्वेन विद्यमानाना-मासादितानां उपयोक्षमाणानां हविषामभिघारणं मुख्यस्य आग्नेयस्य क्रममाश्रित्य क्रियते । तत्रेदं वचनम्—प्रयाजानिष्ट्वा हवींष्यभिघारयति (तै० सं० १-६-१-६) इति । अत्रेदं विचार्यं यत् दधिपयसो: पयस: चरमशृतत्वं नाम पूर्वपक्तत्वं दध्न: पयोविकारत्वेन तत्परवर्तितया उपरिष्टाल्लभ्यत्वम् । अग्रे अवद्यति इति वाक्येन ऐन्द्रयागान्तर्गतपयोयागस्य पूर्वसम्पाद्यत्वेन बोधेऽपि मुख्यक्रमात् नाम आग्नेय-क्रमात् तदीयप्रयाजगताङ्गत्वेन अभिघारणस्य सम्पाद्यत्वं सिध्यति । यदि प्रथमत: ऐन्द्रहविषोऽभिघारणं कृत्वा अनन्तरमाग्नेयस्य अभिघारणं क्रियेत, याज्यापुरोनुवाक्यापाठात् यदा आग्नेययागं कृत्वा अनन्तरमैन्द्रयाग: क्रियेत तदा आग्नेयाभिघारण-आग्नेययागयोरत्यन्तमव्यवधानम्, ऐन्द्राभिघारण-ऐन्द्रयागयो-रत्यन्तं व्यवधानं स्यात् । प्रधानाङ्गयो: साहित्यं बाध्येत । एतन्मास्तु इति धिया प्रयाजशेषेणैव अभिघारणं भवति इति मुख्यक्रम: ।

सोऽयं मुख्यक्रम: जैमिनीये अवदानाभिघारणासादनेष्वानुपूर्व्यं प्रवृत्त्या स्यात् । यथा प्रदानं वा तदर्थत्वात् । लिङ्गदर्शनाच्च (५-४-२-४) इति सूत्रत्रये विचारित: । तत्राहु: भाष्यकारा यथा—स्तो दर्शपूर्णमासौ । तत्र पूर्वं दध्नो धर्मा: समाम्नाता: पश्चादाग्नेयस्य । प्रदानं चाग्नेयस्य पूर्वम् । तत्र सन्देह: । किं प्रावृत्तिकेन क्रमेण पूर्वं दध्नोऽवदानाभिघारणासादनानि, उत मुख्यक्रमेण पूर्वमाग्नेयस्येति । किं प्राप्तम् । अनियम इत्येवं प्राप्ते—ब्रूम: । अवदानादिषु प्रावृत्तिकेन पूर्वं दध्न इति । कुत: ? एवमनुज्ञातस्य व्यवधाय-केभ्यो नाभ्यधिकोऽन्यो वा व्यवधायक: कल्पितो भविष्यति । दर्शयति च दध्न: पूर्वमवदेयमिति । यथा प्रदानं वा कर्तव्यानि । यस्य प्रदानं पूर्वं तस्यावदानानि पूर्वम् । तस्मादाग्नेयस्य । कुत: ? प्रदानचोदनागृहीतत्वादवदानादीनाम् । प्रदानोपक्रमा एते, न पृथक्पदार्था इत्युक्तम् । अभिघारणमवदानं च तस्य प्रदान-चिकीर्षयेव क्रियते । आसादनमपि प्रदानार्थमेवासन्नप्रकरणम् । एवं दृष्टार्थतो भवति । तस्मान्मुख्यक्रमेणाङ्गानां प्रयोग इति । यत्तु दध्न: पूर्वं प्रवृत्तिरिति । अर्थात् पूर्वं प्रवृत्ति: न पाठात् । प्रावृत्तिकाच्च मुख्यक्रमो बलीयान् । मुख्यक्रमे गृह्यमाणे प्रथम एक: पदार्थो विप्रकृष्टकाल: स्यात् । प्रावृत्तिके पुनर्गृह्यमाणे सर्वेषां विप्रकर्ष: । तस्मान्मुख्यक्रमो बलीयानिति । अथ यल्लिङ्गमुक्तं, दध्न:

° विच्छेदना इति ख पुस्तकपाठ: ।

अवद्यता°तिपयसोऽवदानादिधर्मे प्रवृत्तेऽपि मुख्यक्रमात् प्रथममाग्नेयस्यैव प्रयाज-

---

पूर्वमवदेयमिति । अत्रोच्यते । श्रुताभिप्रायमेतद् भविष्यति । तस्माददोषः । लिङ्गमप्यस्मिन् अर्थे भवति । स वै ध्रुवमेवाग्रेऽभिघारयति, ततो हि प्रथमावाज्यभागौ यक्षन् भवतीति । तस्मादपि मुख्यक्रमेण नियम इति ।

टुप्टीकायां यथा—अवदानाभिघारणासादनेषु स्विष्टकृदवदानं, प्रयाजशेषाभिधारणं, बर्हिषि हवींष्यासादयति, इत्युदाहरणानि । प्रावृत्तिकमुख्यक्रमयोः कतरो वलीयानिति विचारः । तत्र दध्नः प्रथमं धर्माः प्रक्रान्ताः । यदि तथैव प्रवृत्त्या तस्यासादनानि प्रथमं क्रियन्ते, ततो भवत्यङ्गानां प्रधानासत्तिः । इतरथा अन्यस्य प्रथमं क्रियेरंस्तत्र व्यवधानात् प्रधानप्रत्यासत्तिर्बाध्येत । प्रयोगवचनेन साहित्याद् यावद्भिः क्षणैर्व्यवधानमनुज्ञातं तावद्भ्योऽधिकैरपि कृतं स्यात् । दध्नः पाठात् पूर्वं क्रियन्ते । अपरेद्युः पाठक्रमादेवाग्नेयस्य पूर्वम् । एतावति विषये मुख्यप्रावृत्तिकौ नावतरतः । पाठस्य प्रत्यक्षत्वात् । वेद्यासादने नास्ति पाठः, कस्य पूर्वमासादनमिति । तत्र यदि दध्नः पूर्वं प्रवृत्ता इति कृत्वा तस्यैवासादनं क्रियते तथा सति प्रधानक्रमेणाग्नेयस्याकृत्वान्येषां कर्तव्यमिति नानुगृह्यते । कुतः । प्रथममाग्नेयस्ततो दधि ततः पय इति । एकैकमेषामितिकर्तव्यतासंनिहिताममिलषति । सहत्वयोगात् द्विक्षणव्यवहितामेकैकम् । प्रत्यक्षपाठाच्च पूर्वं पूर्वस्य धर्मास्ततो द्वितीयतृतीययोः । तत्र यदि दध्नः पूर्वं क्रियेरंस्तथा सति पूर्वमासादनमनुभवितव्यमिति योऽवगतः प्रधानेनाङ्गानां क्रमः स बाध्येत । एतस्मिन् बाध्यमाने विप्रकर्षः तस्मात् प्रावृत्तिको बाध्यते । प्रदानोपक्रमा एते न पृथक् पदार्थाः इत्युक्तम् । अग्रन्थोऽयम् । लिङ्गदर्शने चेममेव न्यायं दर्शयति, यस्य पूर्वमवदानं तस्य पूर्वमभिघारणं हेतुमन्निगदेनार्थवादेन । अतस्तुल्यन्यायत्वादितरेष्वपि तथैव भवितुमर्हति । इति ।

जैमिनीयन्यायमालायां यथा—

अवदानादिसांनाय्ये पूर्वमाग्नेयकेऽथवा ।
धर्मप्रवृत्तिक्रमतः सांनाय्ये पूर्वतोचिता ॥
प्रदानं पूर्वमाग्नेयेऽवदानं च तथोचितम् ।
अङ्गानां मुख्यतन्त्रत्वात् मुख्यक्रमबलित्वतः ॥

तत्र विस्तरो यथा—दर्शपूर्णमासयोः सांनाय्यधर्मा वत्सापाकरणदोहनादयः प्रथममाम्नाताः, पुरोडाशधर्माः निर्वापावघातादयः पश्चादाम्नाताः । तेनैव पाठक्रमेण

---

° अवद्यति इति ख पुस्तकपाठः ।

शेषाभिघारणे क्रमः । अत्रैव प्रवृत्तिमुख्यक्रमयोर्बलाबलम्[१७] । एवं च यजमानस्य पितृप्रभृतीनिति श्रुतिक्रमावगतानां पित्रादिपिण्डानामङ्गेष्वपि[१८] स एव क्रमः । एवं विश्वेषां[१९] देवानां श्रुतिपाठाभ्यामवगतक्रमाणामर्घ्यादयो धर्मा प्रथममेव । ततः पित्रादीनां ततो मातामहादीनाम् ।

---

धर्मानुष्ठानं प्रवृत्तम् । ततः प्रावृत्तिकक्रमेणावदानमपि सांनाय्ये पूर्वमेव कर्तव्यमिति प्राप्ते—ब्रूमः । याज्यानुवाक्यादिमन्त्रबलादाग्नेये पूर्वप्रदानम् इत्युक्तम् । तच्च प्रदानं फलप्रत्यासत्त्या मुख्यम् । अवदानं तु तदङ्गम् । तथा सति मुख्यस्य क्रममनुसृत्यावदानमप्याग्नेये पूर्वं कर्तव्यम् । मुख्यक्रमो हि प्रावृत्तिकक्रमात् प्रबलः । प्रावृत्तिके हि क्रमे सांनाय्ये पूर्वमवदानमभिघारणमासादनं च कृत्वा प्रदानमकृत्वा आग्नेयेऽवदानादीनि कर्तव्यानि । तथा सति सांनाय्येऽनुष्ठितान्यवदानादीनि अङ्गानि मुख्यात् प्रधानाद् विप्रकृष्यन्ते । मुख्यक्रमाश्रयणे तु आग्नेये प्रथममवदानादिप्रदानान्तं कृत्वा पश्चात् सांनाय्ये तदनुष्ठीयते । तत्र नास्त्यङ्गाङ्गिविप्रकर्षः । ननु अवदानादिः प्रदानान्तः एकः पदार्थः—इत्युक्तम् । तत्र कुतः क्रमविचारः—एवं तर्हि कृत्वाचिन्तास्तु । अथवा स्विष्टकृदवदानादि विषयेयं चिन्ता अस्तु ।

शास्त्रदीपिकायां यथा—(५-४-२-४) दर्शपूर्णमासयोः सांनाय्यधर्माः पूर्वं प्रवर्तन्ते पश्चादाग्नेयधर्माः । प्रदानं तु आग्नेयस्य प्रथमं पश्चात् सांनाय्यस्य । ततः सिष्टकृदवदानं प्रयाजशेषाभिघारणं वेद्यामासादनं च किं प्रवृत्तिक्रमात् सांनाय्यस्य पूर्वं भवत्युत मुख्यक्रमादाग्नेयस्येति प्रवृत्तिमुख्ययोः बलाबलाज्ञानात् सन्देहे अनियमे प्राप्ते मुख्यक्रमो बलीयानित्याह—तस्मिन् किलाश्रीयमाणे प्रथम एकः पदार्थः प्रधानाद् विप्रकृष्यते । अन्ये सर्वे संनिकृष्टा भवन्ति । प्रवृत्तिक्रमे आश्रीयमाणे बहूनां विप्रकर्षः । तस्मान्मुख्यक्रमो बलीयान् इति ।

१७ । द्रष्टव्या पादटिप्पणी—१६ ।

१८ । पित्रादिप्रपितामहपर्यन्तेभ्यस्त्रिपुरुषेभ्यो दीयमानानां पिण्डादीनां क्रमः एकः तस्य मुख्यकर्मविषयत्वात् । पित्रे पिण्डदानं, ततोऽर्घ्यादिदानं येन क्रमेण क्रियते, तेन क्रमेण पितामहाय, प्रपितामहाय च । पित्रादिप्रपितामहपर्यन्तं त्रीणि प्रधानानि । पित्रे पिण्डार्घ्यादिदानं प्रावृत्तिकं भवति । पितामहप्रपितामहयोः मुख्यक्रमेण भवति । अन्यथा प्रत्यङ्गप्रधानं विप्रकृष्येत ।

१९ । प्रथमं विश्वेदेवानामर्घ्यदानादिकर्माणि समाप्य अथ पित्रादीनां क्रियन्ते इति ग्रन्थकर्तुराशयः ॥

**विसर्जनं[२०] तु प्रथमं पितृपैतामहेषु वै ।**

२० । देवकार्याद् द्विजातीनां पितृकार्यं विशिष्यते ।
दैवं हि पितृकार्यस्य पूर्वमाप्यायनं श्रुतम् ।। (मनु० ३-२०३)
इति वचनेन देवकार्यापेक्षया पितृकार्यस्य विशेषतया पितृकृत्यस्य पूर्ववर्तित्वेन तत्परिपूरकं देवगतमाप्यायनं नाम सन्तुष्टिं कुल्लूक आचष्टे यथा—(३-२०३) यतो दैवं कर्म पितृकृत्यस्य पूर्वं सदाप्यायनं परिपूरकं स्मृतमिति । परिपूरकतया अङ्गत्वेन देवकृत्यस्य वर्तमानत्वात् दर्शपूर्णमासयोः पूर्ववर्तितया प्रयाजस्य अङ्गत्वमिव स्वतःप्राधान्यरहिततया वृद्धिकरमिति मेधातिथिः प्राह । तद्यथा—देवानुद्दिश्य यत् क्रियते तद्दैवं कार्यम् । ततः पितृकार्यं विशिष्यते । विशेषेण कर्तव्यमुपदिश्यते । अनेन पित्र्यस्य प्राधान्यमाह । दैवं तत्राङ्गं कर्मेत्युक्तं भवति । अङ्गकर्मतामेव स्पष्टयति । दैवं हि यद् ब्राह्मणभोजनं तत् पितृकार्यस्याप्यायनं वृद्धिकरम् । न स्वतः प्रधानम् । पित्र्यस्यैव पोषकम् । आवाहने दैवकार्यस्य प्रथमतया पितृकार्यस्य अनन्तरता बोध्यते इति क्रमविषयः । विसर्जनं तु आवाहनमनुसृत्य कर्तव्यमिति शास्त्रशिष्टचोदनायां सत्यामपि विशेषवचनसाहचर्येण पितृपूर्वकमेव विसर्जनं संगच्छते । तत्र वचनद्वयमुपन्यस्तम् । तद्यथा—विसर्जनं त्विति एकम् । द्वितीयं तु याज्ञवल्कीयं—पितृपूर्वं विसर्जनमिति (१-२४७) । तत्र निखिलं वचनं यथा—

विश्वेदेवाश्च प्रीयन्तां विप्रश्चोक्त इदं जपेत् ।
इत्युक्त्वा नोभिवर्धन्तां वेदाः सन्ततिरेव च ।।
श्रद्धा च नो मा व्यगमद् बहुधेयं च नोस्त्विति ।
इत्युक्त्वा तु प्रिया वाचः प्रणिपत्य विसर्जयेत् ।।
वाजे वाजे इति प्रीतः पितृपूर्वं विसर्जनम् ।।

इति । एतद्व्याचख्यौ अपरार्को यथा—इति पूर्वोक्तं मन्त्रमुक्त्वा ब्राह्मणानां प्रिया वाचश्चोक्त्वा तांश्च नमस्कृत्य प्रीतः सन् वाजे वाजे इत्यनया त्रिष्टुभा वसिष्ठदृष्ट्या विप्रदेवत्यया विसर्जयेत् । अत्र पितृविसर्जनं पूर्वम् ।

विज्ञानेश्वरोपि यथा—एवं पूर्वोक्तं प्रार्थनामन्त्रं जप्त्वा, उक्त्वा च प्रिया वाचः धन्या वयं भवच्चरणयुगलरजःपवित्रीकृतमस्मन्मन्दिरं शाकाद्यशनक्लेशमविगणय्य भवद्भिरनुगृहीता वयम् इत्येवंरूपाः । प्रणिपत्य प्रदक्षिणात्पूर्वं नमस्कृत्य विसर्जयेत् । कथं विसर्जयेदित्याह—वाजे वाजे वत वाजिनो नः (ऋ० ५-४-५-८) इत्यनयार्चा पितृपूर्वं प्रपितामहादि विश्वेदेवान्तं दर्भान्वारम्भेण उत्तिष्ठत पितरः इति प्रीतः सुप्रीतमना विसर्जनं कुर्यात् इति ।

**इति वचनात् पितृपूर्वं विसर्जनम् इति याज्ञवल्क्यवचनाच्च तेषु[21] रक्षा यतः स्थितेति° हेतुमन्निगदार्थवादसहिताद् विसर्जने विपरीत एव क्रमः। अन्यत्र[22] वैश्वदेवपूर्वकतैव।**

---

२१। पितृणां वैश्वदेवपूर्वकतया आवाहनं पश्चात्तया च विसर्जनं विशेषवचनोपन्यासेन कारणं निर्दिश्य च विवृणोति ग्रन्थकारः। तत्र वचनं यथा—

वैश्वदेवनिविष्टानां चरमं हस्तधावनम्।
विसर्जनं च निर्दिष्टं तेषु रक्षा यतः स्थिता॥

(विष्णुधर्मोत्तरपुराणम् १-१४०-१५)

इति। अत्रेदं वचनं हेतुमन्निगदात्मकम्। निगदो नाम वचनं वैश्वदेवनिविष्टानम् इति। हेतुरस्यास्तीति अस्त्यर्थे मतुबा हेतुमान् इति। हेतुरत्र यत इति पदेनाभिधीयते यत्तद्यतस्ततो हेतौ (अमरकोषः ३-४-३) इति कोशवचनात्। पितृणामुद्देश्येन दत्तानां पिण्डानां रक्ष्यत्वेन, रक्षकत्वेन च वैश्वदेवानामुक्तत्वात्, रक्षकेण पूर्वपश्चाद्वर्तितया भवितव्यमिति व्यवहारात्। पितृणामावाहनात् पूर्वं विश्वेदेवानामावाहनं, विसर्जनात्परं विसर्जने सति रक्षकत्वसिध्या आवाहनादिविसर्जनान्तं रक्षककर्तृकं निखिलं कर्म एकरूपेण निष्पद्यते इति हेतुमन्निगदस्य सारः। एतदभिलक्ष्य हेमाद्रिराह—(पृ० ११९६) उच्छिष्टावलिप्तहस्तशालिनं विसर्जनं च वर्जयित्वा सर्वेषां श्राद्धीयपदार्थानां वैश्वदैविकपूर्वकत्वात् इति।

२२। एतदुक्तं वैश्वदेवोत्पत्तिप्रकरणे ब्रह्माण्डपुराणे—

दक्षस्य दुहिता नाम्ना विश्वा नामेति विश्रुता।
विश्वाख्यास्तु सुतास्तस्यां धर्मतो लेभिरे दश॥
प्रख्यातास्त्रिषु लोकेषु सर्वलोकनमस्कृताः।
समस्तास्ते महात्मानश्चेरुरुग्रं महस्तपः॥
हिमवच्छिखरे रम्ये देवर्षिगणसेविते।
शुद्धेन मनसा प्रीता ऊचुस्तान् पितरस्तदा॥
वरं वृणीध्वं प्रीताः स्म कं कामं करवामहे।
एवमुक्ते तु पितृभिस्तदा त्र्यैलोक्यभावनः॥
ब्रह्मोवाच महातेजास्तपसा तैस्तु तोषितः।
प्रीतोस्मि तपसानेन किं कामं करवाणि वः॥

---

° स्थितेऽपि इति क पुस्तकपाठः।

सपिण्डीकरणे चत्वारि उदकपात्राणि । त्रीणि पितॄणाम् । एकं प्रेतस्येति गोभिलवचनेन पाठक्रमात् क्रम इति शूलपाणिः[२३] । इत्थमेवा—निरुद्धभट्टादयो गौडाः[२४] । तत्तुच्छम्[२५] । चत्वार्युदकपात्राणि[२६] । एकं प्रेतस्य

---

एवमुक्तास्तदा विश्वे ब्रह्मणा विश्वकर्मणा ।
ऊचुस्ते सहिताः सर्वे ब्रह्माणं लोकभावनम् ।।
श्राद्धेऽस्माकं भवेदंशो ह्येष नः कांक्षितो वरः ।
प्रत्युवाच ततो ब्रह्मा तान् वै त्रिदशपूजितः ।।
भविष्यत्येवमेवं तु कांक्षितो वो वरस्तु यः ।
पितृभिश्च तथेत्युक्तमेवमेतन्न संशयः ।।
सहास्माभिस्तु भोक्तव्यं यत् किंचित् दृश्यते त्विह ।
अस्माकं कल्पिते श्राद्धे युष्माकं प्राशनं हि वै ।।
भविष्यति मनुष्येषु सप्तमे तद्ब्रूयामहे ।
माल्यैर्गन्धैस्तथाक्षेन युष्मानग्रेऽर्चयिष्यति ।।
अग्रे दत्त्वा तु युष्माकमस्माकं दास्यते ततः ।
विसर्जनमथास्माकं पूर्वं पश्चात्तु दैवतम् ।।
रक्षणं चैव श्राद्धस्य आतिथ्यं विधिपूर्वकम् ।
भूतानां दैवतानां च पितॄणां चैव कर्मणि ।। इति ।।

२३। पूर्वपक्षत्वेन शूलपाणिमतमुत्थापयति ग्रन्थकारः सपिण्डीकरणे इत्यादिना । सपिण्डीकरणे चत्वारि उदकपात्राणि भवन्ति । तत्र पाठक्रमेण अन्तिमपात्रं प्रेतस्येति गोभिलवचनस्याशयं शूलपाणिर्जग्राह । तत्र आकरे श्राद्ध-विवेके इत्थं यथा— (पृ० ३८२) पूर्णे संवत्सरे षण्मासे त्रिपक्षे वा यदहर्वा वृद्धि-रापद्येत तदहश्चत्वार्युदकपात्राणि सतिलगन्धपुष्पोदकानि त्रीणि पितॄणामेकं प्रेतस्य प्रेतपात्रं पितृपात्रेष्वासिंचति ये समाना इति द्वाभ्यामेतेन पिण्डा व्याख्याताः इति।

२४। शूलपाणिमतानुयायिनाम् अनिरुद्धभट्टादीनां गौडानामिदमेव मतम्। तदुपन्यस्तं पितृदयिते (पृ० ४६) इतिकर्तव्यतादशायाम् । ततो दक्षिणामुखः पातितवामजानुः प्राचीनावीती ओम् अद्यामुकसगोत्र पितामहामुकदेवशर्मन्नमुक-सगोत्र प्रपितामहामुकदेवशर्मन्नमुकसगोत्र वृद्धप्रपितामहामुकदेवशर्मन्नेतस्ते दर्भासनं ये चात्र त्वामनु यांश्च त्वमनु तस्मै ते स्वधेति कुशानुत्सृज्य भागत्रयं कृत्वा हस्ते जलं दत्त्वा एकैकं पितामहादि ब्राह्मणमुपवेशयेत् । तत ओम् अमुकसगोत्र प्रेतामुकदेवशर्मन्नेतत्ते कुशासनं स्वधेति कुशानुत्सृज्य यत्र प्रेतब्राह्मणमुपवेशयते । सर्वेषामेव पादयोरधः कुशान् दत्त्वा पुनर्हस्ते जलं दद्यात् इति ।

त्रीणि इतरेषाम्। प्रथमं पात्रं त्रिषु पात्रेषु नियोजयेदिति आश्वलायनगृह्य-वचनेन तेनैव दर्शितेन प्रेतपात्रस्य प्रथमावगतेः वषट्कर्तुः[२७] प्रथमभक्ष (आप० श्रौ० सू० १२-२४-६) इतिवत्। श्रुत्यर्थाभ्यां[२८] पाठस्य दुर्बलत्वात्

---

२५। तत्तुच्छमिति शूलपाणि-अनिरुद्धभट्टादीनां पूर्वपक्षिणां मतनि-रासार्थः।

२६। गोभिलवचने पाठक्रमात् प्रेतपात्रस्य अन्तिमत्वम्। (द्रष्टव्या पादटिप्पणी २२) आश्वलायनवचने प्रेतपात्रस्य प्रथमत्वं, प्रथमं पात्रं त्रिषु पात्रेषु नियोजयेत् इत्यादिना श्रुतिक्रमादवगम्यते।

२७। श्रुतिक्रमो द्विविधः। केवलक्रमपरः, क्रमविशिष्टपदार्थपरश्चेति। तत्र क्रमविशिष्टपदार्थपरस्य उदाहरणं वषट्कर्तुः प्रथमभक्षः (आप० श्रौ० सू० १२-२४-६) इति। तद्वर्णितं मीमांसान्यायप्रकाशे (पृ० १७३-७४) यथा—वषट्कर्तुः प्रथमभक्ष इति तु क्रमविशिष्टपदार्थपरम्। एकप्रसरताभंगभयेन भक्षानुवादेन क्रममात्रस्य विधातुमशक्यत्वात्।

अत्राह तस्य प्रभाटीकाकारः—एकप्रसरतेति। एकस्यां वृत्तौ प्रसरः प्रवेशो ययोरर्थयोस्तावेकप्रसरौ। तयोर्भाव एकप्रसरता। एकवृत्तिप्रविष्टता। तस्या अत्र भंगः स्यात्। समासघटकपदानि हि संभूय विशिष्टमेकमर्थमेकया वृत्त्या प्रतिपादयन्तीति तस्यैकस्यार्थस्य विवक्षावशादुद्देश्यत्वं विधेयत्वं वा ग्राह्यं भवति। न तु तदेकदेशमात्रस्य कस्यचिदर्थस्योद्देश्यत्वं कस्यचिद् विधेयत्वं वा ग्रहीतुं युज्यते। अन्तर्भूतपदार्थानां पार्थक्येनोपस्थित्यभावात्। तथा च यद्यत्र प्रथमभक्ष इति वृत्त्यन्तर्गतभक्षपदार्थमात्रमुद्दिश्य प्राथम्यं विधेयं स्यात्तर्हि तद्वाचकयोर्द्वयोः पदयोरेकस्यावृत्तौ प्रवेश एव न स्यात्। वषट्कर्तुः प्रथमभक्ष इति वाक्ये तु समासः कृत एवेति तदनुरोधेन विशिष्टपदार्थस्यैवात्र शाब्दमर्यादया विधेयत्वं विवक्षितमिति गम्यते। तत्र विशेषणविशिष्टार्थस्यान्यत्राप्राप्तत्वे विशिष्टविधावेव पर्यवसानं भवति। तदेकदेशस्य कस्यचिदन्यतः सिद्धत्वे तु प्राप्ताप्राप्तविवेकन्यायेनाप्राप्तांशो विशिष्टविधेः पर्यवसानं स्यादित्यन्यत्। शाब्दमर्यादया तु विशिष्टविधिरेव तादृशस्थले स्वीकर्तव्यो भवति।

२८। श्रुतिक्रमापेक्षया पाठक्रमस्य दुर्बलत्वात् आश्वलायनवचनदर्शितश्रौतक्रमेण गोभिलवचनदर्शितपाठक्रमो बाध्यते। नात्र आश्वलायनवचनं गोभिलवचनं बाधते तुल्यबलत्वात्। क्रमगतव्यवस्थयात्र बाधाबाधप्रसंगस्य अवसरः। सोयं श्रुतिपाठक्रमयोः बलाबलविचारः जैमिनीये (५-४-११) क्रमकोपोर्थशब्दाभ्यां श्रुतिविशेषादर्थपरत्वाच्च इति सूत्रे उक्तः।

**क्रमकोपाधिकरणन्यायेन गोभिलवचनस्य विधानेनैव चरितार्थत्वात् क्रमपर्यन्त-व्यापाराभावात्। आश्वलायनवचनस्य प्रथमपादसद्भावेन क्रमविशिष्टविधि-**

---

तत्राहुः भाष्यकाराः — इह पाठक्रमस्य श्रुत्यर्थक्रमाभ्यां सह बाधां प्रति विचारणा। किं पाठक्रमस्ताभ्यां तुल्य उत बाध्यते इति। किं प्राप्तम्। तुल्यबलाबलौ। पाठोपि हि कारणं श्रुत्यर्थावपि। न च प्रामाण्ये कश्चिद् विशेषोस्ति। तस्मादनियम इति। एवं प्राप्ते ब्रूमः। पाठक्रमो हि बाध्यते श्रुत्या अर्थेन च। कुतः। श्रुतिविशेषात्। अर्थपरत्वाच्च। श्रुतिविशेषः कः। यत्र श्रवणं तत्र प्रत्यक्षं कारणम्। पाठक्रमस्त्वानुमानिकः पाठक्रमेण स्मरणम्। एवमभिनिवर्तयितव्यमित्यवगम्यते। तस्यार्थवत्त्वेनैकयोपपत्त्या तथैवानुष्ठानं श्रुत्या पुनरनुष्ठानमेवैवं भवतीति प्रत्यक्षादवगम्यते। तथा अर्थेन। कुतः। अर्थपरत्वात्। अथार्थं हि सर्वं प्रधानार्थम्। प्रधानमभिनिवर्तयति इति सर्वं क्रियते। तस्मात्पाठस्ताभ्यां बाध्यते। किमुदाहरणं प्रयोजनं च। श्रुतौ आश्विनो दशमो गृह्यते, तं तृतीयं जुहोति। अत्र पाठक्रमस्य बलीयस्त्वे तृतीयस्य ग्रहणं, सिद्धान्ते तु दशमस्य। अर्थे, अग्निहोत्रहोमः पूर्वमाम्नायते, पश्चाच्छ्रपणम्, एवं कर्तव्यम्, यदि पाठो बलवान्। सिद्धान्ते श्रपणं पूर्वं ततो होमः इति।

जैमिनीयन्यायमालायां यथा— (५-४-१)

आश्विनो दशमः पाको यवाग्वा ऐच्छिकः क्रमः।
नियतो नाग्रिमः पाठः श्रुत्यादीनां समन्वितः॥
पाठात् क्रमः कल्पनीयः प्रत्यक्षस्तु श्रुतेः क्रमः।
स्मृतिर्न शक्तिमुल्लंघ्य श्रुत्यर्थौ प्रबलस्ततः॥

इति। तत्र विस्तरो यथा— ज्योतिष्टोम ऐन्द्रवायवादिग्रहेष्वाश्विनग्रहः तृतीयस्थाने पठितः। तस्य च दशमस्थानत्वं वाचकेनैव शब्देन आम्नायते— आश्विनो दशमो गृह्यते (कपि० सं० ४२-५) इति। तत्र क्रमबोधकौ श्रुतिपाठौ समबलौ। तथा— अग्निहोत्रहोमादनन्तरं यवागूपाकं पठितः। स चार्थवशात् पूर्वं प्राप्तः। तत्रार्थपाठौ समबलौ। तस्मात् उभयत्रैच्छिकः क्रम इति प्राप्ते ब्रूमः। पाठो हि न क्रमस्याभिधायकः। किं त्वन्यथानुपपत्त्या क्रमं कल्पयति। दशम इत्येषा श्रुतिस्तु साक्षादेव क्रममभिधत्ते। ततः पाठादपि श्रुतिः प्रबला तथा पाठः क्रमं कल्पयन् वस्तुसामर्थ्यमनुसृत्यैव कल्पयति। असमर्थं च यवाग्वाः पूर्वमग्निहोत्रमनुष्ठानम्। द्रव्यमन्तरेण होमासम्भवात्। तस्मात् पाठेन श्रुति-

परत्वात्। अतएव ब्राह्मणक्रमापेक्षया[२९] अनन्यप्रयोजनस्य मन्त्रक्रमस्य एव बलवत्त्वमिति क्रमकोपाधिकरणेऽभिहितम्। किं च संवत्सरान्ते[३०] प्रेताय

---

सामर्थ्यलक्षणोऽर्थ उपजीव्यत इत्यस्यार्थस्य पाठात् प्राबल्यात्। तथा सति श्रुत्यर्थौ पाठं बाधित्वा क्रमं नियच्छतः इति।

शास्त्रदीपिकायां (५-४-१) यथा— किं श्रुत्यर्थाभ्यां तुल्यबलः पाठ उत दुर्बल इति चिन्त्यते। तत्र आश्विनो दशमो गृह्यते इति श्रुतं किमाश्विनस्य पाठक्रमात् तृतीयस्थाने ग्रहणमुत श्रुतिबलाद्दशम इति। यथा— अग्निहोत्रं जुहोति यवागूम् इति किं पाठवशाद्धुत्वा पक्तव्यमुतार्थवशाद् विपर्यय इति प्रामाण्याविशेषादनियमं मन्वानस्योत्तरम्—

क्रमे श्रुत्यैव विहिते पठितः सोऽनुकल्पयेत्।
प्रयोजनविरोधे वा कः पाठमनुरुध्यते ॥
हुत्वा हि पचमानस्य भवेद्द्वयमनर्थकम्।
पाकश्चैव यवागूश्च तां पक्त्वा जुहूयादतः ॥

श्रुत्यर्थयोर्बलाबलविचारसम्भवात् पाठस्य ताभ्यां बलाबलं चिन्त्यत इत्याह— किमिति। आश्विनस्येति। तृतीयस्थानेपि ग्रहणमुत दशमे एवेत्यर्थः। विततिलक्षणक्रमस्य श्रुत्यनभिधेयत्वात् श्रुतेऽपि पाठतुल्यतेत्याशयेनाह— प्रामाण्येति। क्रम इति। पौर्वापर्यात्मक इत्यर्थः। विततिक्रमस्वीकारेऽपि श्रुत्यर्थगत-दशमत्वभंगप्रसंगात् श्रुत्यनुगुणविततिरेव स्वीकार्येत्याशयः। अनर्थकमिति पाकस्तु द्वितीयाश्रुत्यवगतयवाग्वर्थत्व एव निर्वहति नान्यथेति यवाग्वानर्थक्ये पाकोऽप्यनर्थकः इति भावः। सूत्रार्थस्तु प्रयोजनश्रुतिभ्यां पाठक्रमस्य बाधः श्रौतक्रमस्य श्रुत्या प्रत्यक्षश्रवणेन कल्पनीयपाठक्रमात् विशेषसद्भावात् सर्वस्य प्रयोजनार्थत्वाच्चेति।

प्रकृते तु विप्रमिश्राणामयमाशयो यत् क्रमकोपन्यायबलात् गोभिलवचन-प्रदर्शितक्रमस्य दुर्बलत्वेन आश्वलायनवचनप्रदर्शितः क्रमः श्रुत्या साधीयान्। तत्रेयं व्यवस्था यत् गोभिलवचने केवलं पात्राणां विधानमाम्नातं, तस्य तन्मात्रत्वेन प्रतीतियोगात्। आश्वलायनस्य तु प्राथम्यरूपक्रमविशिष्टनियोजन-विधिपरत्वात् प्रथमस्य पात्रस्य प्रेतसम्बन्धित्वमिति भावः।

२९। ब्राह्मणक्रमापेक्षया मन्त्रक्रमस्य बलवत्त्वविचारः पूर्वं विचारितः।

३०। सपिण्डीकरणे ब्राह्मणभोजनविचारमाह— किं चेति। संवत्सरान्ते इति विष्णुधर्मसूत्रव्याख्याने केशववैजयन्त्यामाह नन्दपण्डितो यथा— सपिण्डी-

तत्पित्रे तत्पितामहाय तत्प्रपितामहाय च ब्राह्मणान् देवपूर्वान् भोजयेदिति (२१-१२) विष्णुवचनात् तदेतत् तन्त्रतानिवृत्तिः । अन्यथाऽतिदेशप्राप्तेन हेतु-मन्निगदार्थवादसहितवचनेनैव दैवपूर्वताप्राप्तेः किमस्य विधेयं स्यात् । किंच[31]

करणमाह । संवत्सरान्ते संवत्सरान्तदिने, तस्मिन् सति अव्यवहिताग्रिमदिने इति वा । सोयं सार्ववर्णिकः साधारणः कालः । कालान्तरमप्याह भविष्यपुराणम्—

द्वादशेऽहनि षष्ठे वा त्रिपक्षे वा त्रिमासि वा ।

एकादशेऽपि वा मासि मंगले वाप्युपस्थिते ।। इति ।

तत्र पित्रादिभ्यश्चतुर्थः चत्वारः वैश्वदेविके च द्वौ इत्येवं षड् ब्राह्मणान् प्रेतस्य एकोद्दिष्टविधिना तत्पित्रादीनां च त्रयाणां पार्वणविधिना भोजयेत् । तदेतत् पार्वणैकोद्दिष्टात्मकं नरसिंहाकारपशुश्राद्धपदाभिधेयमुभयविलक्षणमेकमेव श्राद्धम् । अथ सपिण्डीकरणं, चत्वार्युदपात्राणि इत्यादावेकवचनश्रुतेः । यत्तु श्राद्धद्वयमु-पक्रम्य कुर्वे सहपिण्डताम् इत्यादि स्मरणं तत् विधिद्वयाभिप्रायेणेति मन्तव्यम् । सपिण्डीकरणे प्रेतपात्राणां योजनानन्तरं ब्राह्मणभोजनस्य उक्तत्वात् श्राद्धीयवैश्व-देवानामत्रातिदेशेन प्राप्तत्वात् विष्णुवचने तस्य विधेयत्वाभावात् प्रेतपात्र-पितृपात्राणां तन्त्रतानिवृत्तिरिति तात्पर्यं ग्रन्थकर्तुराशयीभूतम्, सा तन्त्रता तन्त्रालोके वक्ष्यते ।

३१ । देवे नाम वैश्वदेवे पात्रे अर्घ्यदानादिकं निखिलं कर्म आनन्तर्य-वशात् एकैकं वैश्वदेवपितृपात्रेषु क्रियते । तत्र आश्वलायनवचनं चत्वार्युद-पात्राणि इति । स क्रमः पदार्थानुसमयत्वेनोच्यते । न तु काण्डानुसमयत्वेन । अनुसमयो नाम अनुष्ठानम् । पदार्थमाश्रित्य क्रियमाणमनुष्ठानं पदार्थानुसमयः । काण्डो नाम पदार्थवर्गः । तदाश्रित्य यदनुष्ठानं तत् काण्डानुसमय इति । तत्स्वरूपं ( त० सि० र० पृ० ११९-२० ) यथा—अनेकप्रधानेकैकप्रयोगस्थले तत्सन्नि-पातिनामंगानां प्रतिप्रधानं गुणावृत्तिरिति न्यायेनावृत्त्यानुष्ठानं प्राप्तम् । तत्र च प्रकारद्वयम् काण्डानुसमयः पदार्थानुसमयश्चेति । एकस्मिन् प्रधाने संनिपत्योप-कारकांगकाण्डं समग्रमनुष्ठायापरस्मिन् प्रधाने तदनुष्ठानमिति काण्डानुसमयः । काण्डः पदार्थवर्गः, तेनानुसमयः, अनुष्ठानमिति यावत् । एवमेकं पदार्थं सर्वेष्वपि प्रधानेष्वनुष्ठाय ततः पदार्थान्तरस्य पूर्वक्रमेणानुष्ठानं पदार्थानुसमयः । तत्र प्रधानानामंगानां च प्रत्यासत्तिलाभाय प्रायेण पदार्थानुसमय एवाश्रीयते । यत्र तु पदार्थानुसमये कृते प्रधानविरोधः तत्र तावन्मात्राणामंगानां काण्डानुसमयः इति ।

प्रकृते तु अर्घ्यदानादिकं कर्म सन्निपत्योपकारकांगम् । प्रत्यासत्तिलाभाय अंगानां पदार्थानुसमयः अत्राश्रितः ।

सोऽयं पदार्थानुसमयकाण्डानुसमयविचारः जैमिनीयेषु वचनात्तु परिव्याणा-न्तमंजनादि स्यात्। कारणाद् वानवसर्गः स्याद्यथा पात्रवृद्धिः। न वा शब्दकृतत्वान्न्यायमात्रमितरदर्थात् पात्रविवृद्धिः ( ५।२।७-९ ) इति सूत्रेषु कृतः।

तत्राहुर्भाष्यकाराः—ज्योतिष्टोमेऽग्नीषोमीयपशौ यूपस्यांजनाद्याः पदार्थाः श्रूयन्ते। तेषु यूपैकादशिन्यां प्राप्तेषु संशयः। किमंजनादीनामेकैकेनानुसमय उतांजनादिना परिव्याणान्तेनेति। किं प्राप्तम्। परिव्याणान्तमंजनादिनानु-समयः कर्तुं न चानवस्रष्टुम्, तस्मात्परिव्याणान्तेनानुसमयः।

सहत्वस्य प्रापकः प्रयोगवचनोऽनुग्रहीष्यत इति पदार्थानुसमयः। अनव-सर्गश्च प्रकृतावर्थात्कृतः। साहाय्यं यजमानेनाध्वर्योः। एवं दृष्टार्थतानवसर्गस्य। इतरथा अदृष्टार्थता स्यात्। न चार्थात्कृतं चोदकः प्रापयति। तस्माद्यूपा-न्तरेणोच्छ्र्यितव्येन कारणेनावसृजेत्। यथा पृषदाज्येनानुयाजान् यजतीत्य-र्थात्तस्य धारणार्थं पात्रं भिद्यते।

नवैतत्पदार्थेनानुसमय इति। परिव्याणान्तेन पदार्थकाण्डेनानुसमयः स्यात्। शब्दकृतं हि प्रकृतावनवसर्जनम्। शक्तो हि ऋतेऽपि यजमानादध्वर्युर्यूपमुच्छ्र्-यितुम्। सौकर्यमिति चेत्। विधिशब्दो बाध्यते। दृष्टार्थता, एवं हि नियम्येत। भोजने प्राङ्मुखतैव। अतोऽसम्भवात् पदार्थकाण्डेनानुसमयः। प्रयोगवचनस्य तु च न्यायमात्रत्वम्। चोदकस्ततो बलीयान्। पात्रविवृद्धि-स्त्वर्थात्कर्तव्या इति।

जैमिनीयन्यायमालायां यथा (५।२।७-९)—

यूपांजनादिरेवैकः संघौ वानुसमीयते।
एकैकः पूर्ववन्मैवं वचनात् काण्डसंगतेः॥

तत्र विस्तरो यथा—ज्योतिष्टोमेऽग्नीषोमीयपशौ यूपस्य घृतेनांजनमुच्छ्रायणम्, अवरस्य समूहनम्, यूपमूलस्य परिबृंहणम्, मध्ये रशनया परिव्याणम्। इत्येते पदार्थाः आम्नाताः। ते चैकयूपपक्षे तथैव कर्तव्याः। एकयूपस्य च विकल्पः श्रूयते—एकयूपो वैकादशिनो वान्येषां यज्ञानां यूपाः भवन्ति एकविंशिन्यश्वमेधस्य इति। तत्र बहुरूपेष्वंजनादिरेकैकः पदार्थः प्राजापत्यपशूपाकरणादिवदनुसमेतव्यः इति प्राप्ते--ब्रूमः। अंजनादिपरिव्याणान्तं यजमानो यूपं नावसृजेत् इति वचनेन यजमानस्य यूपत्यागनिषेधोऽजनादिकाण्डस्यानुसमये खलूपपद्यते। तस्मा-न्नात्र पदार्थानुसमयः।

शास्त्रदीपिकायां यथा—(५।२।७-६)—अग्नीषोमीये पशौ यूपधर्माः अंजन-मुछ्रयणं समानं परिव्याणमिति यूपगणे चोदकप्राप्ताः किमेकैकशोऽनुसमेतव्या उत अंजनादिपरिव्याणान्तेनानुसमय इति संशये पूर्वेण न्यायेन पदार्थानुसमयः। नन्वंजनादिपरिव्याणान्तं यजमानो यूपं नावसृजेदिति प्रकृतावनवसर्गश्चोदकेनेह प्राप्तः कथमेकैकशोऽनुष्ठीयमाने शक्यते कर्तुम्। एवं मन्यते प्रकृतावार्थिकोऽन-वसर्गो यजमानेनाध्वर्योः साहाय्यमाचरतानुष्ठितस्तदनुवादमात्रं वचनं, न चार्थिकं चोदकः प्रतिदिशति। अतः पदार्थानुसमयः।

नैवं नियमतोप्राप्तेरनुत्सर्गो विधीयते।
वाक्यं चार्थवदेवं स्याद्वादमात्रं त्वनर्थकम्॥
गणेऽपि चोदकेनातः प्राप्यतेऽनवसर्जनम्।
तेनांजनादिसंघोऽत्र संघेनानुसमीयते॥

स्फुटं विचारस्तु जैमिनीयेषु सन्निपाते प्रधानानामेकैकस्य गुणानां सर्वकर्म स्यात्। सर्वेषां वैकजातीयं कृतानुपूर्वत्वात्। कारणादभ्यावृत्तिः। (५।२।१-३) इति सूत्रेषु कृतः।

तत्राहुर्भाष्यकाराः—वाजपेये सप्तदश प्राजापत्यान् पशुनालभेत इति श्रूयते। अग्नीषोमीये च पशौ पशुधर्माः समाम्नाताश्चोदकेन प्राप्ताः। तेषु संशयः। किमेकस्यादित आरभ्य धर्मान् सर्वान् कृत्वा द्वितीयस्य पुनरादित उपक्रमितव्याः, अथ प्रथमस्तावत् सर्वेषां कर्तव्यस्ततो द्वितीय इति। किं प्राप्तम्। एकैकस्य सर्वैर्वर्जयितव्या इति। कुतः। प्रधानासत्तेरनुग्रहाय। इतरथा प्रधाना-सत्तिर्विप्रकृष्येत। यथा—बहुष्वश्वेषु प्रतिग्रहीतेषु ये पुरोडाशास्तेषु नैकजातीया-नुसमयः, एवमिहापि इति।

एकजातीयानुसमयः कर्तव्यः। किमेवं भविष्यति सहत्वमनुग्रहीष्यते। तत्सहत्वं श्रूयते, वैश्वदेवीं कृत्वा पशुभिश्चरन्तीति। एकस्मिन् काले पशूनां प्रचारः। नचैवं सति पूर्वस्य पदार्थस्योत्तरः पदार्थः पश्वन्तरव्यापारेण व्यवधीयते। नैष दोषः। एवमपि कृतमेव आनुपूर्व्यम्। वासौ पश्वन्तरे व्यापारः स एवासौ। न पदार्थान्तरम्। पदार्थान्तरेण व्यवधानं भवति।

अथ यदुक्तं बहुषु पुरोडाशेषु नैकजातीयानुसमय इति। तत्परिहर्तव्यम्। अत्रोच्यते। युक्तं तत्र। यत्कारणादभ्यावृत्तिः। एकजातीयानुसमये हि क्रियमाणे सहस्रस्याधिश्रवणे कृते प्रथमः शुष्येत। तस्य च प्रथमं न शक्येत कर्तुम्। अथवा अधिकरणानन्तरम्। कारणादभ्यावृत्तिः (जै० सू० ५-२-३)।

अनेकसहस्राश्वप्रतिग्रहे तत्रानुष्ठानमिति पूर्वः पक्षः, काण्डानुसमयेऽभ्युपेतव्य इति सिद्धान्तः ।

जैमिनीयन्यायमालायां (५।२।१-३) यथा—

वाजपेये किमेकैकपशौ सर्वसमापनम् ।
सर्वेषु वैकैकधर्म आद्यः साहित्यसिद्धये ।।
वचनात् पशुसाहित्यं प्रयोगोक्त्या तु कल्प्यते ।
धर्मसाहित्यमेतच्च सिद्धान्तेऽपि न हीयते ।।

तत्र विस्तरो यथा—वाजपेये सप्तदशसु प्राजापत्येषु पशुष्वेकस्मिन् पशावुपाकरण-नियोजनादिसंस्काराः सर्वे समापनीयाः । तथा सति सांगं प्रधानं कर्तव्यम्—इति प्रयोगवचनेनावगतं धर्माणां साहित्यं सिध्यति । चोदकोऽपि धर्मसाहित्यं प्रापयति । प्रकृतावुपाकरणनियोजनादीनां साहित्यदर्शनात् । तस्मात् अत्र काण्डानुसमयः, न तु पदार्थानुसमयः इति प्राप्ते ब्रूमः —सप्तदश प्राजापत्यान् पशून् आलभते इति वचनात् पशुसाहित्यमवगतम् । तच्च प्रबलम् । प्रत्यक्षेण पशून् इत्यनेनैकशब्देन प्रापितत्वात् । धर्मसाहित्यं तु न प्रत्यक्षशब्देन प्रापितम्, किन्तु प्रयोगवचनेन परिकल्प्यते । यथैकस्मिन् प्रयोगे धर्मसाहित्यं न स्यात्, तदा कतिपयधर्मवैकल्येन सांगप्रधानानुष्ठानविधिर्नोपपद्येत इत्यर्थापत्तिः । चोद-केनापि विकृतौ धर्मसाहित्यवचनमनुमीयते । तदुभयं प्रत्यक्षात् पशुसाहित्य-वचनात् दुर्बलम्, तस्मात् वैश्वदेवीं कृत्वा प्राजापत्यैश्चरन्ति इत्यनेन प्रत्यक्ष-वचनेनावगतं पशुसाहित्यमबाधितुं सर्वेषु पशुष्वेकैक उपाकरणादिधर्मः कर्तव्यः, इत्येवं पदार्थानुसमयोऽभ्युपगन्तव्यः, न तु काण्डानुसमयः । अस्मिन्नपि पक्षे प्रयोगवचनचोदकाभ्यामवगतं धर्मसाहित्यं न विरुध्यते । एकस्मिन्नेव प्रयोगे कृत्स्नधर्माणामनुष्ठितत्वात् ।

अपरस्मिन् अधिकरणे यथा—

प्रतिग्रहे तु बह्वश्वे पूर्वन्यायोऽस्ति वा न वा ।
अस्ति तत्साम्यतो मैवं पुरोडाशस्य शेषतः ।।

अत्र विस्तरो यथा—यावतोऽश्वान् प्रतिगृह्णीयात्तावतो वारुणांश्चतुष्क-पालान्निर्वपेत् इति । अत्र शतसंख्यादियुक्तबह्वश्वप्रतिग्रहे बहुपुरोडाशेषूदाहृत-प्रत्यक्षवचनेन साहित्यं प्राप्तम् । तत्र पूर्वन्यायेन सर्वेषु पुरोडाशेषु एकैकोऽधि-श्रयणादिधर्मोऽनुष्ठेय इति चेत् मैवम् । तप्तेषु कपालेषु क्रमेण पुरोडाशानधि-श्रित्य यावता कालेन प्रथमपुरोडाशे द्वितीयसंस्कारं कर्तुमागच्छति, तावतासौ

प्रागेव दैवे अर्घ्यमन्त्राद्यं च दत्त्वा अन्यानर्चयेदिति आश्वलायनवचनात् न वैश्वदेवार्घ्यादिभिः पदार्थानुसमयः, किन्तु काण्डानुसमय एव। आभ्युदयिके[३२] तु मात्रादिक्रमेणैव वचनादतिदेशबाधात्। तथा च शातातपः —

मातृश्राद्धं तु पूर्वं स्यात् पितॄणां तदनन्तरम्।
ततो मातामहानां च वृद्धौ श्राद्धत्रयं स्मृतम् ॥ इति।

अन्वष्टकायां[३३] तु यद्यप्यागन्तुकत्वात् मात्रादीनाम् अन्ते तु बादरायण इति

---

शुष्को भस्मी भवति। तस्मात् एकैकस्मिन् पुरोडाशे कृत्स्नधर्मसमापनम् इत्येवं काण्डानुसमयोऽभ्युपगन्तव्यः इति।

आश्वलायनगृह्यसूत्रस्य (१-२४-१) गार्ग्यनारायणीये यथा—तत्र पदार्थानुसमयो नाम सर्वेषां वरणक्रमेण विष्टरं दत्त्वा ततः पाद्यं ततोऽर्घ्यमिति काण्डानुसमयो नाम एकस्यैवं विष्टरादिगोनिवेदनान्तं समाप्य ततोऽन्यस्य सर्वं ततोऽन्यस्येति।

स्मृतिचन्द्रिकायां (व्य० का० पृ० २५१) दिव्यप्रकरणेऽप्येवं यथा—तेषामर्घ्याद्युपकल्पनं पदार्थानुसमये न कार्यम्, न काण्डानुसमयेन तथात्वे प्रयोगवचनावगतसाहित्यबाधापत्तेः। दुर्गायै भूषणं दत्त्वा धर्मस्येन्द्रादिदुर्गान्तानां च गन्धादिपरिचर्यां पूर्ववत् कुर्यादिति।

३२। अभ्युदयो नाम वृद्धिः। तत्सम्बन्धित्वेन वृद्धिश्राद्धस्य आभ्युदयिकमिति संज्ञा। तत्र अतिदेशेन अन्तिमे प्राप्तस्य वैश्वदेवस्य शातातपवचनेन मातृश्राद्धं तु पूर्वं स्यात् इत्यादिना बाधः।

३३। ऊर्ध्वमाग्रहायण्यास्तिस्रोऽष्टकाः (३-३-१) इति पारस्करवचनात् आग्रहायणमासस्य नाम मार्गशीर्षमासस्य (मार्गशीर्षे सहामार्त आग्रहायणिकश्च सः — अमरकोषः १-४-१४) ऊर्ध्वं परं तिस्रोऽष्टका भवन्ति। तदुक्तम्—

पौषादि त्रिषु मासेषु कृष्णपक्षेष्टका भवेत्।
श्वस्ततोन्वष्टकास्तिस्रो मातरस्त्वधिका इह ॥ इति।

अर्थात् पूर्णिमान्तपौष-माघ-फाल्गुनानां त्रयाणां कृष्णपक्षीयासु अष्टमीषु अष्टकाश्राद्धं भवति। तासु षाट्पुरुषिकं नाम पितृ-पितामह-प्रपितामह-मातामह-प्रमातामह-वृद्धप्रमातामहोद्दिष्टं श्राद्धं क्रियते। अन्वष्टकाश्राद्धानि एतत्तिथित्रयम् अनु पश्चात् नाम पौष-माघ-फाल्गुनानां कृष्णनवमीषु भवन्ति। अत्र मातॄणां श्राद्धान्यधिकत्वेन मिश्रयित्वा नवपुरुषिकं श्राद्धं भवति नाम—पितृ-पितामह-प्रपितामह-मातामह-प्रमातामह-वृद्धप्रमातामह-मातृ - पितामही - प्रपिता-

**चरममेव निवेशः प्राप्नोति । तथापि[३४]—**

**मातामहानां यः कृत्वा मातृणां सम्प्रयच्छति° ।**
**तर्पणं पिण्डदानं च नरकं तु संगच्छति°° ॥**

**इति वचनात् मात्रादीनां मातामहेभ्यः पूर्वं कर्तव्यम् । वस्तुतस्तु स्मृत्यपेक्षया गृह्यसूत्रस्य बलवत्त्वात् अन्वष्टकासु सर्वासु पाश्र्वसक्तिसव्याभ्यां परिवृत्ते पिण्डपितृयज्ञवत् स्त्रीभ्यश्चोपसेचनं कुर्युः (पा० गृ० सू० ३-३-११) इति वचनात् अन्त एव कर्तव्यम् । अन्वष्टकाकर्मणि तथादर्शनम् । इत्थमेव शम्भुकरवाजपेयिचरणैरुक्तम् ।**

---

मह्युद्देश्येन क्रियते इत्यर्थः । अत्र अष्टकाश्राद्धगतदैवतसंख्यापेक्षया मात्रादिप्रपितामहीपर्यन्तानां देवताविशेषाणामधिकतया सत्त्वात् तेषामागन्तुकत्वमुक्तम् । आगन्तुकानामन्तिमोपवेशनं लोकसिद्धम् ।

३४ । अत्र प्रतिस्पर्धिवचनं मातामहानामिति । अनेन अन्तिमे मातामहस्य निवेशनं प्राप्यते । एतद्वचनद्वयस्य परस्परविरोधे गृह्यसूत्रवचनेन अन्तिमे निवेशनं कर्तव्यमिति सिद्धान्तयति ग्रन्थकारः । गृह्यसूत्रवचनस्य वैदिकत्वेन प्रसिद्ध्या, पुराणवचनस्य बलाबलाधिकरणन्यायेन दुर्बलत्वम् । तत्र पारस्करगृह्यसूत्रवचनस्यैव प्राकरणिकत्वेनोपस्थितिः । यथा—अन्वष्टकासु सर्वासु पाश्र्वसक्थिसव्याभ्यां परिवृत्ते पिण्डपितृयज्ञवत् स्त्रीभ्यश्चोपसेचनं च कर्षूषु सुरया तर्पणेन चांजनानुलेपनं स्रजश्च । (३-३-१०-११) इति । अत्राहुः सर्वे भाष्यकाराः । तत्राद्यः कर्काचार्यो यथा—श्वस्तनेऽहनि सर्वाष्वष्टकासु पाश्र्वसक्थिसव्ययोर्मांसमादाय परिवृत्ते पिण्डपितृयज्ञवत् कर्म भवति । इयांस्तु विशेषः स्त्रीभ्यश्च ददाति । उपसेचनं च कर्षूषु सुरया अयं च स्त्रीपिण्डसन्निधौ अवटेषु सुरयोपसेचनं तर्पणेन च तर्पयेत् इति ।

जयरामो यथा—श्वः सर्वासामष्टकानां श्वस्तनेऽहनि अन्वष्टकासु पाश्र्वसक्थिसव्ययोर्मांसमादाय परिवृत्ते सर्वत आच्छादिते आवसथ्यागारे पिण्डपितृयज्ञवत् कर्म भवति । इयांस्तु विशेषः स्त्रीभ्यश्चापि पिण्डान् ददाति । कर्षूषु स्त्रीपिण्डसमीपवर्तिगर्तेषु सुरया विहितमद्येन तर्पणेन च तर्पणहेतुभिः सक्तुभिरुपसेचनं स्त्रीपिण्डेषु अंजनानुलेपनस्रजश्च ददाति ।

हरिहरो यथा—श्वः अष्टम्यामुत्तरेद्युः अन्वष्टकासु अष्टकाम् अनु पश्चाद्

---

° यः प्रयच्छति इति ख पुस्तकपाठः ।

°° स तु गच्छति इति ख पुस्तकपाठः ।

भवन्तीत्यन्वष्टकाः तासु सर्वासां चतसृणामष्टकानां कर्म भवतीति शेषः। केन द्रव्येणेत्यत आह पार्श्वसक्तिसव्याभ्यां। पार्श्वं च सक्थि च पार्श्वसक्थिनी ते च सव्ये च पार्श्वसक्थिसव्ये ताभ्यां पार्श्वसक्थिसव्याभ्याम्। अत्र तुल्याधिकरणविशेषणीभूतस्य सव्यशब्दस्योत्तरपदत्वं छन्दम्। परिवृत्ते सर्वतः प्रच्छादिते आवसथ्याग्निसदने। इतिकर्तव्यतापेक्षायामाह पिण्डपितृयज्ञवत्। अपराह्णे पिण्डपितृयज्ञ इत्याद्युक्तपिण्डपितृयज्ञविधिना। स्त्रीभ्यश्च पिण्डपितृयज्ञवत् इत्यनेन पितृपितामहप्रपितामहानामेव पिण्डदानं प्राप्तं ततोऽधिकमुच्यते स्त्रीभ्यः मातृपितामहीप्रपितामहीभ्यः पिण्डान् दद्यादिति चकारेण समुच्चीयते। अत्र सामान्योऽपि स्त्रीशब्दः पित्रादिसंनिधानात् मात्रादिपरोऽवसीयते। अत्र उप... ...सृज एव न केवलं स्त्रीभ्यः पिण्डान् दद्यात्। किन्तु आसेचनं कुर्यात्। कया सुरया मद्येन। कासु कर्षूषु अवटेषु न केवलं सुरया तर्पणेन च तर्पयत्यनेनेति तर्पणसाधनं सक्त्वादिनेति। चकार उपसेचनक्रियासमुच्चयार्थः करणाधिकरणश्चेति लुङ्तोऽत्र तर्पणशब्दः। त्रैककुदं सौत्रारंजनमिति प्रसिद्धं तदलाभे लौकिकं कज्ज्वलम् अनुलेपनं सुगन्धिद्रव्यं चन्दनादि स्रजः अप्रसिद्धसुरभिपुष्पमालाः। चत्वारो दद्यादिति क्रियासमुच्चयार्थः।

विश्वनाथो यथा—सर्वासामष्टकानाम् एकः उत्तरेद्युः। तदर्थमेवाह अन्वष्टकासु अष्टकायाः पश्चात् क्रियमाणाः अन्वष्टकाः तासु। पार्श्वं च सक्थि च पार्श्वसक्थिनी ते च ते सव्ये च पार्श्वसक्थिसव्ये ताभ्यामन्वष्टकाख्या क्रिया कर्तव्येत्यर्थः। कुत्र इत्यत आह—परिवृते आवसथ्यगृहे सर्वत आच्छादिते। कथं स्यादत आह—पिण्डपितृयज्ञवत्। पदार्थक्रमश्चायम्। अपराह्णे परिवृतस्थस्याग्नेः वैश्वदेवानन्तरं परिस्तरणं ततोऽपसव्येन नीवीबन्धनम्। होमवर्जमपसव्येन दक्षिणाभिमुखेन। पात्रासादनं स्रुग्वा। असिना पार्श्वसिक्थ्नोः मांसानि च्छित्वा आसादयेत्। सुरादि पंचकम्। चरुपक्षे तण्डुलाः। चरुग्रहणवत् मांसग्रहणश्रवणाद् कण्डननिष्पवनादि न भवति। तेनोलूखलादेरासादनाभावो मांसपक्षे अन्यत्सर्वं पिण्डपितृयज्ञवत् इत्यनेनादिष्टपिण्डपितृयज्ञ विधिपरम्। विशेषमाह स्त्रीभ्यश्च मातृपितामहीप्रपितामहीनां पित्रादिभ्यः पिण्डदानानन्तरं पिण्डदानसमुच्चयार्थश्चकारः। अ⋯न। न केवलं स्त्रीभ्यः पिण्डदानमपि तु कर्षूषु सुरया तर्पणेन चोपसेचनम्। काण्डहरीतकीगुडरसेन च सुरा। तर्पणं सक्तुभिः। स्त्रीपिण्डेभ्यः पश्चात् कर्षवः दैर्घ्ये प्रादेशमिताः चतुर्भिरंगुलैः विस्तृताः। अंगुलिखाताः। तेषु सुरायाः सक्तूनां चासेकः। प्राक्सूत्रसम्प्रदानसमुच्चयार्थ आद्यश्चकारः। सुरासक्त्वोः समुच्चयार्थो द्वितीय-

4107

अथ वैश्व[३५]देवक्रमः। स च पार्वणश्राद्धोत्तरकाल एव कर्तव्यः नैकोद्दिष्ट-श्राद्धोत्तरकाले।

विसर्जनं तत्प्रथमं पितृ[३६]पैतामहेषु वै। (वि० पु० ३-५-४७)
इत्यन्तं पार्वणं श्राद्धं विधाय[३७]
ततस्तु वैश्वदेवाख्यां कुर्वन्नित्यक्रियां बुधः।
( वि० पु० ३-१५-४९ )

इत्यस्य[३८] वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेते (आप० श्रौ० सू० १८-७-१७) त्यत्र

---

श्चकारः। प्रयोगस्तु गोत्रे मातः अमुकदेवि सुरां पिबस्व। मातृद्वयं चेत् पिबेथां बह्वयश्चेत् पिबध्वमिति दक्षिणसंस्थं प्रत्यवटप्रक्षेपे प्रयोगः। एवं तृप्यस्व तृप्येथां तृप्यध्यमिति प्रत्यवटं मातृपितामहीप्रपितामहीभ्यः सक्तून् क्षिपेत्। अंज···सश्च। स्त्रीपिण्डेषु प्रतिपिण्डमंजनं सौवीरांजनमभावे लौकिकम्। अनुलेपनं चन्दनादि। स्रजः पितृप्रियपुष्पमालाः। चकारः दद्यादिति क्रिया-समुच्चयार्थः। प्रयोगस्तु गोत्रे मातः अमुकदेवि अंजस्व। अंजेथाम्। अंजध्वम्। एवं पितामहीप्रपितामहीभ्याम्। अनुलिम्पस्व। अनुलिम्पेथाम् अनुलिम्पध्वम्। स्रजोऽपि नह्यस्व। स्रजोऽपि नह्येथाम्। स्रजोऽपि नह्यध्वम्। अत्र पितर इत्यादि उल्मुकप्रक्षेपान्तं पिण्डपितृयज्ञवत् इति।

सोयं विषयः अष्टकाविषयालोचनवेलायां विस्तरशो वर्णितः। स्व-सिद्धान्तस्य पुष्टिविधानार्थमुत्कलीयस्मृतिधुरन्धराणां तत्पूर्ववर्तिनां शम्भुकरवाज-पेयिचरणानां मतमिदमिति धिया तैरपीत्थमुक्तमिति ग्रन्थकारो व्यलिखत्।

३५। अथ विश्वेषां देवानां पितॄणां चायमिति वैश्वदेवो देवाद्यर्थः पाकः, लक्षणया तत्संविभागः देवपित्रादियज्ञा इत्यर्थः।

३६। पैत्रमातामहेषु वै इति मुद्रित वि० पु० पाठः।

३७। पार्वणश्राद्धे श्राद्धानन्तरं वैश्वदेवः। एकोद्दिष्टे तु वैश्वदेवानन्तरं श्राद्धमिति विशेषः। वैश्वदेवस्य पार्वणलक्षणलक्षितत्वात्।

यथैकत्र भवेयातामेकोद्दिष्टं च पार्वणम्।
पार्वणं त्वभिनिर्वर्त्य एकोद्दिष्टं समाचरेत्।

इति जाबालिवचनेन एकोद्दिष्टस्य इति पार्वणपूर्वकालताविधानात्।

३८। पार्वणश्राद्धे वैश्वदेवस्य श्राद्धोत्तरकालत्वेन क्रमविषयकोक्तेरधिकरण-माचरयति वाजपेयेनेष्ट्वेति। तच्चाधिकरणं प्रकरणान्तरन्यायत्वेन स्पष्टम्।

**दूरस्थबृहस्पतिसवस्य वाजपेयोत्तरकाललक्षणानुपादेयगुणेन प्रकरणान्तरन्यायेन कर्मान्तरत्वं प्रकरणात् वाजपेयांगत्वमितिवत्[३९] ।**

---

एकं कर्म इतरस्मात् कर्मणो भिद्यते शब्दान्तरात्, अभ्यासात्, संख्यया, संज्ञया, गुणात्, प्रकरणान्तराच्च । अत्र प्रकरणान्तरं प्रकृततया विवेच्यम् । तद्यथा—तन्त्रसिद्धान्तरत्नावल्याम् (पृ० ८७)—अनुपादेयगुणविशिष्टा पूर्वकर्मानुपस्थितिः प्रकरणान्तरम् । तेनापि कर्मभेदः सिध्यति । तथाहि—अस्ति कुण्डपायिनामयनाख्यः सत्रविशेषः संवत्सरसाध्यः । तत्सन्निधौ श्रूयते—उपसद्भिश्चरित्वा मासमग्निहोत्रं जुह्वति । मासं दर्शपूर्णमासाभ्यां यजन्ते (तां० ब्रा० २५-४-१) इत्यादि । तत्र प्रसिद्धान्नित्याग्निहोत्रदर्शपूर्णमासादेर्भिन्नं कर्मात्र विधीयते । न च नैयामिकाग्निहोत्रमनूद्यैवात्र मासरूपो गुणो विधीयतामिति वाच्यम् । तेषामिति दूरस्थत्वेनात्रानुपस्थितेः तदुद्देश्येन गुणविधानासम्भवात् । न च नाम्नस्तदुपस्थापकत्वम् । तस्याग्निदेवताकर्ममात्रोपस्थापकत्वेऽपि पूर्वकर्मोपस्थापकत्वे मानाभावात् । न हि अग्निदेवताकं पूर्वं कर्मैवेत्यत्र प्रमाणमस्ति । यत्रोपादेयगुणश्रवणम्, तत्र विधिशक्तेर्गुणे संक्रमात् धात्वर्थस्यानुवादापेक्षायां दूरस्थानामपि कर्मणां कथंचिदनुवादो युक्तः । यथा—यदाहवनीये जुह्वति (तै० ब्रा० १-१-१०-५) इत्यत्र । प्रकृते तु मासस्यानुपादेयत्वात् तत्र विधिशक्तेरसंक्रमात् धात्वर्थ एव सा संक्रामयति । तस्यैव विधेयत्वम् । धातुना च न पूर्वकर्मोपस्थितिः । अतोऽपूर्वमेव कर्मोपसदुत्तरकालिकत्वमासादिविशिष्टं विधीयते । तस्य चाग्निहोत्रपदं गौण्या वृत्त्या नाभिधेयम् । अनेकत्र शक्तिकल्पनायां गौरवात्, प्रमाणाभावाच्च । नित्याग्निहोत्रसादृश्यं चात्र तदीयधर्मवत्वरूपं गौणीवृत्तिनिमित्तम् । तच्च न प्रमाणान्तरावगतमित्यनेनैव पदेन साध्यसादृश्यविधया अवबोध्यते । तेन च तदीयधर्माणामत्रातिदेशः । अतः सिद्धः प्रकरणान्तरात् कर्मभेदः । अत्र कालरूपोऽनुपादेयगुणः कर्मभेदोपयोगी । एवं देशनिमित्तफलसंस्कार्यरूपाणामप्यनुपादेयगुणानां योगे सति प्रकरणान्तरात् कर्मभेदो द्रष्टव्यः इति ।

३९ । सोऽयं विषयो जैमिनीये प्रकरणान्तरे प्रयोजनान्यत्वम् (२-४-२४) इति सूत्रे ( प्रकरणान्तरं ) विचारितः ।

तत्राहुर्भाष्यकाराः —कुण्डपायिनामयने श्रूयते—मासमग्निहोत्रं जुहोति, मासं दर्शपूर्णमासाभ्यां यजेत इत्येवमादि । तत्र सन्दिह्यते । किं नियतेऽग्निहोत्रे नियतयोश्च दर्शपूर्णमासयोः मासो विधीयते कालः । अथ किं नियताग्निहोत्रा-

न्नियताभ्यां च दर्शपूर्णमासाभ्यां कर्मान्तरविधानमिति । किं तावत् प्राप्तम् । नियतेषु कालविधिरिति । कुतः । कालविधिस्वरूप एव शब्दो मासमिति । कथं कालविधिस्वरूपता । यदग्निहोत्रं जुहोतीति विदितं, मासमित्यविदितम् । एवं चाग्निहोत्रशब्दो दर्शपूर्णमासशब्दश्च नार्थान्तरवृत्तौ भविष्यतः । तस्मात् कालविधिः । ननु कुण्डपायिनामयनप्रकरणं बाध्येतैवम् । कामं बाध्यताम् । वाक्यं हि बलवत्तरम् । एवं प्राप्ते ब्रूमः । प्रकरणान्तरे श्रूयमाणं वाक्यं यस्य प्रकरणे तस्य वाचकं भवितुमर्हति । ननु प्रत्यक्षाग्निहोत्रस्य दर्शपूर्णमासयोश्च गुणविधिः । नेत्युच्यते । कथम् । उपसद्भिश्चरित्वेति ह्युक्त्वेदमभिधीयते । न चोपसदोऽग्निहोत्रस्य दर्शपूर्णमासयोश्च सन्ति । तस्मादशक्यस्तत्र मासविधिः । अथोच्येत उपसदोऽपि विधीयन्त इति । तथा गुणविधानार्थेऽस्मिन् वाक्येऽनेकगुणविधानात् वाक्यं भिद्येत । अस्मिन् पक्षे पुनरतन्त्रमग्निहोत्रशब्दो न कर्म विशेषयति । तेन वाक्यभेदो न भविष्यति । तस्मात् कर्मान्तरमिति सिद्धम् इति ।

तन्त्रवार्तिके कुमारिलश्रीचरणा यथा—परमार्थेन तु—

भिद्यते भावनामात्रं धात्वर्थो नायजिश्रुतेः ।
नाम्ना हि तदुपादानमासनोपाधिचोदिते ॥

नाम विलक्षणधातुश्रवणे हि तदर्थभेदो भवति । सत्रे तु यज्यश्रवणान्नाममात्रोपनीतप्रकृतयागप्रत्यभिज्ञानात्तद्भावनामात्रभेदः । तस्मात् साधूक्तं प्रकरणान्तरे प्रयोजनान्यत्वमिति । भाष्यकार उपसद्भिश्चरित्वेति तल्लक्षितकालमेवानुपादेयरूपं भेदहेतुत्वेन दर्शयतीति द्रष्टव्यम् । अथोच्येत—उपसदोऽपि विधीयन्त इत्यादि चाध्यासाधिकरणवदभ्युपेतवादेन समर्थयितव्यम् इति प्रकरणान्तराधिकरणम् इति ।

जैमिनीयन्यायमालायामपि—

मासं जुहोत्यग्निहोत्रं गुणोऽन्यत् कर्म वा गुणः ।
अनूद्य प्राप्तकर्मात्र मासोऽप्राप्तो विधीयते ॥
उपसद्भिश्चरित्वेति नित्ये तासामसम्भवात् ।
अनेकस्याविधेश्चान्यत् कर्म प्रकरणान्तरात् ॥

इति । अत्र सिद्धान्तविस्तरो यथा—परमार्थतस्त्वत्र प्रथमतरप्रतीतेन प्रकरणभेदेन सिद्धं कर्मभेदं गुणभेद उपोद्बलयति । ततः प्रकरणान्तरमेवात्र भेदहेतुः इति ।

**इहापि[४०] वैश्वदेवे पार्वणोत्तरकालविधौ प्रकरणान्तरन्यायेन कर्मभेदे नित्यकर्मपदासंगतिः स्यात्। तेन कृतार्थयोः सम्बन्धः कालार्थ इति दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेतेत्यत्र दर्शपूर्णमासोत्तरकालत्वं सोमे विधीयते यथा, तथा ततस्तु वैश्वदेवाख्यामित्यत्रापि पार्वणोत्तरकालता वैश्वदेवे विधीयते। यदि सोमपूर्वकालता दर्शपूर्णमासयोः वैश्वदेवपूर्वकालता वा पार्वणस्य विधेयता तदा सौर्यादिविकृतिष्वपि[४१] इत्युत्तरकालता च सोमस्य वैश्वदेवस्य स्यात्।**

---

४०। वैश्वदेवस्य पार्वणश्राद्धोत्तरकालविधेयत्वेन प्रकरणान्तरन्यायेन च कर्मभेदे स्वीकारे

ततस्तु वैश्वदेवाख्यां कुर्यान्नित्यक्रियां बुधः। (३-१५-४६)

इति विष्णुपुराणवचनात् नित्यकर्मत्वेन प्राप्तस्य वैश्वदेवस्य अप्राप्तिरिति दुःखम्। अतस्तद्धानाय न्यायो वितन्यते कृतार्थयोः सम्बन्धः कालार्थ इति। अर्थो नाम अनुष्ठानम् कृतौ अर्थौ अनुष्ठाने ययोस्तयोः कृतार्थयोः एककालवर्त्तित्वे सति सम्बन्धित्वम्। अन्यथा मिथो भेदात् कर्मान्तरम्। अत एककालसम्पाद्ययोः कर्मणोः सम्बन्धः संगतः इति धिया दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेतेति न्यायमवतारयति। अनुष्ठापयित्वा दर्शपूर्णमासयोः प्रथमानुष्ठानम्। क्त्वाप्रत्ययेन आनन्तर्यविज्ञप्त्या सोमस्य अनन्तरमनुष्ठेयत्वे दर्शपूर्णमाससोमयागेषु पौर्वापर्यभावो यथा तथा पार्वणश्राद्धवैश्वदेवयोरर्थात् पार्वणश्राद्धं निर्वर्त्य वैश्वदेवः करणीय इति।

४१। विकृतिष्वपि एवं भवति। तदुक्तं मी० न्या० प्र० (पृ० १३७) यथा—विकृतौ तु न प्रकरणं संभवति। यत्र न समग्रांगोपदेशः सा विकृतिः। यथा सोमादिः इति। एतद् व्याख्यानं तत्प्रभाख्यटीकायां यथा—

विकृतियागे फलभावनायाः कथंभावाकांक्षा वर्तते। तत्र पठितानि यानि क्रियारूपाण्यंगानि तेषां क्रियारूपत्वेन कथंभावाकांक्षानिवर्तनसामर्थ्यं न वर्तते। किन्तु प्रकरणपठितानां तादृशानामंगानां फलभावनायां संबन्धं विनापि प्रकृतिगतानामंगानामतिदेशेन प्राप्तिसत्त्वात्तेन च कथंभावाकांक्षायास्तत्रोपरमो भवति, न तु प्रकरणप्रमाणेनेति भावः। सौर्यादिरिति। सौर्यं चरुं निर्वपेत् ब्रह्मवर्चसकामः (मै० सं० २-२-२) इत्येवं सौर्ययागो विधीयते। स च दर्शपूर्णमासान्तर्गताग्नेययागस्य विकृतिभूतः। औषधद्रव्यत्वेनैकदैवत्यत्वेन च साजात्यात् इति। प्रकृते तु सोमस्य उत्तरकालता (सौर्यादियागे) इति तात्पर्यम् इति।

न त्वेवम्[४२]। सोमेन यजेत, वैश्वदेवाख्यां कुर्यादिति सोमवैश्वदेवयोरेव कालविधानात्। एवं तदन्ते सोममाहुतिरित्यत्रापि नित्यसायमाहुतेरेव नित्यसौत्याहनि कर्तव्यप्रयोगविशेषे सोमयागोत्तरकालतांगम्। नित्या वा प्रातराहुतिरितिश्रुतेः इति कात्यायनवचनात् कृतार्थयोः सम्बन्धः कालार्थः इति न्यायात्। एवं[४३] च एकाहादीन् सगोत्रेषु सर्वेष्वपि तदन्ते सायमाहुतिः सर्वपार्वणश्राद्धेषु पश्चाद् वैश्वदेवः। एकोद्दिष्टेषु पूर्वमिति। एवं च सति तत्र प्रत्येकमग्निं विभज्य यजमानानां पृथक् सायमाहुतिवत् पितृमातृसपिण्डनोत्तरं सोदरैर्भ्रातृभिः स्वीयावस्थ्येषु प्रत्येकमेव वैश्वदेवः कार्यः। यथा[४४] सौभिरेककरणेषु स्वर्गादि-

---

४२। दर्शपूर्णमासानन्तरकर्तव्यत्वं सोमयागस्य, पार्वणश्राद्धोत्तरकर्तव्यत्वं वा वैश्वदेवस्येति नात्र विवक्षाधीनम्। किन्तु सोमयागवैश्वदेवयोः कालविधानमात्रम्। सायमाहुतेर्नित्यत्वे तस्याश्च नित्यसौत्याहनि कर्तव्यत्वे, यस्मिन् दिने सोमयागो विहितः तस्मिन् दिने सोमयागादुत्तरकालः सायमाहुतेः कालः। अतः सोमयागोत्तरकालता तदंगम्।

४३। सपिण्डनोत्तरं वैश्वदेवः। एकोद्दिष्टश्राद्धे पूर्वं भवति। बहुभ्रातृकपरिवारे पृथक्पाके सति पार्वणश्राद्धे निवृत्ते स्वस्व-अग्निं स्वीकृत्य वैश्वदेवः कर्तव्यो यथा पृथक् अग्निसेवा क्रियते।

४४। पितृमातृसपिण्डनं बहुभ्रातृकपृथक्परिवारेऽपि एकेन कर्तव्यम्। किन्तु विभागानन्तरं वैश्वदेवः पृथक् कार्यः। अस्य अनन्तरकरणस्य कर्मप्रयोगत्वं विभागस्य कामनाचोदितत्वात्। एतत् वैदिकोदाहरणेन तोलयति ग्रन्थकारः सौभरैककरणेष्विति। तत्रायं विषयो यत्—यो वृष्टिकामो योऽन्नाद्यकामो यः स्वर्गकामः स सौभरेण स्तुवीत, सर्वे वै कामाः सौभरे इति। एतदुक्तौ अनन्तरमुच्यते—हीषिति वृष्टिकामाय निधनं कुर्यात्, ऊर्गित्यन्नाद्यकामाय, ऊ इति स्वर्गकामाय इति। सौभरं नाम सामविशेषः। निधनं नाम पंचभिः सप्तभिर्वा भागैरुपेतस्य साम्नोऽन्तिमो भागः। अत्र सौभरं सामान्यम्। निधनं न ततो भिन्नमपि तु तस्य व्यवस्था अनेन सम्पाद्यते। प्रकृते तु वैश्वदेवस्य या पार्वणश्राद्धोत्तरकालता प्राप्ता, सा बहुभ्रातृकपृथक्परिवारेषु पितुः सपिण्डनानन्तरं बहुसोदरभ्रातृकर्तृकप्रत्येकवैश्वदेवकार्यतायां प्रत्यभिज्ञायते। अपि च पार्वणश्राद्धोत्तरकालता अत्रानूद्यते यथा सौभरविधौ यो वृष्ट्यादिकामः स एव हीषादिविधौ प्रत्यभिज्ञायते, सौभरस्य फलभूता ये वृष्ट्यादयः, त एव हीषादिवाक्येषु अनूद्यन्ते।

**कामप्रयोगेषु ह्रीषादिनिधनान्तं न पारि[४५]प्लवत्वम् । एवं[४६] पार्वणोत्तरकालत्वं वैश्वदेवप्रयोगविशेष एव न सर्वत्रेति निपुणमतिभिर्विभावनीयम् ।**

---

तदिदमधिकरणं जैमिनीये सौभरे पुरुषश्रुतेर्निधने कामसंयोगः । सर्वस्य वोक्तकामत्वात्तस्मिन् कामश्रुतिः स्यात् निधनार्था पुनः श्रुतिः (२।२।२८-२९) इति सूत्रद्वये विचारितम् ।

अत्राहुः सिद्धान्ते भाष्यकाराः—वृष्टिकामाय सौभरमस्त्येव । सौभरस्य निधनप्राप्तिरस्त्येव । तत्र ह्रीषिति कुर्यादित्येष एवार्थो विधीयते । तस्माद् वाक्यभेद इति । अतो निधनव्यवस्थेति गम्यते । एवमेव ऊगिति, ऊ इति च वदितव्यम् । सर्वस्य सौभरस्य ऊग् वृष्टिस्वर्गकामत्वाच्छक्यते कामवचनैः सौभरं लक्षयितुम् । किमर्थं लक्ष्यत इति निधनार्था पुनः श्रुतिर्निधनव्यवस्थां करिष्यतीत्यर्थः ।

सिद्धान्ततन्त्रवार्तिके कुमारिलश्रीचरणा यथा—अत एकदेशनियमे सति कांस्यभोजिन्यायेन समस्तनियमः । एषोऽपि चात्र वाक्यार्थः संभवति । उभयोः प्राप्तयोः सम्बन्धमात्रं विधीयते । यद् वृष्टिकामाय सौभरं यच्च ह्रीषीत्येवं निधनं तदेकत्र संपादनीयमिति । तस्मात् समस्तगीतिनियम इति सिद्धम् इति ।

जैमिनीयन्यायमालायां च माधवाचार्याः—

वृष्टयन्नस्वर्गकामानां सौभरं स्तोत्रमीरितम् ।
निधनान्यपि ह्रीषूर्गू इति वृष्टयादिकामिनाम् ।।
फलान्तरं किं वृष्टयादि ह्रीषादीनामुतोदिते ।
सौभिरे फलसंभिन्ने निधनं विनियम्यते ।।
फलान्तरं चतुर्थोक्ति वृष्टिकामाय ह्रीषिति ।
सौभरस्य फलं वृष्टिह्रीषित्युक्त्वा विवर्धते ।।
नोक्तवृष्टयन्नकामानामन्यत्वं प्रत्यभिज्ञया ।
नियमेऽपि चतुर्थ्येषा तादर्थ्यादुपपद्यते ।। इति ।

अत्र सिद्धान्तविस्तरो यथा—फलत्रयकामाणां त्रयाणामनियमेनैव ह्रीषादिषु मध्ये यस्य कस्यचिन्निधनस्य प्राप्तौ विधेर्नियमार्थत्वात् । तादर्थ्यं तु फलान्तराभावेऽपि सौभरवाक्योक्तवृष्टयादिफलसाधने सौभरे ह्रीषादीनां नियम्यमानत्वादुपपद्यते । तस्मात् अयं निधनविशेषनियमविधिरिति ।

४५ । पारिप्लवत्वं नाम पाक्षिकत्वम् ।

४६ । पितृश्राद्धस्य रक्षकत्वेन विश्वेदेवानामुक्तत्वात् रक्ष्यरक्षकयो रक्ष्यस्य

यत्तु—

अकृत्वा पैतृकं श्राद्धं वैश्वदेवं न होमयेत् ।
देवोच्छिष्टं भवेच्छ्राद्धं पितृणां नोपतिष्ठति ॥

इति तत्कल्पतरावलिखितत्वादनाकरम् । साकरत्वेऽपि पार्वणपरमेव पितृणामिति बहुवचननिर्देशात् । मदनपारिजातके तु लोपाक्षिः—

पित्रर्थं[४७] निर्वपेत् पाकं वैश्वदेवार्थमेव च ।
वैश्वदेवं न पित्रर्थं न दार्शं वैश्वदेविकम् ॥ इति ।

पैठीनसिः—

पितृपाकात् समुद्धृत्य वैश्वदेवं करोति यः ।
आसुरं तद् भवेच्छ्राद्धं पितृणां नोपतिष्ठते ॥
श्राद्धं निर्वर्त्य विधिवत् वैश्वदेवादिकं ततः ।
कुर्याद् भिक्षां ततो दद्यात् हन्तकारादिकं तथा ॥

इति । अत्र लोपाक्षिवचनेन पृथग्विधानात् पैठीनसिवचनेन श्राद्धशेषान्नेन तद्विधानात् श्राद्धात्पूर्वं मध्ये वा वैश्वदेवकरणे पृथक् पाकः । अनन्तरकरणे तत्पाकेनैव इति व्यवस्थोक्ता । लौगाक्षिः[४८]—

पक्षान्तं कर्म निर्वर्त्य वैश्वदेवं च साग्निकः ।
पितृयज्ञं ततः कुर्यात् ततोऽन्वाहार्यकं बुधः ॥

---

मुख्यत्वेन रक्षकस्य गुणत्वे विश्वेदेवोद्देश्यकपाकात् पितृभ्यो दानमसमीचीनम् इति अकृत्वेति वचनस्य आशयः ।

४७ । ग्रन्थकारोऽत्र स्ववैचारिकवैदुष्येन लोपाक्षिपैठानसिवचने व्यवस्थापयति । लोपाक्षिदिशा श्राद्धे पाकद्वयमावश्यकम् । एकं पितृनिमित्तमपरं विश्वेदेवार्थमिति । पैठीनसिवचनेऽन्वय इत्थम्—श्राद्धं विधिवत् निर्वर्त्य ततो वैश्वदेवादिकं कुर्यात्, ततो भिक्षां दद्यात् तथा हन्तकारादिकमिति । ततो वैश्वदेवादिकं कुर्यात् इत्यत्र तत इति पदे आनन्तर्यं पंचम्यन्तार्थता च बोध्यते सोमेन यजेतेति वाक्ये सोमपदे गुणस्य यागस्य च विधानवत् । अतः आनन्तर्यपक्षे प्रथमतः पार्वणश्राद्धम् । ततः पार्वणश्राद्धानन्तरं वैश्वदेव इति । पंचम्यन्तार्थतापक्षे यदा पार्वणश्राद्धानन्तरं वैश्वदेवः क्रियते तदा वैश्वदेवनिमित्तं पृथक् पाको न भवति । ततः नाम तस्मात् पितृद्देश्यकपाकात् अवशिष्टेन ओदनेन वैश्वदेवः करणीयः इति सारः ।

४८ । पक्षान्तं कर्मेति लौगाक्षिवचनम्, अकृते वैश्वदेवे इति देवलवचनं,

अन्वाहार्यकं दर्शश्राद्धम् । अत्र दर्शान्तपितृयज्ञेनैव साग्निकप्राप्तौ साग्निक-पदम् औपासनाग्निनिवृत्यर्थम् । देवलः —

अकृते वैश्वदेवे तु स्थालीपाकः प्रकीर्तितः ।
अन्यत्र पितृयज्ञस्तु सोऽपराह्णे विधीयते ।।

स्थालीपाकः पक्षाद्याग्रायणचरुः । अतः त्रेताग्नेः श्राद्धात् पूर्वमेव एकाग्नेः निरग्निकस्य श्राद्धानन्तरमिति । तच्चिन्त्यम् । देवलवचने स्थालीपाकसहवाचने पितृयज्ञस्य स्मार्तपितृयज्ञविषयत्वेन स्मार्तैरेव पितृयज्ञपूर्वकालतायाः वैश्वदेव-विधानम् । अतो लौगाक्षिवचने साग्निकपदमात्रमनुवादमात्रम् । यत्तु परि-शिष्टवचने—

सम्प्राप्ते पार्वणश्राद्धे एकोद्दिष्टे तथैव च ।
अग्रतो वैश्वदेवः स्यात् पश्चादेकादशेऽहनि ।।

इति छन्दोगविषयं, ततस्तु वैश्वदेवाख्यामिति वचनविरोधादिति ।—एवं

श्राद्धे प्रागेव कुर्वीत वैश्वदेवं तु साग्निकः ।
एकादशाहिकं मुक्त्वा तत्र ह्यन्ते विधीयते ।।

इति वचनं तत्षट्त्रिंशन्मतगौतमवचनविरोधात् पूर्वोक्तव्यवस्थापरमेव । तथा च वृद्धगौतमः—

पितृश्राद्धमकृत्वा तु वैश्वदेवं करोति यः ।
अकृतं तद् भवेच्छ्राद्धं पितॄणां नोपतिष्ठते ।।

षट्त्रिंशन्मते—

प्रातिवासरिको होमः श्राद्धादौ क्रियते यदि ।
देवा हव्यं न गृह्णन्ति कव्यानि पितरस्तथा ।।

यत्तु परिशिष्टवचनं—

वैश्वदेवमकृत्वैव श्राद्धं कुर्यादनग्निकः ।
लौकिकेऽग्नौ हुते शेषः पितॄणां नोपतिष्ठते ।

---

सम्प्राप्ते पार्वणश्राद्धे इति परिशिष्टवचनं च साग्निकवैश्वदेवक्रमपरम् । तत्पुनः सामवेदिनाम् । तेषां श्राद्धात् पूर्वं वैश्वदेवः एकदशाहश्राद्धादृते । पितृश्राद्धम-कृत्वेति वृद्धगौतमवचनम्, प्रातिवासरिको होम इति षट्त्रिंशन्मतवचनं, वैश्वदेव-मकृत्वेति पारिशिष्टवचनं, वैश्वदेवाहुतीरिति ब्रह्माण्डपुराणवचनम्, पितॄन् सन्तर्प्य इति भविष्यपुराणवचनं च निखिलं वैश्वदेवस्य श्राद्धपरवर्तिविषयित्वं सूचयति । सिद्धान्तस्तु शुक्लयजुर्वेदिनां पार्वणश्राद्धानन्तरमेव वैश्वदेवविधान-मिति ।

इति तदपि पूर्वोक्तव्यवस्थार्थम् । तत्तु—

वैश्वदेवाहुतीरग्नावर्वाक् ब्राह्मणभोजनात् ।
जुहुयाद् भूतयज्ञादि श्राद्धं कृत्वा ततः स्मृतम् ।

इति ब्रह्माण्डपुराणवचनम् ।

पितॄन् सन्तर्प्य विधिवत् बलिं दत्त्वा विधानतः ।
वैश्वदेवं ततः कुर्यात् पश्चाद् ब्राह्मणभोजनम् ॥ (मनुः ३-२६५)
उच्छेषणं तु तत्तिष्ठेत् यावद् विप्राः विसर्जिताः ।
वैश्वदेवं ततः कुर्यात् निवृत्ते पितृकर्मणि ॥
ततो गृहबलिं कुर्यादिति धर्मो व्यवस्थितः ॥

इति भविष्य-मत्स्यपुराण-मनुवचनविरोधात् शाखाभेदव्यवस्थितम् । एवं च वाजसनेयिनां पार्वणश्राद्धानन्तरमेव वैश्वदेव इति सिद्धम् ।

अथ सपिण्डीकरणक्रमः

चत्वा[४६]र्युदपात्राणि । त्रीणि पितॄणाम् । एकं प्रेतस्येति गोभिलवचनेन पाठक्रमात् क्रम इति शूलपाणिः । अनिरुद्धभट्टोऽपीत्थमेवाह । तदसंगतम् । चत्वार्युदपात्राणि एकं प्रेतस्य त्रीणीतरेषाम् । प्रथमं पात्रं त्रिषु पात्रेषु नियोजयदिति आश्वलायनगृह्यवचनेन तेनैव दर्शितेन पात्रस्य प्रथमावगतेः बषट्कर्तुः प्रथमभक्षवत् । क्रमकोपाधिकरणे श्रुत्यर्थाभ्यां पाठस्य दुर्बलत्वनिर्णयात् । गोभिलवचनस्य विधानेनैव चरितार्थत्वात् क्रमपर्यन्तव्यापाराभावात् । आश्वलायनवचनस्य प्रथमपदसद्भावेन क्रमविधिपरत्वात् । अत एव ब्राह्मणपाठक्रमापेक्षया अनन्यप्रयोजनस्य मन्त्रक्रमस्य बलवत्त्वमित्युक्तं क्रमकोपाधिकरणे । एवं संवत्सरान्ते प्रेताय तत्पित्रे तत्पितामहाय तत्प्रपितामहाय च ब्राह्मणान् दैवपूर्वान् भोजयेत् (२१-१२) इति विष्णुवचनात् दैवतन्त्रतानिवृत्तिः । अन्यथा अतिदेशप्राप्तेन "तेषु रक्षा यतः स्थिता" इति एवंविधहेतुमन्निगदसहितवचनेनैव दैवपूर्वताप्राप्तेः विधेयान्तराभावात् । तत्र विनिवृत्तिमात्रस्यैव प्रयोजनत्वात् । प्रागेव दैवेऽर्घ्यमन्नाद्यं च दत्त्वा अन्यानर्चयेदिति वचनात् न पित्र्यर्घ्यादिभिः वैश्वदेवार्घ्यादिः पदार्थानुसमयः । किन्तु काण्डानुसमय एव । अतः प्रकर्षेण इतश्चीरप्रमीत इति वृद्धप्रपितामहं प्रेतं केचिद् गौडा वदन्ति । यथा—

स्वपितृभ्यः पिता दद्यात् सुतसंस्कारकर्मसु ।
पिण्डानुद्वहनात्तेषां तस्याभावेऽपि तत्क्रमात् ॥

---

४६ । एतत् प्राक् स्पष्टीकृतम् ।

अत्र— कन्यापुत्रविवाहेषु प्रवेशे नववेश्मनः ।

(८-१८-५) इति विष्णुपुराणवचनात् आङोऽभिविध्यर्थता । सुतसंस्कारकर्मस्विति वचनात् संस्काररूपप्रथमविवाहे एव पुत्रस्य पिता दद्यात् द्वितीयादिविवाहेषु सुतः स्वयमेव । तथा विष्णुपुराण (३-१०-४)—

जातस्य जातकर्मादिक्रियाकाण्डमशेषतः ।
पिता कुर्वीत पुत्रस्य श्राद्धं चाभ्युदयात्मकम् ।।

स्मृत्याम्—

अत ऊर्ध्वं सुतः कुर्यात् स्वयमेव तु नान्दिकम् ।

अतोऽपि प्रथमविवाह एव पित्रा दद्यात् । एवं स्वशब्दः सुतमातामहादिव्यवच्छेदार्थः । तस्य पितुरभावे तत्क्रमात् संस्कार्यपुत्रदुहित्रादिक्रमात् । अतएव—

भ्राता वा भ्रातृपुत्रो वा सपिण्डः शिष्य एव वा ।
सहपिण्डक्रियां कृत्वा कुर्यादभ्युदयं ततः ।।

इति वचने भ्रात्रादेः कन्याप्रदत्वे उपनयनकर्तृत्वे विवाहोपनयनाद्यर्थं संस्कार्यकन्यापुत्रादिपितृमातृसपिण्डीकरणं कृत्वा संस्कार्यपित्रादिभ्यो दद्यादाभ्युदयिकश्राद्धमिति गम्यते । तस्मात् पितुरुपरमे संस्कार्यपित्रादिभ्य एव आभ्युदयिकम् इति सिद्धम् ।
कात्यायनः —

सपितुः प्रेतकृत्येषु अधिकारो न विद्यते ।
न जीवन्तमतिक्रम्य किंचिद्दद्यादिति श्रुतिः ।।

जीवत्पितृकस्य होमान्तमनारम्भो वा इदं च पितृयज्ञेऽभिहितम् । मनुः —

न जीवत्पितृकः कुर्यात् श्राद्धमग्निमृते द्विजः ।
येभ्य एव पिता दद्यात् तेभ्यः कुर्वीत साग्निकः ।।
पितामहेष्वेवमेव कुर्याज्जीवति साग्निकः ।
साग्निकोऽपि न कुर्वीत जीवति प्रपितामहे ।।

अतः साग्नेर्निरग्नेश्च पितामहप्रपितामहमातामहेषु जीवत्सु च न नान्दीमुखश्राद्धम् । मातृपूजामात्रमेव केवलमिति । [50]कात्यायनः —

---

५० । मनोः भावं गृहीत्वा कात्यायनेनैवमुक्तम् । मुद्रितमनुस्मृतौ तद्भावबोधकवचनम् इत्थम् ( ३-२२१-२२२ )—

पिता यस्य निवृत्तः स्यात् जीवेच्चापि पितामहः ।
पितुः स नाम संकीर्त्य कीर्तयेत् प्रपितामहम् ।।

पिता यस्य तु वृत्तः स्यात् जीवेद् वापि पितामहः ।
पितुः स नाम संकीर्त्य कीर्त्तयेत् प्रपितामहम् ।।
पितामहो वा तच्छ्राद्धं भुंजीतेति विनिश्चयः ।।

अतस्तं वर्जयित्वा वृद्धप्रपितामहं प्रवेश्य श्राद्धम् इति श्राद्धप्रदीपे क्रमलोकः ।।

—०—

---

पितामहो वा तच्छ्राद्धं भुंजीतेत्यब्रवीन्मनुः ।
कामं वा समनुज्ञातः स्वयमेव समाचरेत् ।।

इति विप्रमिश्रकृत-श्राद्धप्रदीपस्य क्रमालोके श्रीव्रजकिशोरस्वाईकृता रश्मिटिप्पणी समाप्ता ।।

# अतिदेशालोकः

**अथ अतिदेशविचारः । तत्र इदमित्थं [1]कर्त्तव्यमित्युपदेशः । तद्वदिदं कर्तव्यमित्यतिदेशः । तत्र यद्यपि [2]पारस्करगृह्ये अपरपक्षश्राद्ध एव सकलधर्माम्नानात्**

---

१ । अतिदेश उपदेशसापेक्षः । उपदेशो नाम विधिश्चोदना वा । तदुक्तं श्लोकवार्तिके भट्टैः (१-१-५ सूत्रस्य वार्तिके)—

सर्वस्यानुपलब्धेऽर्थे प्रामाण्यं स्मृतिरन्यथा ।
चोदना चोपदेशश्च विधिश्चैकार्थवाचिनः ।।

इति । जैमिनीयेऽतिदेशसम्बन्धसूत्रं यथा—(७-१-१२) अर्थस्य शब्दभाव्यत्वात् प्रकरणनिबन्धनाच्छब्दादेवान्यत्र भावः स्यात् इति ।

अत्राहुर्भाष्यकाराः—इदं निगमनसूत्रम् । निगमनं च प्रतिज्ञाया हेतोश्च पुनर्वचनम् । तदिदमुच्यते । यस्मादेवं तस्मादर्थस्य अग्न्यन्वाधानादेः शब्दभाव्यत्वात्, प्रतिप्रकरणं च निबन्धनाच्छब्दादेवान्यत्र भावः स्यात् । यथा गन्धर्वाप्सरसो वा एतन्मुन्मादयन्ति य उन्माद्यत्येता वै गन्धर्वाप्सरसो यद्राष्ट्रभृतम् । तस्मै स्वाहा ताभ्यः स्वाहेति जुहोतीति, अग्निप्रकरण उत्पन्नानां राष्ट्रभृतामुद्वाहे उपदेशः । एतेषां राष्ट्रभृतो जुहोत्यमात्यानां जुहोतीति । असत्येतस्मिन् वचने यथाधिकारं व्यवतिष्ठेरन् धर्मा इति । एवं च सति अधर्मकाण्यैन्द्राग्नादीनि । तदर्थमुत्तरोऽध्यायषट्कः प्रारब्धव्य इति ।

तत्र सप्तमेन तावदैन्द्राग्नादीनां कर्मणां धर्माः सन्तीत्युच्यते । ते चातिदेशेनेति ।

भाष्यकारा अप्याहुः—अतिदेशो नाम ये परत्र विहिता धर्मास्तमतीत्यान्यत्र तेषां देशः । यथा—देवदत्तस्य भोजनविधिं कृत्वा शालिसूपमांसापूपैर्देवदत्तो भोजयितव्य इति तमेव विधिं यज्ञदत्तेऽतिदिशति, देवदत्तवत् यज्ञदत्तो भोजयितव्य इति श्लोकमप्युदाहरन्ति—

प्रकृतात्कर्मणो यस्मात् तत्समानेषु कर्मसु ।
धर्मप्रदेशो येन स्यात् सोऽतिदेश इति स्थितिः ।।

इति । स च नाम्ना वचनेन वा । तत्र नाम त्रिविधमातिदेशिकं, कर्मनाम, संस्कारनाम, यौगिकमिति । वचनं पुनर्द्विविधं, प्रत्यक्षश्रुतमानुमानिकं च इति । (७-१-१२)

**प्रकृतिः, मनुना[3] तु अमावास्याश्राद्ध एव सर्वधर्माम्नानात् तदेव प्रकृतिभूतम् ।**

---

तन्त्रवार्तिके तु विशेषः । यथा—त्रिविधं नामधेयम् । कर्मनामधेयं, संस्कारनामधेयं, यौगिकं चेति । तत्र यौगिकं नातिदेशिकम् । कथम् । येनैव योगेन द्वादशाहे प्रायणीयशब्दस्तेनैव गवामयनेऽपीति ।

जैमिनीयन्यायमालायां चोपदेशातिदेशयोः स्वरूपं स्पष्टीकृतम् । यथा—

प्रमाणाद्यधिकारान्तैः षड्विचारैर्निरूप्यते ।
उपदेशोऽतिदेशोऽथ तत्सापेक्षो निरस्यते ।।

इति । तत्र विस्तरो यथा—अनेन षष्ठसप्तमयोरध्याययोः पूर्वोत्तरभाव उपपादितः । तथा हि—यत्रापेक्षितस्यार्तजातस्य प्रतिपादको ग्रन्थसन्दर्भः पठ्यते, स उपदेशः । अतिदेशस्तु पूर्वाचार्यैर्दर्शितः—

अन्यत्रैव प्रणीतायाः कृत्स्नायाः धर्मसन्ततेः ।
अन्यत्र कार्यतः प्राप्तिरतिदेशोऽभिधीयते ।। इति ।
प्राकृतात् कर्मणो यस्मात् तत्समानेषु कर्मसु ।
धर्मोपदेशो येन स्यात् सोऽतिदेश इति स्मृतः ।। इति ।

तन्त्रसिद्धान्तरत्नावल्यामपि (पृ० १२९) यथा—यः पदार्थो यादृशोपकारद्वारा यदंगत्वेनावधारितस्तस्य तदाऽर्थस्य तादृशोपकारद्वारा अन्यांगताबोधकं प्रमाणमतिदेश इति नव्याः । अस्ति हि इदं लक्षणम्, एतद्-ब्राह्मणान्येव पंच हवींषि इत्यादिप्रत्यक्षवचनातिदेशे, प्रकृतिवत् विकृतिः कर्तव्या, सौर्ययोगन ब्रह्मचर्यस्वरूपं फलं भावयेदाग्नेयवत् इत्याद्यनुमितवचनातिदेशे च ।

२ । अपरपक्षे श्राद्धं कुर्वीतोर्ध्वं वा चतुर्थ्या यदहः सम्पद्येत इत्युपक्रम्य अपरपक्षश्राद्धस्य सम्पूर्णो विधिर्विप्रामन्त्रणविसर्जनान्त आचार्येण प्रदर्शितः । अत एव अपरपक्षश्राद्धमेव पारस्करगृह्यसूत्रे प्रकृतिरित्युक्तम् ।

३ । मनुना—पितृयज्ञं तु निर्वर्त्य विप्रश्चेन्दुक्षयेऽग्निमान् ।
पिण्डान्वाहार्यकं श्राद्धं कुर्यान् मासानुमासिकम् ।।
(३-१२२)

इत्यारभ्य निमन्त्यानिमन्त्यदेयादेयादिसहितं निखिलं श्राद्धविधिमुक्त्वा—

यत् किंचिन्मधुना मिश्रं प्रदद्यात्तु त्रयोदशीम् । (३-२७३)

इत्यादिना श्राद्धान्तरं प्रदर्शितम् । अतस्तन्मते अमावास्याश्राद्धं प्रकृतिः, मघा–त्रयोदशीश्राद्धादि तु विकृतिः इति ।

**तथापि शाखाभेदव्यवस्थितमेव प्रकृतिविकारभावमाश्रयाम इति न [४]काचिदनुपपत्तिः। प्रयोजनं तु गुणकामनाप्रवृत्तिरिति। तत्तु नित्यश्राद्धे[५]—**

**नित्यश्राद्धमदैवं स्यादर्घ्यपिण्डविवर्जितम्।**

**इत्यर्घ्यादिनिषेधानुपपत्त्या पार्वणधर्मातिदेशः। [६]अप्रयाजास्ता अननुयाजास्ता इति निषेधानुपपत्त्या दीक्षणीयादिषु दर्शपौर्णमासधर्मातिदेशवत्।**

---

४। मनुपारस्करयोः श्राद्धविषये प्रकृतिविकृतिप्रदर्शने सत्यपि भेदे प्रयोगविधौ विरोधाभावात् न काचिदनुपपत्तिः।

५। नित्यश्राद्धमदैवं स्वादिति आरभ्य ग्रन्थकारः शूलपाणिमतं पूर्वपक्षत्वेनोपन्यस्यति। मुद्रितशूलपाणौ त्वेवं पाठो यथा— हारीतः—

नित्यश्राद्धमदैवं स्यादर्घ्यपिण्डविवर्जितम्।

मत्स्यपुराणे—

नित्यं चैव प्रवक्ष्यामि अर्घ्यावाहनवर्जितम्।
अदैवं तद् विजानीयाद् पार्वणं पर्वसु स्मृतम्॥

अर्घ्यादिनिषेधानुपपत्त्या पार्वणधर्मातिदेशः। अप्रजास्त इति निषेधानुपपत्त्या दीक्षणीयादिषु दर्शपूर्णमासधर्मातिदेशवत्। नित्यश्राद्धं पिण्डहोमविवर्जितमिति लिखितजातूकर्ण्यवचनादग्नौकरणहोमनिषेध इति वदन्ति। होमबाधे हुतशेषांगत्वात् पात्रालंभनबाधः आशीःप्रार्थनबाधस्तु चिन्तनीयः (पृ० ४८८-८९) इति।

अत्र शूलपाणेरयमाशयो यत्—सर्वासामिष्टीनां दर्शपूर्णमासः प्रकृतिः। दीक्षणीयाया इष्टित्वात् तत्र दर्शपूर्णमासधर्मा अतिदिश्यन्ते। प्रयाजानुयाजयोः दर्शपूर्णमासांगत्वेन दर्शपूर्णमासधर्माणां दीक्षणीयायामतिदेष्टव्यत्वे अप्रयाजा सा इति विशेषवचनेन तयोर्निषेधप्रकारो यथा तथा दर्शश्राद्धधर्माणां निखिलश्राद्धेषु अतिदेष्टव्यत्वे पिण्डहोमविवर्जितम् इति विशेषवचनेन होमपिण्डदानादीनां निषेधः। होमो नाम अग्नौकरणम्। होमबाधे हुतशेषांगपात्रस्य स्वीकारोऽपि बाध्यते इति एवम्।

६। दीक्षणीयेष्टिः दर्शपूर्णमासेष्टेः विकृतिः। अतः चोदकेन दर्शपूर्णमासधर्मा दीक्षणीयादिषु प्राप्यन्ते। किन्तु अयमेव तत्र विशेषो यत् दर्शपूर्णमासांगत्वेन विहितयोः प्रयाजानुयाजयोः दीक्षणीयादिषु प्राप्तिर्न भवति अप्रयाजास्ताः अननुयाजास्ताः इति बाधकवचनसत्त्वात्। तद्वत् नित्यश्राद्धे—

नित्यश्राद्धमदैवं स्यादर्घ्यपिण्डविवर्जितम्।

नित्यश्राद्धमदैवं स्यादर्घ्यपिण्डविवर्जितम् ।

इति जातूकर्ण्यवचनात् अग्नौ[७]करणबाधे हुतशेषांगक[८]पात्रालम्भनबाध इति शूलपाणिः । तदसंगतम्[९]—

अब्तिलैः पाणिनैवार्घ्यो देयोत्सर्गः क्षयस्तथा ।
स्वधावाचनमित्येतत् नित्यश्राद्धे चतुष्टयम् ॥
ब्रह्मचारी भवेच्छ्राद्धे मुक्त्वा श्राद्धं तु नैत्यकम् ।

इत्यादिवचनैः गृहमेधीयाज्यभागौ यजत[१०] इतिवदपूर्वत्वात् नित्यश्राद्धस्य ।

---

इति विशेषबाधकवचने अदैवपदेन वैश्वदेवाभावः, अर्घ्यपिण्डपदेन पिण्डमर्घ्यं च बाधितं भवति इति समन्वयः ।

७ । श्राद्धे पिण्डदानार्थं पिण्डः निर्मीयते । स तु ओदनमयः पाकेन निष्पाद्यते । पाकस्तु अग्निव्यतिरेकेण असम्भवात् पिण्डाभावपरकवचनेन अग्निसत्त्वाभावात् अग्नौकरणं न भवति ।

८ । अग्नौकरणानन्तरं हुतशेषस्य अर्थात् हुतावशेषभागं गृहीत्वा पात्रालंभनपूर्वकजपविधानमभ्युपगतमस्ति । अग्नौकरणानन्तरमेतस्य सम्बन्धित्वसद्भावात् तदभावात्तदभाव इति व्यतिरेक इति शूलपाणेराशयः ।

९ । तदसंगतमिति शूलपाणिसिद्धान्तरूपं पूर्वपक्षं दूषयति ग्रन्थकारः ।

१० । गृहमेधीयाज्यभागौ यजते इति वाक्यमाधृत्य जैमिनीयदशमाध्याये २४ सूत्रात् ३३ सूत्रपर्यन्तमेतदधिकरणमालोचितम् । तत्रायं विषयो यथा—गृहमेधीयस्याज्यभागपुनः श्रवणेनापूर्वत्वप्रतिपादनम् । अत्रेदमादिमं सूत्रं यथा—विकृतौ प्राकृतस्य विधेर्ग्रहणात्पुनः श्रुतिरनर्थिका स्यात् (१०-७-२४) । अत्र भाष्यकारः शबरो यथा—चातुर्मास्येषु श्रूयते, मरुद्भ्यो गृहमेधिभ्यः सर्वासां दुग्धे सायमोदनमिति । तत्रेदं समामनन्ति, आज्यभागौ यजतीति । अत्र संशयः किं चोदकेन प्राप्तयोराज्यभागयोरनुवादमात्रमेतत्, किं वा चोदकेनानेन च द्वाभ्यामेकं कर्म चोद्यते, किं वा अर्थवादार्थं ग्रहणम्, उताधिकयोः कर्मान्तरयोरुत्पत्तिः, अथ परिसंख्यार्थम्, अथवा आज्यभागौ वर्जयित्वा अन्यचोदकः प्रापयति, अथवा चोदकेनाज्यभागावेव प्राप्येते, चोदक एव वा नास्ति, अपूर्वो गृहमेधीय इति । किं प्राप्तम् । विकृतावेतस्यां प्राकृतयोराज्यभागयोः प्राप्तयोर्गृह्यमाणयोः पुनः पार्वणमनर्थान्तरं स्यात् । अनुवादमात्रमेव सुहृद्भूत्वा चार्थम् उपदिशति स्म, नार्थान्तरशंकायां खेदितव्यं मनः । ज्ञातमेतदनुवादमात्रमेतदित्यन्यच्चिन्ता मिति ।

कथम्। तद्धि गम्यते। अन्यच्च नावगम्यत इति। यथास्मिन् गृहे ये ब्राह्मणास्त आनीयन्तां, देवदत्तो विष्णुमित्र इति भवन्ति लोकेऽनुवादमात्रस्य वक्तारः। एवमेतदपीति।

अनन्तरं सूत्रं यथा—अपि वाग्नेयवद् द्विशब्दत्वं स्यात् (१०-७-२५)। अत्र भाष्यं यथा—यदि ह्येतावदेवास्य सामर्थ्यं गम्यते, उदितमनुवदितुं, ततोऽस्य नान्योर्थः स्यात्। अथ त्वन्यदपि कर्तुमस्य सामर्थ्यमस्ति, ततः कथमर्थान्तरशंका न भवतीति। अस्ति च सामर्थ्यं, चोदकेनानेन च द्वाभ्यां संहत्यैकोऽर्थ उच्यते। गृहमेधीयो हि भवति प्रकृतिवत्। किं तत्सादृश्यम्। आज्यभागौ यजतीति। प्रकृताविदं श्रूयते, आज्यभागौ यजति। एवं प्राकृतेन यागेन स्वकार्यं करोतीति। इह पुनराज्यभागौ यजतीति स प्रकारोऽतिदिश्यते। एवमनेन प्रकारेण यागः स्वकार्यं करोति। यथा द्वाभ्या शब्दाभ्यामेकोऽर्थ उच्यते। आग्नेयवत्। अथवा ऽऽह्वाने—अग्निमग्नि आवह इति य एवं सम्बोध्यते स एवोच्यते आत्मानमावहति। यथा वा एष दण्डः दण्डेन प्रहरेति द्वाभ्यामेक एक एव दण्ड उच्यते। एवमिहापि प्राकृतौ आज्यभागौ यजतीति विकृतावपरेणाज्यभागवचनेन तद्वन्तं गृहमेधीयं करोतीति वाक्यं पूर्यते, न यागान्तरं चोद्यते। नापि चोदकप्राप्तस्यानुवादमात्रमिति इति।

अनन्तरं सूत्रं यथा—न वा शब्दः पृथक् स्यात् (१०-७-२६)। तत्र भाष्यं यथा—वा शब्दः पक्षं व्यावर्तयति। नैतदाग्नेयावाहनेन तुल्यम्। तत्र हि अग्ने आवहेत्येतावता वोढाग्निरुक्तः। अग्निमावहेत्येतावता वोढव्योऽग्निरुच्यते। न ताभ्यामेकोऽर्थः क्रियते। इह तु प्रकृतिवदित्येकेनैव वचनेनाज्यभागवत्तावद्गम्यते। पुनः, आज्यभागौ यजतीति कृतकरं शास्त्रमनर्थकं स्यात्। तस्मादनुवादमात्रमित्यध्यवसातव्यम्। नन्वनुवादोऽनर्थकः। नेत्युच्यते। अर्थवादार्थेन भविष्यति, आज्यभागौ यजति, यज्ञताया इति। यदेतत् प्रकृतिवत् करोति तथा कुर्वन् आज्यभागौ यक्ष्यति। तत्र यज्ञता सम्पत्स्यत इति।

अनन्तरं सूत्रं यथा—अधिकं वार्थवत्त्वात् स्यादर्थवादगुणाभावे वचनादविकारे तेषु हि तादर्थ्यं स्यादपूर्वत्वात् (१०-७-२७)। तत्र भाष्यं यथा—अथवा—अधिकयोः कर्मान्तरयोरुत्पत्तिः। नानुवाद इति, आज्यभागावत्र क्रियेते एवेति। किं तर्हि? उपदिश्यते यागावत्र कर्तव्याविति। कुतः? अनुवादमात्रं ह्यनर्थकम्। शब्दपृथक्त्वात् न द्वाभ्यामेकं कर्मोच्यते। अथ कस्मान्नार्थवादार्थता। गुणार्थता विकारार्थता वा भवतीति। उच्यते। अर्थवादासंकीर्तनान्नात्रार्थवादार्थता। नन्वत्र, यज्ञताया इत्यर्थवादः संकीर्त्यते। उच्यते। न

वाक्यान्तरेण विहितेऽर्थे वाक्यान्तरेणार्थवादेन किंचित्प्रयोजनमस्ति । तस्माद्यागान्तरविधानार्थम् एवायं नार्थवादः ।

ननु यागान्तरं नास्त्याज्यभागसंज्ञकम् । उच्यते । आज्यभागकर्मकं भविष्यति । नच गुणसंकीर्तनमस्ति । यथा—अप्सुमन्वावाज्यभागौ यजतीति । न चान्यो वचनप्रकारोस्ति । यथा, नाभ्यामाहुतिपुरस्ताज्जुहुयादिति । निन्दित्वा, सूत्रेणाघारमाघारयतीति वचनम् । तेषु हि सत्स्वेवमर्थवत्ता स्यात् । तस्मात्कार्यान्तरवचनम् । अपूर्वत्वात् । एवमपूर्वमर्थं करिष्यति । इतरथा न विशिष्टोत्पत्तिः स्यात् । किं पुनरत्र कर्मान्तरे लक्षणमिति । एकस्यैवं पुनः श्रुतिरविशेषादनर्थकं हि स्यादिति । अतः क्रमेण प्रधानयागादुपरिष्टादपरौ यागावाज्यभागधर्मकौ विधीयेते । अज्ञातौ ज्ञाप्येते इत्यर्थः ।

अनन्तरं सूत्रम्—प्रतिषेधः स्यादिति चेत् (१०-७-२८) । तत्र भाष्यम्-इति चेत्यक्ष्यसि, कर्मान्तरचोदनेति । तन्न तस्याज्यभागाविति नामसंकीर्तने सति, अनाज्यभागौ न शक्यौ प्रतिपादयितुम् । तद्धर्मकत्वे सति लक्षणाशब्दः । आज्यभागाविति च विशेषणस्याविवक्षा स्यात् । तस्मान्न कर्मान्तरवचनम् । किन्तु परिसंख्यया प्रतिषेधः स्यात् । यथा—पंच पंच नखा भक्ष्याः इति शशादीनां पंचानां कीर्तनादन्येषां भक्षणं प्रतिषिध्यत इत्ययमर्थो वाक्येन गम्यत इति । एवमिहाप्यन्येषामंगानां प्रतिषेधो भविष्यतीति ।

अनन्तरसूत्रं—नाश्रुतत्वम् (१०-७-२९) । तत्र भाष्यं—नैतदेवम् । न ह्यत्र प्रतिषेधवाचि किंचित्पदं श्रूयते । नार्थान्तरांगवचनम् । न चासंप्रतिपन्नपदार्थको वाक्यार्थः प्रमाणं भवति । पदार्थो हि वाक्यार्थस्य मूलं, नास्य पृथक् सिद्धिरस्तीति । तदुक्तं तद्भूतानां क्रियार्थेन समाम्नायोऽर्थस्य तन्निमित्तत्वात् इति । तस्मात् न प्रतिषेधः । तत्र हि त्रयो दोषाः—अस्वार्थग्रहणं, पदार्थकल्पना, प्राप्तबाधश्च । तस्मात् कर्मान्तरवचनमेतदिति इति ।

अनन्तरसूत्रं—अग्रहणादिति चेत् (१०-७-३०) । तत्र भाष्यम्—इति चेत् पश्यसि कर्मान्तरचोदनेति । अतस्तत्र दोषः । स एव महान् । तस्मात् किंभवतु आज्यभागयोः स्वशब्देन ग्रहणम् अन्येषामंगानां चोदकेन । स्वशब्देनाज्यभागौ गृहीतौ दृष्ट्वा चोदकस्तौ न प्रापयति । अन्यान्यंगान्यगृहीतानि प्रापयिष्यतीति । किमेवं भविष्यतीति । संहत्यकारिता न कल्पयिष्यते । चोदकप्राप्तयोर्वाक्यान्तरेणार्थवादवचनमनर्थकं न प्रतिज्ञातं भविष्यति । विस्पष्टं संज्ञाग्रहणेन पुनः श्रुतिरित्येतश्च कर्मान्तरं कल्पयिष्यते । यथा देवदत्तोऽत्र तिष्ठती-

त्युक्ते, न तिष्ठेन्नैव तिष्ठतीत्युक्तः, एतावता देवदत्तादन्योऽयमभिधीयते इति गम्यते । न च परिसंख्या त्रिदोषा सती कल्पिता भविष्यति । तस्माच्चोदकेनागृहीताज्यभागौ गृहीताविति ।

आह । कस्मादिदं गौरवमाश्रितम् । यदि हि प्रत्यक्षमाज्यभागौ न गृहीतौ स्यातां चोदक एव तौ शक्नुयादगृहीतुम्, प्रत्यक्षवचनेन चोदकं ग्रहणाशक्तौ गौरवे किं प्रयोजनमिति—उच्यते । न गौरवस्य किंचित् साधु प्रयोजनं, न तु गौरवेण यत्कृतं तन्न कृतं भवति । गौरवस्य तु दोषोऽस्ति, न तु दोषोऽपि सति चोदक आज्यभागौ गृह्णाति । यः परिहारेण पथा ग्रामं गच्छति, परिहारदोषमसौ प्राप्नोति, न तु ग्रामगमनं न भवति । तस्मादग्रहणादाज्यभागयोर्ग्रहणमिति इति ।

अनन्तरसूत्रं—न तुल्यत्वात् (१०-७-३१) । तत्र भाष्यं यथा—नैतदेवम् । यदि हि चोदकः पृथक् पृथक् प्राकृतान् पदार्थानपेक्षेत, तत्राज्यभागौ गृहीताविति कृत्वा तौ नापेक्षेत । अन्यांश्च गृह्णीयात् । न त्वसौ पृथक् पृथक् पदार्थानपेक्षते । किन्तु प्राकृतमपूर्वमपेक्षते । यद्वत्तेन तद्वदनेनेति । तस्मिन्नपेक्ष्यमाण आज्यभागवत्ताप्यपेक्षिता भवति । तत्रैतदेवमागच्छति, कृतकरं शास्त्रमनर्थकं भवतीति । तस्मादन्यैरंगैस्तुल्यत्वान्न चोदकेनागृहीतयोराज्यभागयोर्ग्रहणमिति इति ।

अनन्तरसूत्रं—तथा तद्ग्रहणे स्यात् (१०-७-३२) । तत्र भाष्यं यथा—अथ यद्युच्येत आज्यभागावेव चोदकेन गृहीतौ प्रकृतिवद्गृहमेधीयो भवति । कथम् । आज्यभागौ यजति, एवमिति । यथा सप्तदश सामिधेन्यो भवन्त्यध्वरकल्पादिष्विति वाक्यशेषान्नान्यस्विष्टिषु साप्तदश्यम् । यथा शिंशपामानय वृक्षमिति नान्योऽपि वृक्ष आनीयते, शिंशपैव वृक्षशब्देन गृहीता भवति, एवमिहापि चोदकेनाज्यभागावेव गृहीताविति द्रष्टव्यम् । एवं प्राप्ते ब्रूमः । तथा तद्ग्रहणे स्यात् । तुल्यमग्रहणेन तद्ग्रहणम् । पृथक्पदार्थापेक्षिणि चोदके स्यात् । अग्रहणमन्येषामंगानाम् । प्राकृतापूर्वापेक्षिणि तु नैतदुपपद्यत इति ।

अनन्तरसूत्रं यथा—अपूर्वतां तु दर्शयेद् ग्रहणस्यार्थवत्त्वात् (१०-७-३३) । तत्र भाष्यं यथा—एवं तर्हि अपूर्वो गृहमेधीयः । कुतः ? ग्रहणस्यार्थकत्वात् । एवं ग्रहणम् । आज्यभागौ यजतीत्यर्थवद् भविष्यति । पूर्ववत्त्वे तदनर्थकं स्यात् । आज्यभागाभ्यां प्रत्यक्षभूताभ्यां गृहमेधीयो निराकांक्षो न चोदकेनान्यान्यंगानि गृह्णातीति । यस्यां तु विकृतावपूर्वं किंचिदंगमुक्तं, तेन सहैकवाक्यतामगत्वा प्राकृतान्यंगानि गृह्णातीति । कुतः । केन प्रकारेण कुर्यादिति

तस्याकांक्षा, न किं कुर्यादिति प्रकृतौ चांगवत्ता नाम प्रकारो विदितः, प्रयोगवचनेन चाकांक्ष्यते, न तु विकृतावंगवत्ता क्लृप्ता । सा कल्पयित्वा आकांक्षिता भवति । न च क्लृप्तामुज्झित्वा कल्पनीयसम्बन्धो न्यायः । तस्मात्तत्रापि चोदकेनांगानि गृह्यन्त इति । गृहीतेषु च प्राकृतेषु वैकृतानामंगानां विधानमनर्थकं मा भूदिति तेषामंगानां कल्पयित्वा सर्वांगोपसंहारिणा प्रयोगवचनेन संग्रहः क्रियत एवेति । इति ।

एतज्जैमिनीयन्यायमालायां स्पष्टम्—यथा—गृहमेधीयके त्वाज्यभागावित्यनुवादगीः । स चोदकविधिर्वार्थवादो वाऽधिककर्म वा ।। परिसंख्येति संकोचश्चोदकान्यत्र वात्र वा । अपूर्वो गृहमेधीयः स्याद्वातो लुप्तचोदकम् ।।

अनुवादः पुनः श्रुत्या द्वितीयः सार्थतावशात् ।
निर्वापाच्चोदकस्य लिंगत्वेन सहायकृत् ।।
ओदनेनैव तत्सिद्धेरैष्टिकस्य प्रशंसनम् ।
विध्येकवाक्यता नास्ति तेनात्रांगान्तरे विधिः ।।
प्रत्यभिज्ञानतोंऽगस्य परिसंख्येतरस्य हि ।
चोदकस्य च संकोच इतरांगनिषेधतः ।।
व्यापारैक्याच्चोदकस्य स्वार्थसंहरणं भवेत् ।
वैरूप्याच्च निरर्थत्वादपूर्वं कर्म युज्यते ।।
आज्यभागेतिनाम्नोपकारक्लृप्तिस्मृतिरिह ।
नामतादि समं तस्माल्लुप्यते तेन चोदकः ।।

इति । अत्र विस्तरो यथा—मरुद्भ्यो गृहमेधिभ्यः सर्वासां दुग्धे सायमोदने इति विहिते गृहमेधीये श्रूयते—आज्यभागौ यजति इति । तत्राष्टधा संशयः—चोदकप्राप्तयोरेवाज्यभागयोरिह पुनः श्रवणादनुवादोऽयम् इत्याद्यः पक्षः ।

तथा सति वैयर्थ्यप्रसङ्गात् । ततः सार्थकत्वाय चोदकैतद्वाक्ययोर्मिलितयोरत्राज्यभागविधायकत्वमभ्युपेतव्यम् । ओषधिद्रव्यनिर्वापादयो यथा प्रकृतिगताः सन्तो विकृतावपि श्रूयमाणाश्चोदकस्य लिंगम्, तथा आज्यभागावपि लिंगत्वेन सहायकृतौ ततो मिलितयोर्विधायकत्वम् इति द्वितीयपक्षः ।

गृहमेधीयविधिवाक्ये श्रुतस्योदनस्यैवोषधिद्रव्यतया लिङ्गत्वसिद्धेर्नास्ति लिङ्गान्तरापेक्षा । तस्मात् प्रकृतविष्टौ श्रुतत्वादाज्यभागकर्मणि इह पुनः श्रवणमर्थवादत्वेन तत्प्रशंसार्थम् इति तृतीयपक्षः ।

भिन्नप्रकरणे श्रुतस्य विध्येकवाक्यत्वायोगादर्थवादत्वमयुक्तम् । ततः चोदकप्राप्तादाज्यभागादिकर्मणोऽधिकमाज्यभागरूपमंगान्तरं विधीयते इति चतुर्थः पक्षः ।

ऐष्टिकयोराज्यभागयोरिह प्रत्यभिज्ञानान्नांगान्तरं युक्तम्। तस्मादाज्यभाग-व्यतिरेकस्य प्रयाजाद्यंगस्य परिसंख्यानार्थमिदमाज्यभागवचनम् इति पंचमः पक्षः।

आज्यभागवाक्येन तद्विधिरूपः स्वार्थस्त्यज्येत प्रयाजादिरूपनिषेधोऽन्यार्थः परिगृह्यते, चोदकप्राप्तं च प्रयाजाद्यनुष्ठानं बाध्येत, इति दोषत्रयप्रसङ्गान्न परिसंख्या युक्ता। तेन प्रत्यक्षरूपादस्मादाज्यभागवाक्यादानुमानिकं चोदकवाक्य-माज्यभागव्यतिरिक्तप्रयाजाद्यंगेषु संकोचनीयम् इति षष्ठः पक्षः।

यदि चोदकस्य प्रत्यंगं पृथग्व्यापाराः स्युः तदा प्रयाजाद्यंगगोचरैर्व्यापारै-स्तेषामतिदेशः सिध्यति। आज्यभागगोचरस्यानेन प्रत्यक्षविधिना बाधितत्वान्न चोदकेनाज्यभागातिदेशः इत्येवं संकोचो वर्णयितुं शक्यते। इह तु शब्दबुद्धि-कर्मणां विरम्यव्यापाराभावात् इति न्यायेनैक एव चोदकस्य व्यापारः। तथा सति युगपदतिदेशोऽनतिदेशश्च विरुद्धधर्मः प्रसज्येत। तस्मात्—प्रयाजाद्यंगेषु संकोचो न युक्तः। तेन चोदकोऽत्राज्यभागयोरेव शक्तश्चोदकः। तज्ज्ञानं शक्तिज्ञानमुपसंहारः। तथा सत्याज्यभागातिदेशे व्यापृतस्य चोदकस्य को नामा-तिदेशनिवृत्तिरूपविरुद्धधर्मप्रसङ्गः। तत्राज्यभागकर्मणि चोदकावस्थापनम् इति सप्तमः पक्षः।

पुरोडाशं चतुर्धा करोति आग्नेयं चतुर्धा करोति इत्यनयोरुभयोरपि प्रत्यक्ष-वचनत्वेन सरूपत्वादत्रोपसंहारः। इह तु प्रत्यक्षपरोक्षयोर्वचनचोदकयोर्विरू-पत्वान्नासौ युक्तः। किं च प्रत्यक्षवचनेनैवाज्यभागविधिसिद्धेश्चोदककल्पना निरर्थिका। तस्मात् असंहारो न युक्तः। तस्मात्—अपूर्वो गृहमेधीयो न चोदकेनान्यांगानि गृह्णाति। इतिकर्तव्यताकांक्षा तु प्रत्यक्षवचनेनैव पूर्यते। एवं सत्युक्तदोषत्रयाभावादष्टमः पक्षोऽभ्युपेयः।

ननु सांग्रहिण्यामिष्टौ प्रत्यक्षवचनविहितैरामनहोमैः सह चोदकातिदिष्टाना-मनुयाजानां समुच्चयोंऽगीकृतः, तद्वदत्रापि विधीयमानयोराज्यभागयोश्चोदकप्राप्त-प्रयाजाद्यंगैः सर्वैः सह समुच्चयोऽस्तु। न वैषम्यात्। प्रकृतावाज्यभागयोरुप-कारः कृतः, सोऽत्र नामसाम्येन स्मार्यते। तत्र क्लृप्तोपकारैरनुयाज्याद्यंगैश्चो-दकेन सहसातिदृष्टैः सम्पूर्यते। ततो विधिवैयर्थ्यपरिहारायामनहोमेषूपकारे कर्मत्वे सति पश्चात्प्रवर्तमानः प्रयोगवचनः समुच्चित्यानुष्ठापयति। ततो वैषम्यात् क्लृप्तोपकाराज्यभागविधायकेनानेन प्रत्यक्षवचनेन गृहमेधीये चोदको युज्यते। तस्मात् अविकृतिरूपं सांगमपूर्वं कर्मात्र विधीयते इति राद्धान्तः।

अत्रापूर्वो यथा नित्यश्राद्धे तथेति समन्वयः।

**पिण्डा[११]द्यर्यादिनिषेधस्तु शंय्वन्ता प्रायणोया संतिष्ठते न पत्नीः संयाजयति इलान्ता आतिथ्या संतिष्ठते नानुयाजान् यजति इतिवदर्थवादमतम् । अन्यथा प्रतिषेधवचनेन चोदककल्पनेऽन्नार्थभाण्डादिसर्वाङ्गानुष्ठानं स्यात्[१२] ।**

---

११ । जैमिनीये प्रायणीयातिथ्ययोर्नियमेन शंय्विगन्नस्याधिकरणे अयं विषयः विचारितः । तत्र इमे सूत्रे—शंय्विडान्तत्वे विकल्पः स्यात् परेषु पत्न्यनुयाजप्रतिषेधानर्थको हि स्यात् । नित्यानुवादो वा कर्मणः स्यादशब्दत्वात् । (१०।७।३७-३९) । अत्राह भाष्यकारः यथा—ज्योतिष्टोमे श्रूयते, शंय्वन्ता प्रायणीया संतिष्ठते, न पत्नीः संयाजयन्तीति । इडान्तातिथ्या संतिष्ठते, नानुयाजान् यजतीति । तत्र संशयः । प्रायणीया किं शंय्वन्ता कृत्स्नसंस्था वा, उतडान्तेव । किं प्राप्तम् । शंय्विडान्तत्वे विकल्पः स्यादिति । कुतः । पत्न्यनुयाजस्य प्रतिषेधात् । शंय्वन्ता संतिष्ठत इति तावद्व्यक्तमेव वचनम् । अपरमपि वचनं, न पत्नीः संयाजयन्तीति । यदि शंय्वन्तैव नित्यं पत्न्यनुयाजप्रतिषेधोऽनर्थकः स्यात् । तस्मात् पत्न्यनुयाजप्रतिषेधेन कृत्स्नसंस्थानमुच्यते । कथम् । प्रायणीयायां पत्नीसंयाजान् केवलान् न करोति, नान्यं न करोतीति । तथा आतिथ्यायामनुयाजान् केवलान् न करोति, नान्यं न करोतीति । अकर्तव्यपरिसंख्यानार्थमेवेदं भिन्नमेव वाक्यद्वयं पूर्वाभ्यां वाक्याभ्यामिति ।

न त्वेतदस्ति, विकल्प इति । एक एव कल्पः, शंय्विडान्तत्वम् । तत्र हि विस्पष्टं वचनम् । द्वितीयः कल्पो नास्त्येव । न हि तस्य वचनमस्ति । न च पत्न्यनुयाजप्रतिषेधकं कृत्स्नसंस्थानवाचकम् । किं तर्हि । तन्नित्यानुवादः । नित्यप्राप्तमनुवदति । यथा, नान्तरिक्षे न दिव्यग्निश्चेतव्य इति । पूर्वाभ्यां सहैकवाक्यतैवानयोः, शंय्वन्ता प्रायणीया संतिष्ठते, न पत्नीः संयाजयन्तीति । तथा, इडान्तातिथ्याः संतिष्ठते, नानुयाजान् यजतीति अत्र यत्नलाघवेन स्तुतिः । ननु प्रतिषेधवचनः कृत्स्नसंस्थानं वदेत् य एव हि श्रुतस्यार्थस्योत्सर्गे दोषः स एवाश्रुतकल्पनायाम् । तस्माच्छंय्विडान्ततैव स्यादिति ।

अत्र न पत्नीः संयाजयन्तीति, न पदयुक्तमुपरितनं प्रतिषेधवाक्यं, नित्यानुवादः सन्नर्थवादः इति जैमिनीयन्यायमालाविस्तरे भाष्यं स्पष्टयति माधवाचार्यः । अत्र यथा पत्नीसंयाजाभावः नित्यानुवादत्वेन अर्थवादमात्रं, तथा नित्यश्राद्धे पिण्डादिनिषेधः नित्यानुवादः सन् अर्थवादः एवेति समन्वयः ।

१२ । नित्यश्राद्धे पिण्डादिनिमित्तं प्रतिषेधवचनं यदि नाभविष्यत्, तर्हि तच्छ्राद्धकृते पत्नीकर्तृकपाकादिनिमित्तं भाण्डाद्युपकरणैः सहोदनानां सर्वेषामंगजा-

यत्तु होमनिषेधेन हुतशेषदानांगकपात्रालम्भनबाध इति तत्तुच्छम्[१३]। हुतशेषस्य दानस्य प्रतिपत्तित्वेन हुतशेषं दत्त्वा पात्रमालभ्य जपतीत्यस्य काला[१४]र्थसंबन्धित्वात्। तच्च वक्ष्यते। नित्यश्राद्धस्य च गृहमेधीयवदपूर्वत्वादेव पात्रालम्भनजपाभावः। अर्घ्यदानाक्षय्योदकस्वधावाचनांगत्रययुक्तोऽन्नोत्सर्ग एव केवलं कर्तव्यः पूर्वोक्तवचनबलात्।

## अथ संकल्पश्राद्धम्

तत्र स्मृतिः —

अंगानि पितृयज्ञस्य यदा कर्तुं न शक्नुयात्।
संकल्पश्राद्धमेवासौ कुर्यादर्घ्यादिवर्जितम्॥

इति अतो महापितृयज्ञे[१५] नार्षेयं वृणीतेति वदर्घ्यादिप्रतिषेधः। आरादु[१६]

---

तानां अनुष्ठानमभविष्यत्। वस्तुगत्या तु नित्यश्राद्धे तदभावात् तत्र नित्यत्वेन पिण्डादीनामभावेन पिण्डप्रतिषेधवचनं नित्यस्य अप्राप्तस्य पिण्डदानादिविधेरनुवादार्थमेवेति सारः।

१३। तत्तुच्छमिति पूर्वपक्षं शूलपाणिमतं दूषयति।

१४। प्रतिपत्तिर्नाम आकीर्णकरस्य द्रव्यस्य विहितदेशे प्रक्षेपः। होमावशेषदानस्य तत्परत्वेन, दत्त्वेत्यत्र क्त्वाश्रुत्या आनन्तर्यार्थतायां प्राप्तायां पात्रम् आलभ्य नाम स्पृष्ट्वा जपविधानं तस्मिन् काले प्राप्तमिति कालिकसम्बन्धोऽयम्। किन्तु नित्यश्राद्धस्य प्रागुक्तगृहमेधीयेष्टिवदपूर्वत्वे पात्रालम्भनाभावे जपविधानाभाव इति स्पष्टम्। केवलमयमेव नित्यश्राद्धस्य विषयो यत् अब्तिलैः इत्यादि वचनबलेन अर्घ्यदान-अक्षय्योदक-स्वधावाचनत्रययुक्तोऽन्नोत्सर्गः।

१५। महापितृयज्ञे नार्षेयं वृणीत इति विषयो भूमिकायां महापितृयज्ञांशे द्रष्टव्यः।

१६। सांगप्रधाने यागे अंगमुपकारकं, प्रधानमुपकार्यम्। तत्र अङ्गं द्विविधम्—आरादुपकारकांगम्, सन्निपत्योपकारकांगम्। एतत् स्पष्टं तन्त्रसिद्धान्तरत्नावल्याम्—(पृ० १०६-७) यथा—विनियोगविधेः सहकारिभूतानि श्रुत्यादीनि षट्प्रमाणानि। तेषां परस्परमेकान्तरितद्व्यन्तरितादिविरोधे बलाबलं च सोदाहरणानि निरूपितानि। एतत्सहकृतेन विनियोगविधिना यान्यंगानि विनियुज्यन्ते तानि द्विविधानि सिद्धरूपाणि क्रियारूपाणि चेति। तत्र सिद्धरूपाणि जातिद्रव्यगुणादीनि। क्रियारूपाण्यपि द्विविधानि सन्निपत्योपकारकाणि, आरादु-

पकारकार्घ्यगन्धपुष्पधूपदीपाच्छादनासनपादासनदानानां निवृत्तिः । यद्यप्यङ्गानीति आराडुपकारकांगनिवृत्तेः पिण्डदानं प्रधानत्वात् कर्तव्यमित्याभाति, तथापि संकल्पश्राद्धपदस्य यौगिकत्वात्[१७] ब्राह्मणाय संकल्प्य किंचिद्दानस्यैव तथात्वात् पिण्डदानस्यैव निवृत्तिः, एतेन ब्राह्मणनिमन्त्रण-नियमश्रावणरक्षोघ्नमन्त्रजप-

---

पकारकाणि चेति । कर्मांगभूतद्रव्यदेवतादिकमुद्दिश्य तत्संस्कारत्वेन विधीयमानानि सन्निपत्योपकारकाणि ।

द्रव्यादिकमनुद्दिश्य साक्षादेव तत्तत्कर्माङ्गत्वेन विधीयमानं कर्म आरादुपकारकम् । आराद् द्रव्यादिकमुद्वारीकृत्य साक्षादेवेति यावत् । यथा—प्रयाजानुयाजाज्यभागादिकम् इति । प्रकृते गन्धपुष्पधूपदीपादीनां श्राद्धस्यांगभूतद्रव्यत्वेन विनियोक्तव्यत्वात् आरादुपकारकम् ।

१७ । शब्दश्चतुर्विधः । रूढः, लाक्षणिकः, यौगिकः, योगरूढश्च । अवयवार्थत्यागपूर्वकं समूहे शक्तिकल्पना रूढेरभिप्रायः तत्कल्पितः शब्दः रूढः । मुख्यार्थं बाधित्वा बाधितार्थद्वारान्यार्थकल्पना लक्षणाया अभिप्रायः । तल्लक्षणं यथा—

मुख्यार्थबाधे तद्योगे रूढितोऽथ प्रयोजनात् ।
अन्योऽर्थो लक्ष्यते यत् सा लक्षणारोपिता क्रिया ॥

इति । तत्कल्पितः शब्दः लाक्षणिकः । अवयवार्थस्य निर्विकारेणोपस्थापनं योगस्याभिप्रायः । तत्कल्पितः शब्दो यौगिकः । योगस्य रूढेश्च समवायेन कल्पितः शब्दो योगरूढः इति । जैमिनिकस्य प्रथमाध्यायस्य चतुर्थपादे एकादशसूत्रे—प्रोक्षणीष्वर्थसंयोगात् (१-४-११) इत्याख्ये प्रोक्षणीशब्दमाध्यमेन योगस्य विचारः कृतः । तत्राहुर्भाष्यकाराः शबरस्वामिन-प्रोक्षणीरासादय (तै० ब्रा० ३-२-९) इति श्रूयते । तत्र प्रोक्षणीशब्दं प्रति सन्देहः किं संस्कारनिमित्त उत जातिनिमित्त उत यौगिक इति । तत्र संस्कारेषु सत्सु दर्शनात् संस्कारशब्दतायामवगम्यमानायामसंस्कृते शब्दलाभाज्जातिशब्दः । असंस्कृतास्वेवाप्सु प्रोक्षणीभिरुद्वेजिताः स्म इति कस्मिंश्चिद्देशे भवन्ति वक्तारः । तेन जातिशब्द इति प्राप्ते यौगिक इत्युच्यते । कुतः । अर्थसंयोगात् प्रोक्षणम् इत्युपसर्गधातुप्रत्ययसमुदायस्य जातिनिमित्तता प्रयोगादनुमीयते । सेचनसंयोगात्तूपसर्गधातुकरणप्रत्ययसहितोऽप्सु प्रवर्तेत इति प्रसिद्धिरनुगृहीता भविष्यति । यदान्यदपि सेचनं प्रोक्षणशब्देनोच्यते तदा तत्संयोगादेवाप्सु भविष्यतीति न समुदायार्थः कल्पयितुं शक्यते । तस्माद् यौगिकः । प्रयोजनं, घृतं प्रोक्षणं भवति इति, यदि

संस्कारशब्दः प्रोक्षणीरासादयेति प्रैषः। यदि जातिशब्दः घृतमासादयेति। यदि जातिशब्दः घृतमासादयेति। यदि यौगिकः प्रोक्षणमिति।

एतत् स्पष्टं विवृणोति माधवाचार्यः कालमाधवे शिवरात्रिशब्दप्रसंगे-तद्यथा—संस्कार-जाति-योगेषु कं ब्रूते प्रोक्षणीरिति। संस्कारं सार्वभौमत्वाज्जातिमुद्वेजनोक्तितः। अन्योन्याश्रयतो नाद्यो न जातिः कल्पशक्तितः। यौगिकः क्लृप्तशक्तित्वात् क्लृप्तिव्यकिरणे स्थिता॥ अयमर्थः—दर्शपूर्णमासांगतया श्रूयते प्रोक्षणीरासादयति इति। तत्र संशयः —किमयं प्रोक्षणीशब्दोऽभिमन्त्रणासादनाद्युदक-संस्कारं ब्रूते, किं वा जलावान्तर-जाति-विशेषम्, आहोस्वित् प्रोक्ष्यन्ते पात्राण्यभिः—इति योगम्। तत्र संस्कारं ब्रूते इति तावत् प्राप्तम्। कुतः। सार्वभौमत्वात्। सर्वेषु हि संस्कारविधि-वाक्यादिप्रदेशेषु प्रोक्षणीशब्दः श्रूयते—प्रोक्षणीरासादयेध्मावर्हिरुपसादय इति प्रैषवाक्ये प्रयोगः। प्रोक्षणीरासादयति इति विधिवाक्ये। एवमभिमन्त्रणादिवाक्यान्यप्युदाहरणीयानि। तस्मात् संस्कारं ब्रूते इत्येकः पक्षः। जातिं ब्रूते इति पक्षान्तरम्। लोके हि जलक्रीडासु प्रोक्षणीभिरुद्वेजिताः स्म इत्युदकजातौ प्रयोगो दृश्यते।

तत्र न तावत् संस्कारं ब्रूते इत्याद्यः पक्षः उपपद्यते। कुतः? अन्योन्याश्रयत्वात्। नापि जातिं ब्रूते इति द्वितीयः पक्षो युक्तः। उक्तजातौ प्रोक्षणीशब्दशक्तेर्व्यवहारे पूर्वक्लृप्तत्वेनातः परं शक्तेः कल्पनीयत्वप्रसंगात्। नच योगेऽपि शक्तिः कल्पनीया, व्याकरणेनैव क्लृप्तत्वात्। व्याकरणे हि उक्ष सेचने इत्यस्माद्धातोः करणे ल्युट्प्रत्ययेन शब्दो व्युत्पादितः। तथा सति प्रकर्षेण उच्यते अनेनेति योगेन सेचनसाधनमुदकादिकं सर्वं प्रोक्षणशब्दवाच्यं संपद्यते। प्रकृते तु स्त्रीशब्दवाच्यानामपां सेचनसाधनत्वात् तद्वचनस्य प्रोक्षणशब्दस्य ङीप्प्रत्ययान्तत्वेन प्रोक्षणीरिति द्वितीया-बहुवचनान्तः शब्दो निष्पद्यते।

प्रोक्षणीशब्दे तु न रूढिज्ञापनाय किंचित् सूत्रं स्वतन्त्रं विहितमस्ति। किं तर्हि, सर्वधातुसाधारणेनावयवार्थव्युत्पादकेन ल्युट्प्रत्ययेन व्युत्पादितत्वात् यौगिक एवायं प्रोक्षणीशब्दः।

प्रकृते संकल्पश्राद्धशब्दः प्रोक्षणीशब्दवत् यौगिकः। तस्य एते अवयवाः संकल्पः—श्राद्धम्। समुपसर्गपूर्वक क्लृपूसामर्थ्ये इति धातोः ण्यन्तात् (पा० सू० ३-१-१२) क्याद्यच् (पा० सू० ३-१-३४) इति पाणिनीयसूत्रद्वयेन संकल्प इति पदं सिध्यति। संकल्परूपात्मकं श्राद्धं संकल्पश्राद्धमिति कर्मधारयसमासः। तस्य विधिरूपत्वमुक्तं मनुना (२-३)—

तृप्तिप्रश्न-अक्षय्योदकदानानीति कार्याणि सन्निपातित्वात्[१८]। यद्यप्यावाहनमपि सन्निपात्येव तथापि—

अग्नौ करणं होमं चावाहनं चावनेजनम्।
पिण्डश्राद्धे प्रकुर्वीत पिण्डहीने विवर्जयेत्॥

इति वचनात् न कर्तव्यम्। यदि चैतत् कल्पतरावलिखितत्वात् सन्दिग्धमूलं, तदा तु मघादौ चावाहनं कर्तव्यमेव। एतेन दैवविरहो व्याख्यातः। प्रेतश्राद्धे तु आश्वलायनगृह्यपरिशिष्टम्—

प्रेतश्राद्धे तु सर्वेषु न स्वधा नाभिरम्यताम्।
स्वस्त्यस्तु विसृजेदेवं सकृत्प्रणववर्जितम्॥
एकोद्दिष्टस्य शब्दे तु अनुशब्दो न विद्यते।
पितृशब्दं न युञ्जीत पितृहा चोपजायते॥

इति स्वधावाचनादिप्रतिषेधात् धर्मातिदेशः। पारस्करः (श्राद्धसूत्रे कण्डिका ४) अभिरम्यतामिति वदेत्। अभिरताः स्म इत्यपरे। अत्र परिशिष्टवचनं प्रेतैकोद्दिष्टविषयम्। पारस्करवचनमितरैकोद्दिष्टविषयमिति कल्पतरुकारानुसारेण शम्भुकरवाजपेयिना। अत्र शूलपाणिः—(पृ० ३३३-३४) अभिरम्यतामित्यभिधायैतत् प्रेतश्राद्धमिति गोभिलोक्तेनेयं व्यवस्था। किं च बह्वृचानां[१९] पार्वणे अभिरम्यतामिति विसर्जनस्य प्राप्तत्वात् अत एव शाखिभेदव्यवस्थित-

---

संकल्पमूलः कामो वै यज्ञाः संकल्पसम्भवाः।
व्रतानि यमधर्माश्च सर्वे संकल्पजाः स्मृताः॥

अत्र संकल्पपदं व्याख्याति मन्वर्थमुक्तावल्यां कुल्लूको यथा—अनेन कर्मणेदमिष्टं फलं साध्यत इत्येवंविषया बुद्धिः संकल्पः, तदनन्तरमिष्टसाधनतयावगते तस्मिन्निच्छा जायते, तदर्थं प्रयत्नं कुरुते चेत्येवं संज्ञाः संकल्पप्रभवाः। कोषकारोऽपि एवम्, यथा—

कल्पः शास्त्रे विधौ न्याये संवर्त्ते ब्रह्मणो दिने।

इति मेदिनी—(१०२-२)

१८। सन्निपातित्वात् नाम सन्निपत्योपकारकांगरूपत्वात्। तदुक्तं टिप्पण्याम्—२

१९। बह्वृचानां नाम ऋग्वेदिनाम्।

विकल्प इति तत्तुच्छम्[२०]। गोभिलगृह्यस्य छन्दोग[२१]विषयत्वेन सर्वसाधारण्याभावात् बहुवचनस्यापि सर्वशाखिसाधारणत्वात्। अन्यथानुशब्दपितृशब्दप्रयोगेऽपि सर्वशाखिनां प्रतकोद्दिष्टे स्यादितरेकोद्दिष्टेऽपि वा न स्यात्। तस्मात् पूर्वोक्तेन[२२] व्यवस्थेति ॥

इति श्राद्धप्रदीपे अतिदेशालोकः

---

२०। तत्तुच्छमिति शुलपाणिमतदूषणपूर्विका सूचना।

२१। छन्दोगविषयत्वे नाम सामवेदिविषयत्वेन।

२२। कल्पतरुकारलक्ष्मीधरमतानुसारिशम्भुकरवाजपेयिकृतव्यवस्थेति।

इति विप्रमिश्रकृते श्राद्धप्रदीपे श्रीव्रजकिशोरस्वाईं कृता
रश्मिटिप्पणी समाप्ता।

—०—

# ऊहालोकः

जैमिनेर्मतमालोच्य विप्रमिश्रेण धीमता ।
क्रियते श्राद्धमन्त्राणामूहानूह[1] विनिर्णयः ।।

तत्र प्रथमं तावत् ऊहसदसद्भावश्चिन्त्यते । तत्र वदन्ति[2]—यद्यपि कर्म-

---

१ । क्रमविषयं पूर्वस्मिन् आलोके विचार्य अस्मिन् आलोके श्राद्धमन्त्राणाम् ऊहविचारः ग्रन्थकर्त्रा जैमिनिमुनेः मतं मीमांसादर्शनमाश्रित्य क्रियते । स चायमूहविषयः मीमांसादर्शनस्य नवमाध्याये विचारितः । प्रकृतिगतधर्मा विकृतौ प्राकृतोपकारजनकतया अतिदिश्यन्ते । इदानीं ते क्वचित् क्वचित् ऊहमपेक्षन्ते । तल्लक्षणं जैमिनीयन्यायमालाविस्तरे उद्धृतं यथा—(६-१-१)

प्राकृतस्थानपतितपदार्थान्तरकार्यतः ।
ऊहः प्रयोगोऽविकृत ऊह्यमानतयोदितः ।।

इति । एतत् स्पष्टीकृतं तन्त्रसिद्धान्तरत्नावल्यां ( पृ० १३४ ) यथा—ऊहो नाम प्राकृतस्य पदार्थस्य विकृतौ कार्यमुखेनागतस्य तत्रत्यकार्यवशेनान्यथाभावः इति । नवीनैः प्रकारान्तरेण एतदुक्तमिति तत्रैव ( पृ० १३५ ) यथा—येन सम्बन्धेन यद्धर्मावच्छिन्नवृत्तित्वं यस्य प्रकृतौ श्रुतम्, विकृतौ तेनैव सम्बन्धेन तद्धर्मावच्छिन्नभिन्नवृत्तित्वमिति । सोयमूहः "यज्ञकर्म प्रधानं तद्धि चोदनाभूतं तस्य द्रव्येषु संस्कारस्तत् प्रयुक्तत्तदर्थत्वात्" ( ६-१-१ ) इति जैमिनीयसूत्रस्य भाष्ये त्रिविध इति उक्तः । यथा—अष्टमेऽध्याये विशेषातिदेशलक्षणं वृत्तम् । इदानीमूहलक्षणं वर्तयिष्यामः । त्रिविधश्चोहः—मन्त्रसामसंस्कारविषयः इति । अस्मिन् आलोके श्राद्धीयमन्त्राणामूहविचारः ग्रन्थकर्त्रा प्रतिजानीते जैमिनेर्मतमालोच्येत्यादिना ।

२ । प्रकृतिवद् विकृतिः कर्तव्येति अतिदेशविषये प्रकृतिगता धर्मा विकृतौ चोदकप्राप्ता भवन्ति । तत्र प्रकृतिगता मन्त्रा विकृतौ यदा अतिदिश्यन्ते तदा विकृतिगतकार्यगुणान् वीक्ष्य किंचिदन्यथाभावलक्षणत्वं वहन्ति तदन्यथाभाव-लक्षणत्वमेव ऊहस्य स्वरूपम् । प्रयोगकालीनार्थस्मरणहेतुतया मन्त्राणामुपयोगः ( मीमांसापरिभाषा पृ० २) इति मन्त्रलक्षणेन प्रयोगकाले नाम कर्मणोऽनुष्ठान-समये प्रयोजनीयताप्रकाशरूपतया समवायसम्बन्धेन स्थित्वा मन्त्र उपकरोति ।

**समवेतार्थप्रकाशनरूपोपकारद्वारेणैव मन्त्रप्राप्तेर्विकृतावुपदेशामुखेनैव पदार्थानामतिदेशात् इति तथापि निर्वापमन्त्रस्थाप्यादिपदानां गौण्या लक्षणया व्यावृत्त्या सौर्ये चरौ सूर्यप्रकाशनसम्भवात् कथमतिदेशप्राप्तस्य मन्त्रस्य आग्नेयवच्छब्दसमर्पितस्य ऐन्द्र्या गार्हपत्यमितिवत् (मै० सं० १-५-११) अन्यथाभावलक्षणोहो वक्तव्यः। तदुक्तमैन्द्र्याधिकरणे[3]—**

**यत्र मानान्तरं नास्ति तत्र गौणो न विद्यते।**
**प्रमाणान्तरसद्भावे गौणे शब्दः प्रतीयते॥**

**इति। प्रमाणान्तरं चात्र चोदक एवेति।**

---

विकृतौ पदार्थानामतिदेशादिव मन्त्राणामपि अतिदेशो भवति। दर्शपूर्णमासान्तर्गताग्नेययागांगत्वेन देवस्य त्वा सवितुः ( तै० सं० १-१-४-१ ) इत्यादिः अग्नये जुष्टं निर्वपामि ( तै० सं० १-१-४-२ ) इत्यन्तो मन्त्रो हविर्निर्वापकर्मणि पठ्यते। ननु निर्वापकर्मणि प्रकृतौ अग्निदेवतायाः सामर्थ्यं वहन्नपि अयं मन्त्रो विकृतौ सूर्याय जुष्टं निर्वपामि इत्यादिना अधिगतमर्थं बाधित्वा तदाश्रयणेन सूर्यार्थमपि आरोपयितुं गौणप्रकारेण प्रभवति। यतो हि भाट्टानां मते लक्षणायाः स्वरूपमित्थम्—

मानान्तरविरुद्धे तु मुख्यार्थस्य परिग्रहे।
अभिधेयाविनाभूतप्रतीतिर्लक्षणोच्यते।
लक्ष्यमाणगुणैर्योगाद् वृत्तेरिष्टा तु गौणता॥ इति॥

आलंकारिकैरपि—मुख्यार्थबाधे तद्युक्ते ययान्योऽर्थः प्रतीयते।
रूढेः प्रयोजनाद् वासौ लक्षणाशक्तिरर्पिता॥

इति। ऐन्द्र्या गार्हपत्यमुपतिष्ठते ( मै० सं० १-५-११ ) इति इन्द्रदेवतोद्देश्येन वृत्तस्य मन्त्रस्य गार्हपत्यदेवतोद्देश्यत्वम् अन्यथाभावेन भवति यथा, तथा अतिदेशेन प्राप्तस्य प्राकृतस्य आग्नेयपदसामर्थ्यवतो मन्त्रस्य सूर्यपदसामर्थ्यं भवति इति चेत्—मैवम्। इति ग्रन्थकर्तुराशयः।

३। लक्षणा गुणत्वद्योतिनी। गुणत्वं हि प्रमाणान्तरसद्भावे फलति। ऐन्द्र्याधिकरणे एतत् स्पष्टं भवति। तच्च जैमिनीययोः वचनात्त्वयथार्थमैन्द्री स्यात्। गुणाद् व्याप्यभिधानं स्यात् सम्बन्धस्याशास्त्रहेतुत्वात् ( ३-२-३, ४ ) इति सूत्रयोः विचारितम्। अग्निचयनप्रकरणे श्रूयते—निवेशनः संगमनो वसूनामित्यैन्द्र्या गार्हपत्यमुपतिष्ठते इति। अत्र निवेशनः संगमनो वसूनाम् इति। इन्द्रदेवतोद्देश्यको मन्त्रः। तेन गार्हपत्यमुपतिष्ठते नाम उपासीत। अत्रायं

अत्रास्मद्[४] गुरुवचरणाः—कर्मसमवेतार्थविषयकज्ञानजनकशब्दवतो मन्त्रत्वे

---

शास्त्रविचारो यत् इन्द्रदेवतोद्देश्येन श्रुतो मन्त्रः कथं गार्हपत्यदेवतोद्देश्येन विनियोजयितुं शक्यः इति। अत्रेयं निष्पत्तिर्यत् इन्द्रोऽस्य मन्त्रस्य देवता मुख्यया वृत्त्या उपलभ्यते ऐन्द्र इति ताद्धितिकशब्दसत्त्वात्। तदुक्तम्—

तद्धितेन चतुर्थ्या वा मन्त्रवर्णेन वा पुनः।
देवताया विधिस्तत्र दुर्बलं तु परम्परम्॥

इति। ऐन्द्र्या गार्हपत्यमुपतिष्ठते इति विशेषवचनबलात् अतिदेशः फलति। एतद्वचनं मानान्तरं नाम प्रमाणान्तरम्। यत्र मानान्तरमिति श्लोकेन यत्र अन्यत् किंचित् प्रमाणं नास्ति। एकमेव प्रमाणं फलति स्वर्गकामस्य अग्निहोत्रे अधिकारवत्। तत्र काचित् गौणकल्पना न भवति। यत्र किंचित् अन्यत् प्रमाणमस्ति तत्र गौणी वृत्तिः शब्दस्य अवश्यं कल्पनीया भवति।

अत्राहुर्भाष्यकाराः—वचनात्त्वयथार्थमैन्द्री स्यात्। नैतदस्तीन्द्रार्थमुपस्थानमिति। अयथार्थमैन्द्री स्यात्। कुतः। वचनसामर्थ्यात्। कथनमिदं भवति, ऐन्द्र्या गार्हपत्यमुपतिष्ठत इति। गार्हपत्ये द्वितीया विभक्तिः प्राधान्यमाह इति।

गार्हपत्यमिति पदे द्वितीयाविभक्तेः प्राधान्यं ऐन्द्र्या इति पदे तृतीयाविभक्त्यपेक्षया स्वीकुर्वद्भिः कुमारिलश्रीचरणैः यदध्यवसायितं तदित्थं यथा—गार्हपत्यस्तावद् द्वितीयया प्रधानस्य प्रत्ययार्थस्य कर्मेति श्रुत्या गम्यते तेनैन्द्र्या स प्रकाशयितव्य इति।

जैमिनीयन्यायमालायां माधवाचार्योऽपि—

ऐन्द्र्या निवेशनेत्यग्निं गार्हपत्यं भवेदिति।
प्रकाश्ये मुख्य इन्द्रे वा गौणे मुख्येऽस्तु पूर्ववत्॥
एकस्य गौणता ध्रौव्ये मन्त्रस्यैवानुवादतः।
गौणतातोऽग्न्युपस्थाने मन्त्र श्रुत्या नियुज्यते॥ इति।

अत्र विस्तरगता निष्पत्तिर्यथा—इन्द्रगार्हपत्यशब्दयोरन्यतरस्य गौणत्वेऽवश्यंभाविनि सति ब्राह्मणवाक्यस्य विधायकत्वादप्राप्तार्थत्वेन विधौ लक्षणाया अन्याय्यत्वात् प्राप्तार्थत्वेनानुवादको मन्त्र एवेन्द्रशब्देन वह्निं लक्षयिष्यति। ततो गार्हपत्यप्रकाशने समर्थमेव मन्त्रम् ऐन्द्र्या इति तृतीयाश्रुति गार्हपत्योपस्थाने विनियुङ्क्ते इति।

४। अत्र ग्रन्थकारो निजगुरुमतमुत्थापयन् प्रसंगं सिसाधयिषया यतते

प्रकृतावंगत्वकल्पना विकृतावपि चोदकेन मन्त्रस्य तथैव प्राप्तेरवश्यमूह एव । लक्षणायाः शब्दवृत्तित्वस्याधिकरणे व्यवस्थापितत्वात् ।[५]

तस्माद्[६] यथैव शब्दानां शक्तिभेदो भिदां प्रति ।
प्रत्येतव्यस्तथार्थानां लक्ष्यार्थान्तरगोचरः ॥

---

अत्रास्मद् गुरुचरणा इति । कर्मणि ( यागे ) द्रव्यस्य देवतोद्देशेन त्यागरूपता पद्धत्युपष्टम्भकतया मन्त्रमपेक्षते । त्यागकरणात्मकस्य कर्मणः स्वरूपेण समवायसम्बन्धेन स्थित्वा प्रासंगिककर्मणः अर्थपरतया ज्ञानं जनयन्तो ये शब्दावयवा मन्त्रास्ते यस्य प्राकृतस्य कृते आम्नाताः सन्ति तस्य अंगं भवन्ति । वैकृतानां प्राकृतापेक्षया पृथक्त्वे प्राकृतार्थाः वैकृतेषु न संचरन्ति । अतिदिश्यमानानां खलु प्राकृतांगानां वैकृतेषु कार्यवशेन अवश्यमन्यथात्वमन्वेषयन्ति । अतः अन्यथाभावलक्षणस्य ऊहस्य तत्रावसर आपतति । न पुनः लक्षणायास्तत्रावसरः । लक्षणायाः आरोपितशक्तिमत्त्वेन ऋढिप्रयोजनवशेन गौणार्थबोधकत्वात् ऊहस्य च प्रकृतिगत पदार्थानां मुख्यत्वप्रतिपादनतेव विकृतौ प्रयोजनवशेन अन्यथाभावप्रक्रियया तत्र पदार्थानां मुख्यत्वमेव । उभयोः प्रयोजनीयतायां सत्यामपि तत्त्वतः ऊहे प्राधान्यं तिष्ठति, लक्षणावत् मुख्यार्थबाधो भवति ।

५ । दर्शपूर्णमासगताग्नेययागांगत्वेन देवस्य त्वा सवितुः (तै० सं० १-१-४) इत्यादिः अग्नये जुष्टं निर्वपामि (तै० सं० १-१-४-२) इत्यन्तः हविर्निर्वापमन्त्रः श्रूयते । कार्यवशेन अग्निपदपरित्यागेन सूर्यपदघटित ऊहो भवति । सोऽयमूहितः सूर्यपदविशेषः सूर्यार्थं समर्पयति, लक्षणाया अग्निपदात् कदापि प्राप्तुं न शक्यते । यतो हि लक्षणायां मुख्यार्थसमर्पको मौलिकः (प्राकृतः) शब्दराशिः साक्षात् तिष्ठति, मुख्यार्थयोगात् तन्मूलकतया अर्थान्तरं कल्प्यमानं भवति, किन्तु ऊहे शब्दराशिः परिवर्तितो भवति, अर्थोऽपि तन्निष्ठतया भिद्यते । विषयोऽयं लक्षणायाः शब्दवृत्तित्वस्याधिकरणे (मीमांसादर्शने) व्यवस्थापित इति ग्रन्थकर्तुरभिप्रायः ।

६ । आत्मनो गुरुमतं व्याचिख्यासुर्ग्रन्थकारो लक्षणायाः शब्दवृत्तित्वमुपस्थाप्य तत्कृते प्रमाणवाक्यमुदाहरति । तस्मात् यथैवेति । भिदा भेदः, तां प्रति । सर्पार्थे शक्तो हरिशब्दो वानरार्थे शक्तात् हरिशब्दाद् भिन्नः इति । गङ्गायां घोषः इत्यत्र गंगाशब्दे भगीरथखातावच्छिन्नजलप्रवाहरूपोऽर्थोऽभिधया गृह्यते । स एव मुख्यार्थः । तं बाधित्वा लक्षणा तीरमर्थं बोधयति ।

**कल्प्यमानत्वादर्थशक्तिः प्रमाणवती न, शब्दशक्तिरिति च । न[७] च कर्मसमवेतार्थ-ज्ञानप्रयोजकपदवतो मन्त्रत्वे दैवांगता (या)स्तु लाघवात् नत्वनन्यथासिद्धिघटित-जनकत्वगर्भेणेति वाच्यम् । भट्टनये जनकत्वस्यातीन्द्रियशक्तिविशेषत्वेन अनन्य-थासिद्धिप्रवेशाभावात् । प्रयोजकस्य जनकजनकरुपत्वेन शक्तिद्वयघटितमूर्ति-कत्वेन गुरुशरीरत्वादिति ।**

**तत्रैतावत्[८] विवेक्तव्यं शाक्यानामयेन षट्त्रिंशत्संवत्सरे तरसमयपुरोडाशे**

---

लक्षणायाः अर्थवृत्तित्वस्वीकारे गंगापदे आवश्यकतानुसारमर्थे शक्तयः कल्प्येरन् । किन्तु शब्दे शक्तेः कल्प्यत्वाभावेन क्लृप्तत्वात् क्लृप्तकल्प्ययोः क्लृप्ताया बलवत्त्वेन सा एव भवति प्रमाणवती इति ।

७ । ग्रन्थकारः पुनरपि स्वगुरुवचनं व्याख्याति । पूर्वपक्षत्वेन न्यायमत-मुत्थाप्य खण्डयति । पूर्वपक्षिणा अग्नये जुष्टमिति स्थाने सूर्याय जुष्टमित्या-दिना अग्निपदे सूर्यपदोहो न कर्तव्यः, लक्षणया तद् भवितुं शक्यत इत्युक्तम् । यतो हि मन्त्रलक्षणे कर्मसमवेतार्थज्ञानजनकपदवतो मन्त्रत्वमिति यत्पूर्वमुक्तं तत्र जनकस्थाने प्रयोजकपदप्रयोगेन प्रयोजकत्वस्य परंपरासम्बन्धेन संबन्धितत्वात् तेनैव लक्षणास्वरूपवत्त्वेन सूर्यार्थकज्ञानसम्भवात् ऊहाभावसिद्धेः प्रयोजकपदवतो मन्त्रत्वमिति सिध्यति । किंचानेन लाघवमिति भवति यतो हि जनकत्वस्य कारणत्वापरपर्यायित्वात् तच्च अनन्यथासिद्धनियतपूर्वभावित्वात्, प्रयोजकपद-स्वीकारे केवलपूर्वभावित्वसिद्धेर्लाघवम् इति । तन्न । इति सिद्धान्तो ग्रन्थकारस्य, तद्गुरुचरणानां च । पूर्वपक्षिप्रदर्शितजनकत्वलक्षणं नैयायिकसम्मतं, किन्तु एभिः भट्टसम्प्रदायवादिभिः मीमांसकैः ग्रन्थकृद्गुरुचरणैश्च तत् नांगीक्रियते । तेषां मते जनकत्वमतीन्द्रियशक्तिविशेषस्तत्र अनन्यथासिद्धिप्रवेशो नास्ति । प्रयोजकस्वीकारे परम्परासम्बन्धिभाव आगच्छति । स च घटं प्रति कुलाल-जनकवत् प्रतिभाति । तस्य अन्यथासिद्धत्वात् कुलाल-कुलालपितृगतशक्तिद्वय-स्वीकार इव प्रकृतौ प्रयोजकस्य जनकजनकरूपत्वेन शक्तिद्वयस्वीकारो गौरवाय भवति, न लाघवाय । गुरुशरीरत्वात् नाम गौरवम् इति उक्तम् । कार्य-दशायां च मन्त्रे प्रयोजकपदवत्त्वस्वीकारे अग्निपदे सूर्यविषयकं ज्ञानं नोत्पद्यते । अत ऊह अपेक्षित इति सारः ।

८ । सोऽयं विषयः शाक्यानामयने षट्त्रिंशत्संवत्सरात्मकयागाधिकरणे विचारितः । अयं यागः दर्शपूर्णमासयोः विकृतिः । प्रकृतिभूतयोः दर्शपूर्ण-मासयोस्तण्डुलद्वारा पुरोडाशप्रस्तुतिनिमित्तं धान्यमसि धिनुहि देवान्

(शु० य० १-२०) इति मन्त्रवाक्यमाम्नातम्। अत्र साक्षात् धान्यद्वारा पुरोडाशो न निष्पद्यते। सतुषत्वात्। दृषादिपेषणनिमित्तं तण्डुलस्य आवापोऽपेक्षितः। एतस्मिन् स्थले धान्यमस्यादिवाक्ये धान्यशब्दे तण्डुलार्थो लक्षणया बोधव्यः। अयं विषयः शाक्यानामयने षट्त्रिंशत्संवत्सरे विकृतिभूते अतिदिश्यते। तत्रैव-मुक्तं संस्थिते संस्थितेऽहनि गृहपतिर्मृगयां याति, स तत्र यान् मृगान् हन्ति, तेषां तरसमया सवनीयाः पुरोडाशा भवन्ति इति। अर्थात् गृहपतिर्यजमानः प्रति-संस्थाकेऽहनि मृगयां गत्वा मृगान् हन्यात्। तत्तरसेन नाम तेषां मृगाणां तरसेन मांसेन पुरोडाशं करोति। तरसमयाः इत्यत्र विकारे मयट्। प्रकृतिभूतस्य मांसस्य विकृतित्वेन पुरोडाशोक्तेः। एवं तर्हि धान्यमसि धिनुहि देवान् इति अत्र धान्यस्थाने कथमूहः स्यात्? इति प्रकृतिभूतः शब्दः मृगः, स तु साक्षात् पुरोडाशो न भवति, तन्मांसेन तन्निष्पत्तेः। अत्रेयं शंकोदीयात् यत् यथा धान्यमसीति प्रकृतियागगतवाक्ये प्राकृतार्थनिष्पत्त्यर्थं धान्यस्थाने तदर्थत्वेन तण्डुल ऊह्यते। तद्वदिदं कर्तव्यमिति अतिदेशस्वरूपतया मृगमसि धिनुहि देवान् इति मृगशब्देन प्राकृतिक ऊहः स्यात्। किन्तु नैतद् भवति। यतो हि विकृतौ प्रकृतिगतोऽर्थो अतिदिश्यते। तत्र लक्षणा न भवति प्राकृतशब्दे यथा भवति। प्राकृतेऽर्थः तण्डुलम्। वैकृतं मांसम्। अतः धान्यमसीति प्राकृतवाक्यगत-धान्यस्य मांसमसि धिनुहि देवान् इति वैकृते ऊहः न तु मृगमसीति।

अयं विषयः गुणशब्दस्तथेति चेत्। न समवायात् इति जैमिनीय-सूत्रद्वये (१-१-८८, ८९) साधितः।

तत्राहुर्भाष्यकाराः—अस्ति शाक्यानामयनं षट्त्रिंशत्संवत्सरम्। तत्रेदं समाम्नायते संस्थिते संस्थितेहनि गृहपतिर्मृगयां याति, स तत्र यान् मृगान् संस्थिते संस्थितेऽहनि हन्ति, तेषां तरसाः सवनीयाः पुरोडाशाः भवन्तीति। तत्राविकारेण धान्यमसि धिनुहि देवानिति प्रयोगः कर्तव्यः यथा पूर्वपक्षः। यथा सिद्धान्तः ऊहः कर्तव्यः, मांसमसि धिनुहि देवानिति।

कुमारिलश्रीचरणा यथा—विकृतावर्थश्चोदकेनादिश्यते, न शब्दो वाचकः इत्येतद्वक्षामः। स चार्थो अस्मदायत्ते प्रयोगे किमित्यवाचकेन प्रकाश्यते। प्रकृतावाम्नानसामर्थ्यादिवाचकेन शब्देन प्रकाशनं कृतम्। तच्चार्थान्निवृत्तं न चोदकः प्रापयति। न वचनमस्ति, प्रकृत्या विकारः प्रत्यापद्यत इति। तस्मान्मांसशब्दस्यैव प्रयोगः।

एतदुपरि तन्त्ररत्ने पार्थसारथिमिश्रा यथा—नैतदेवं विकृतावर्थः, चोदकेनातिदिश्यते, न तु शब्दो वाचक इत्येतदत्रैव तृतीयपादे वक्ष्यामः। अर्थप्रतिपादनार्थं तु मन्त्रप्राप्तिः। ततः किमित्याह—स चार्थोऽस्मदायत्ते प्रयोगे किमित्यवाचकेन प्रकाश्यते। स्वरूपेण हि शब्देऽतिदिष्टे धान्यशब्द एव प्रयोक्तव्य इति न मांसशब्दप्रयोगः स्यात्। अर्थार्थे तु शब्दप्रयोगे मांसाभिधानासमर्थे धान्यशब्दे निवृत्ते शब्दान्तरप्रक्षेपे किमर्थं मुख्यमुल्लंघ्य लक्षणाश्रयणमिति। यदुक्तं प्रकृतौ तथा कृतमिति, तत्राह—प्रकृतौ धान्यपदाम्नानसामर्थ्येन अवाचकेनापि शब्देन विकारप्रकाशनं कृतम्। तच्च धान्यपदमिहार्थान्निवृत्तं न तच्चोदकः प्रापयति लुप्तार्थत्वात्। यत्तु विवक्षिता लक्षणेति तत्राह—न च वचनमस्ति प्रकृत्या विकारः प्रत्थाप्य इति। न हि धान्यपदाम्नानस्यैतत् सामर्थ्यम्, यदुत लक्षणया प्रकाशयितव्यमिति। तदाम्नानात्तु तद्युक्त एव मन्त्रः कार्याङ्गमित्येतावद् गम्यते। लक्षणा नान्तरीयकी, न तु शास्त्रार्थः। न त्विह धान्यपदं प्रयोक्तुं शक्यम्। तस्मान्मांसशब्दस्यैव प्रयोगः। इदं च मांसस्याप्यधिवापो नास्त्येव। पेषणार्थत्वादधिवपनस्य। मांसे च तदभावात् आवापाभावे च मन्त्रो न प्रयुज्यत इति।

युक्तिस्नेहप्रपूरण्यां यथा—प्रकृतौ धान्यशब्दाम्नानबलादार्थिकी लक्षणा। मांसे तु प्रकृतिक्लृप्तलक्षणया वैकृततण्डुलेष्वपि धान्यशब्दस्य प्रवृत्त्यसंभवात्तन्निवृत्तौ मांसप्रकाशनाय शब्दान्तरेऽवश्यमुपादेये वाचको मांसशब्द एवोपादेयो न तु लाक्षणिको मृगशब्दः। न हि धान्यशब्दाम्नानस्य प्रकृतिवाचकेन विकृतिप्रकाशनं कर्तव्यमिति नियमकल्पने सामर्थ्यं किन्तु धान्यपदयुक्तमन्त्रस्यांगतामात्रे। तथा च न लक्षणायाः शास्त्रार्थत्वमिति भावः। इति।

जैमिनीयन्यायमालायां माधवाचार्योऽपि समाधत्ते यथा—

नोह्य ऊह्योऽथवा धान्यशब्दो मासंगतोक्तिना।
ऊह्यो लक्षणायार्थस्य गोपनस्यैव संगतेः॥

तत्र विस्तरौ यथा—लक्षणया वृत्त्या धान्यशब्दस्य तण्डुलरूपेऽर्थे समवेतत्वात्। यथा गावः पीयन्ते इत्यत्र मुख्यवृत्त्यभावेऽपि नासमवेतार्थत्वं लोका वर्णयन्ति। किन्तु दुग्धं लक्षयित्वार्थं समवेतमेव प्रतियन्ति। तद्वत्। तस्मात् शाक्यानामयेन षट्त्रिंशत्संवत्सरे धान्यशब्द ऊहनीयः। तत्र ह्येवाम्नायते—संस्थिते संस्थितेऽहनि गृहपतिर्मृगयां याति, स तत्र यान् मृगान् हन्ति, तेषां तरसमयाः सवनीयाः पुरोडाशाः भवन्ति इति। तत्र दृषदि पेषणाय मांसभावपनं मांसमसि

ऊहः कथं स्यात् इति[0]। तत्रेदं[९] तत्त्वम्। तन्मन्त्रे प्रयोजकपदवन्मन्त्रत्वे-नांगत्वे नान्यत्रापि तथात्वं वक्तव्यं सर्वत्र गौरवांगीकारे प्रमाणाभावात्। अत एवोक्तं प्रमाणान्तरसद्भाव इति।

पार्थसारथिमिश्रास्तु[१०] देवतावाचिपदविवक्षया निर्वापमन्त्रेऽग्निशब्दोऽधीतो देवतावाचिपदयुक्तो मन्त्रः कथं नाम स्यादित्याहुः। एवं सति[११] दृष्टार्थता

---

धिनुहि देवान् इत्येवं मन्त्रमूहेत। न च धान्यशब्दवल्लक्ष्यको मृगशब्द ऊहे प्रयोक्तव्यः इति वाच्यम्। लक्षणावृत्तेः प्रकृतानार्थिकत्वेनातिदेशानर्हत्वात् इति।

९। अत्र पूर्ववाक्यप्रदर्शितविषयं परिष्करोति। तत्रेदं तत्त्वमित्यादिना। सति अन्यस्मिन् प्रमाणे मुख्येनास्य गौणस्यापि विकल्पना भवति इति पूर्वम् (टिप्पणी-३) उक्तम्। धान्यमसि इति मन्त्रे दर्शपूर्णमासयागीयपुरोडाश-निष्पत्त्यर्थं धान्यस्य उक्तौ तदर्थप्रयोजकपदं मन्त्रशरीरं निर्माति। तेन तस्यां-गत्वम्। विकृतावपि मांसमसीत्यादिना तथैव। किन्तु सर्वथा तन्न भवति। प्रमाणस्य ह्यसत्वात्। एतत्सम्मेलयितुं प्रमाणान्तरसद्भाव इति पूर्वप्रदर्शित-श्लोकगत-तात्पर्यं संवदति ग्रन्थकारः।

१०। गुणशब्दस्तथेति चेत् (९-१-३८) इति जैमिनीयसूत्रभाष्यस्य टुप्टी-काव्याख्याने अग्नये जुष्टं निर्वपामि इत्यत्र पार्थसारथिमिश्राः प्रसंगमिमं परिष्कुर्वाणा एवमाहुर्यत्—सम्प्रदानचतुर्थीत्वे हि कारकाणां क्रियासम्बन्धात् जुष्टशब्दमनादृत्याग्निशब्दो निर्वापेण संबध्यमानः स्वदेवताविशिष्टनिर्वापप्रका-शनात् समवेतवचनः स्यात्। नत्वेवमस्ति इति। न समवायात् (९-१-३९) इति सूत्रस्य टुप्टीकाव्याख्याने एतत् स्पष्टमूचुर्यत्—समवेतवचनोऽग्निशब्दः। कुतः? नात्र जुष्टरूपनिर्वाप उच्यते। निर्वापेण करणशब्देन जुष्टं भावये-दित्युच्यते। न हि निर्वपामीत्यस्यायमर्थः–निर्वापं करोमीति, किं तर्हि? सिर्वापेण करोमीति। ततः किमित्यपेक्षायां जुष्टमिति। स जुष्टो भाव्यमान एव भाव्यते। अग्निरिदं जोषिष्यते द्रव्यमिति। देवताविशिष्टं द्रव्यं जुष्टं निर्वापेण भाव्यते, नाविशिष्टमित्यर्थः। तेनाग्नये जुष्टं निर्वपामीति कोऽर्थः? यथाग्निजुष्टं भवति द्रव्यं तथा निर्वापेण करमीति। ततश्च समवेतवचनावेव जुष्टाग्निशब्दौ। किमित्वेवं व्याख्यायते? अत आह—एवं स्वदेवताविशिष्टः सेव्यमानः प्रकाश्यमानो दृष्टार्थो भवति निर्वाप इति।

११। वस्तुगत्वा अग्नये जुष्टं निर्वपामीत्यत्र वाक्ये निर्वापो अग्न्युद्देश्येन

---

[0] क पुस्तके नास्ति।

भवति । एवं[१२] च विकृतावपि देवतावाचिपदयुक्त एव मन्त्रः प्रयोज्य इति सिद्ध्यत्यूहः । न तु स्वरूपविवक्षया अग्निपदयुक्तो मन्त्रः कथं नाम स्यादिति । एवं सति मन्त्राणां दृष्टार्थता । इतरथा[१३] मन्त्रेणैव कर्मसमवेतोऽर्थः अग्नि-व्रीह्यादिपदेनैव इति नियमाददृष्टरूपक०ल्पना स्यात् । ऐन्द्री[१४] तु स्वरूपेणैव विनियुक्तेति न तत्रोहः ।

अन्ये[१५] त्वाहुः कर्तव्यताया[१६] भावनायाः सामान्यरूपेणावगताया विशेषरूप-

---

क्रियते । निर्वापेण सह अग्नेः सम्बन्धः । अग्न्युद्देश्यक-निर्वापात्मके कर्मणि द्रव्यं यथा अग्निजुष्टं नामाग्निप्रीतिकरं स्यात् तथा करमीत्यर्थः । सा च प्रीत्युत्पादनप्रक्रिया लोकसिद्धा दृष्टार्था इति ग्रन्थकर्तुः पर्यालोचनतात्पर्यम् ।

१२ । अतः विकृतौ देवता वाचिपदयुक्त एव मन्त्रो नाम तत्स्थानोपयुक्त-देवतासमवेतात्मकं वाक्यं प्रयोक्तव्यम् । यथा—अग्नये जुष्टं निर्वपामि इति मन्त्रे अग्निपदे विकृतौ तत्स्थानोपयुक्तदेवतात्वेन सूर्यपदयुक्त एव मन्त्रः प्रयोक्तव्यः । स च इत्थं—सूर्याय जुष्टं निर्वपामीति । अतः ऊहः सिद्धः ।

१३ । यदि विकृतौ अग्निपदे ऊहं न कृत्वा अग्नये जुष्टं निर्वपामीति साक्षत् विनियोगो भवेत् तत्र अदृष्टद्वयकल्पना स्यात् । यथा—मन्त्रपदस्य कर्मणा सह समवेतत्वेन अर्थवत्त्वमिति एकमदृष्टम् । तत्र च विकृतौ उपकार-सद्भावेऽपि नियततया प्रकृतिगताग्निपदस्य पठितव्यता इति द्वितीयमदृष्टम् । एतन्न समीचीनम् । गौरवलक्षणदोषापातात् ।

१४ । ऐन्द्र्या गार्हपत्यमुपतिष्ठते इत्यत्र तु इन्द्रदेवतोद्देश्यकमन्त्रेण गार्हपत्यो-पस्थानस्य चोदितत्वात् स्वरूपविनियोगश्रुतेर्न तत्रोहो भवतीति एतावता ऐन्द्री-न्यायविचार उपसंहृतः ।

१५ । स्वसिद्धान्तसार्थकतया इतरेषामाचार्याणां मतमुत्थापयन् ग्रन्थकारो ग्रन्थोपादेयत्वमाचष्टे अन्ये त्वाहुरित्यादिना ।

१६ । भावना मनसो व्यापारः । सा च भवितुर्भवनानुकूलभावकव्या-पारविशेषः । सामान्यरूपेण स्थितत्वात्, तस्याः प्रतिपत्तिरितिकर्तव्यतायाम् । प्रतिपत्तिविशेषरूपा । भूयस्त्वेनोभयश्रुति इति जैमिनीयसूत्रस्य (३-३-१०) भाष्ये शबरस्वामिन ऊचुः—यत्र भूयांसो गुणाः समाम्नातास्तत्र क्रियार्थां चोदनेति गम्यते । यत्र हि कर्तव्यता चोदना, तत्रेतिकर्तव्यताऽऽस्ते । यत्राकाङ्क्षितेति-

---

० विकल्पना इति ख पुस्तकपाठः ।

**मितिकर्तव्यता नाम। विशेषरूपमितिकर्तव्यतेत्युक्तं प्रकरणाधिकरणे अत एव श्रुतिप्रकरणविरोधे गोदोहनाधिकरणे—**

**इतिकर्तव्यतांशस्थां येनोद्दिश्योपसत्क्रियाम्।**
**यदंशत्वविधिस्तेन कथंभावेन गृह्यते ।। इति।**

**एवं[१७] प्रकृताविव विकृतावपि प्रयाजादीनामेवातिदेशे क्लृप्तेऽप्युपकारे आकाङ्क्षाविरहादुपकारपूर्वकमतिदेशाभावादूहबाधयोः कुतः सिद्धिरिति।**

**अत्र[१८] ब्रूमः। यद्यपि क्रियारूपैवेतिकर्तव्यता, विकृतिभावनापीतिकर्तव्यताऽऽ-**

---

कर्तव्यता तत्रेतिकर्तव्यतावचनन्याय्यम्। ये च भूयांसो गुणाः सेतिकर्तव्यता तदितिकतव्यतालिंगेन कर्तव्यताचोदनामनुमिमीम'ह तथा बहुषु राजप्रतिमेषुपविष्टेषु यस्य श्वेतं छत्रं बालव्यजनं च स राजेत्यवगम्यते राजलिंगेन इति।

कुमारिलश्रीचरणा अपि—

गुणानां यत्र भूयस्त्वमितिकर्तव्यतात्मकम्।
तत्र तेनैव लिंगेन तस्य कर्तव्यतेष्यते ।।

* * *

यद्यस्य गमकत्वेन स्वशक्तेरवधारितम्।
तदल्पं बहुधा तस्य प्रतीतौ न विशिष्यते ।।
यादृशस्य हि धूमस्य गमकत्वावधारणा।
सा तादृग् बहुरल्पो वा बुद्धिं गमयति ध्रुवम् ।। इति।

अयमेव विषयः प्रकरणाधिकरणस्य।

१७। एवं प्रकृताविवेत्यादिना पूर्वपक्षमुत्थापयन् दर्शपूर्णमासांगप्रयाजातिदेशविषयमाचष्टे ग्रन्थकारः। तत्रायमाशयः—दर्शपूर्णमासौ प्रकृतियागौ, तदंगत्वेन प्रयाजादय उपदिष्टाः। दर्शपूर्णमासविकृतिषु दर्शपूर्णमासगताः निखिलाः धर्माः चोदकेनातिदिश्यन्ते। किन्तु विकृतिषु योऽतिदेशः स उपकारपूर्वकं भवति। उपकारश्च आकांक्षाविरहेण न भवति। आकांक्षा तु प्रकरणविहारिणी। इतिकर्तव्यताकांक्षा प्रकरणम् असत्यां चेतिकर्तव्यताकांक्षायां प्रकरणमेव नास्तीति (७-१-७) व्यतिरेकभाष्यात्। एवं तर्हि विकृतौ (दर्शपूर्णमासयोः) प्रयाजादीनां ऊहबाधयोः सिद्धिः कुतः? न सिद्धिरित्यर्थः।

१८। अत्र ब्रूम इति पूर्वपक्षनिरासार्थवचनम्। इतिकर्तव्यताया अपरं नाम पद्धतिः। सा च कथंभावाकांक्षापूरयित्री। तस्या रूपं क्रिया। प्रकृतिधर्माणां विकृतिषु अतिदिश्यमानत्वे प्रकृतिगतभावनावत् विकृतावपि भावनया

काङ्क्षिण्येव। तथाप्युपकारमुखेनैवातिदेशः। शक्तिशक्तिमतोरन°न्यत्रभेदात्। अतो विकृतावुपकारस्यैव प्रथममतिदेशः। तदुक्तम्—

[19]क्लृप्तोपकारसाकांक्षाः प्रथमं प्राकृतैः सह।
संबध्यन्ते समीपस्थं विकाराः प्रोक्ष्यचोदितम्॥ इति।

अत[20] एव सप्तमनवमाध्या°°ययोरपूर्वप्रयुक्तित्वं साधितम्।

अत एव वैकृतांगानां [21]स्थानविनियोगः °°°उपकारस्याक्लृप्तत्वात्। अत एव समभिव्याहाराभावेऽपि अतिदेशांगानां प्रकरणं सन्दंशसद्भावे तु वैकृता[22]-

---

इतिकर्तव्यता आकांक्ष्यते। तत्रापि उपकारविहीनतया अतिदेशो न भवति। प्रकृतिगतधर्मा हि तद्गता शक्तिः। अतिदिश्यमानत्वे विकृतौ, सापि शक्तिमती भवति। अनया शक्तिशक्तिमतो र्भेदप्रतीति र्न जायेतेति अर्थः। अतः विकृतौ उपकाराभावात् प्रयाजानामतिदेशो न फलति।

१९। क्लृप्तोपकारक इति श्लोकः तत्प्रमाणोपष्टम्भकतया उदाहृतः।

२०। अतः द्वादशलक्षण्यां मीमांसायां सप्तमाध्याये अतिदेशविषयानालोच्य अष्टमे विशेषातिदेशं निरूप्य नवमे ऊहविषयान् पर्यालोचयन् परमाचार्या जैमिनिमुनयः। तत्र अतिदेशे अपूर्वस्य गुरुत्वम् ऊहे च तथात्वमाकलयन् इति। एतत् विवृतं टुप्टीकायाम् (९-१-१) कुमारिलश्रीचरणैर्यथा—किन्तु सप्तमे अतिदेशसद्भाव उक्तः। आग्नेयात् सौर्य इतिकर्तव्यता भवतीति, अष्टमे विशेषातिदेशः। नवमे सौर्ये, इतिकर्तव्यतायां प्राप्तायां किमविकृतः प्रयोक्तव्य उत विकारोपीत्यनेन प्रसंगेन नवमो दशमव्यापारमनुमन्यमान एवोत्तिष्ठति। विधेः प्रकरणान्तरम् इति सूत्रं नवमाक्षेपेणैवारभ्यते। तस्मान्नवमदशमयोः अपि वाभिधानसंस्कारद्रव्यम् इत्यनेन सद्भावः। तेनाष्टमान्तरं नवम आरभ्यते इति।

२१। श्रुतिलिंगवाक्यप्रकरणस्थानसमाख्याः विनियोजिकाः भवन्ति। उपकाराभावेन विकृतिगतान्यंगानि यस्मिन् स्थाने उक्तानि तस्मिन् स्थाने भवन्ति।

२२। अतिदेशेन प्रकृतांगानि विकृतौ प्राप्तानि खलु उपकारमुखेन तिष्ठन्ति। किन्तु उपकारात्मपदसमभिव्याहाराख्यस्य वाक्यस्य अभावेपि यस्मिन् प्रकरणे तच्छ्रुतिः तस्मिन् प्रकरणे तदंगत्वं बोध्यमिति ग्रन्थकर्त्तुराशयः जैमिनीयस्य

---

° अन्यत्र भेदादिति ख पुस्तकपाठः।

°° सप्तमनवमाध्यायद्वयोरिति ख पुस्तकापाठः।

°°° उपकाराक्लृप्तत्वादिति ख पुस्तकपाठः।

**नामामनहोमादीनां विनियोजकमित्युक्तमंगनिर्णये। न माता वर्धते न पिता इत्यादिदर्शनानि° विस्तरभयान्न लिखितानीति।**

---

आमनहोमानां सांग्रहणीष्ट्यंगताधिकरणस्य फलवद्वोक्तहेतुत्वादितरस्य प्रधानं स्यादिति (४-४-४-७) सूत्रभाष्यात् गृहीतः। ग्रामकामाः विश्वेदेवतोद्देश्येन सांग्रहणीमिष्टिं कुर्वन्ति। एदत्परकं वाक्यं यस्मिन् स्थाने उक्तं, तस्य सन्निधौ आमनहोमाः श्रुताः। यथा—वैश्वदेवीं सांग्रहणीं निर्वपेद् ग्रामकामः। आमनमस्यामनस्य देवा इति तिस्र आहुतीर्जुहोति इति। अत्र पूर्वपक्षिणा सांग्रहणीष्टिः यथा प्रधानता तथा प्रधानता आमनहोमानां, तत् तदुक्तत्वादिति उक्तम्। किन्तु सांग्रहणीष्टेः फलमुक्तम्। आमनानां फलमनुक्तम्। अतः प्रकरणमध्यपठितत्वेन सन्दंशसद्भावात् सांग्रहणीष्टेरामनहोमानामंगत्वम् इति सिद्धान्ती ब्रूते। एतत्पृष्ठपोषकत्वेन भाष्यकाराः यथा—वैश्वदेवीं सांग्रहणीं निर्वपेद् ग्रामकाम इति। तत्रामनहोमा : श्रूयन्ते, आमनमामनस्यदेवा इति तिस्र आहुतीर्जुहोति, इति। अत्र सन्देहः। किं समप्रधानभूता आमनहोमाः सांग्रहणीष्ट्या उतांगं तस्या इति। किं प्राप्तम्। समप्रधानभूता इति। कुतः? तुल्यहेतुत्वादितरस्य। तुल्यं हि यजिकत्वम्। नन्वफलाः होमाः। उच्यते। ग्रामकाम इत्येवानुषज्यते। तस्मात् समप्रधानभूता इति। एवं प्राप्ते ब्रूमः। फलवद्वोद्धतहेत्वतुादितरस्य प्रधानं स्यात्। न चैतदस्ति। समप्रधानभूता होमा इष्टव्येति। फलवद्वफलस्य प्रधानम्। फलवती चेष्टिः। अफलाः होमाः। ननूक्तमनुषंगे भविष्यतीति। उच्यते। नानुषंगः प्राप्नोति। कुतः? व्यवायात्। तदुक्तं, व्यवायान्नानुषज्येतेति। केन व्यवायः व्यवधानम्? परिधिमन्त्रैः उग्रोऽस्युग्रस्त्वं देवेष्वध्युग्रोऽहं सजातेषु भूयांसं प्रियः सजातानामुग्रश्चेत्ता वसुवित्, इत्येवमादिभिः। एताननुक्रम्य आमनमस्यामनस्य देवा इति तिस्र आहुतीर्जु होतीत्यामनन्ति। तस्मात् सांग्रहण्या अंगमामनहोमा इति।

अत्राहुर्भट्टपादा यथा—विकृतिह्यु पकाराकांक्षिणी क्लृप्तोपकारान् पदार्थानुपमितलक्षितप्रापणेन गृह्णाति। तस्मिन्निराकांक्षीभूता सत्यपि स्वसंनिधाने नाक्लृप्तोपकारानामनहोमान् गृह्णाति। अतस्ते पृथक्फला इति। किं समप्रधानभूता आमनहोमा इति। किं फलवन्त इत्यर्थः। यथाग्नेयादीनामेकप्रयोगवचनग्रहणात्समप्रधानता नैवमेषाम्। तुल्यं हि यजिमत्त्वम्। यदि संस्कारकर्म स्थानतः फलं न कल्प्येतापि। यागास्त्वेते। तस्मादेतेभ्यः फलं

---

° खपुस्तके नास्ति।

**इदानीं मन्त्रोहगतो विशेषश्चिन्त्यते । तत्र वार्तिककारिका—**

**[२३]मुख्यदृष्टार्थतास्वार्थसमवेतार्थतादिभिः ।**
**प्रयुक्ताः प्रकृतौ मन्त्रा गताः कार्यातिदेशतः ॥**
**विकारेष्वनिषिद्धोहाः कार्यापन्नेषु पञ्चधा ।**
**अर्थान्तरेष्वपूर्वार्थद्वारेणोहं व्रजन्ति न° ॥**

**अमुख्यार्थस्य[२४] साद्यस्क्रे साण्डे तस्मै शृतम् इत्यस्य अस्वार्थस्य तत्र इडा°°[२५]-**

---

कल्प्यते । एवं प्राप्ते ब्रूमः । प्राकृतैरंगैः यदि पूर्वं समभिव्याह्रियते, तदपूर्वमपि संबध्यत एवमाकांक्षायामव्यावृत्तायामसम्बद्धैः पदैर्व्यवहितमपि । आमनहोमानां च विद्यते प्राकृतैः सम्बन्धः इति ।

जैमिनीयन्यायमालायां माधवाचार्या अपि—

मुख्यतामनहोमस्य सांग्रहण्यंगताथ वा ।
मुख्यत्वमविरुद्धत्वात्फलाय स्यात्तदंगता ॥

अत्र सिद्धान्तविस्तरो यथा—दर्शपूर्णमासाभ्यां स्वर्गकाम इति वाक्येन स्वराज्य-कामो राजसूयेन इति वाक्येन च यथा बहूनां फलसम्बन्धावगमः, तथा आमन-होमानाम्, फलसम्बन्धाभावे सति प्राधान्यायोगात् । सांग्रहणीं निर्वपेद् ग्रामकामः इति वाक्यं तु सांग्रहण्या एव फलसम्बन्धं बोधयति, न त्वामनहोमानाम् । तस्मात्फलवत्याः सांग्रहण्याः संनिधावाम्नाता अफला आमनहोमास्तदंगम् इति ।

२३ । ऊहगतसामान्यविचारं विधाय इदानीं विशेषेण मन्त्रोहविचारं प्रतिपिपादयिषया वार्तिककारिकोपन्यासमुखेन प्रस्तौति ग्रन्थकारः मुख्यदृष्टार्थ-तेत्यादिना ।

प्रकृतिगता मन्त्रा विकृतौ यदा अतिदेशेन प्राप्यन्ते, तदा ते मुख्यदृष्टार्थ-तोपकारमुखेन स्वार्थोपकारमुखेन, समवेतार्थतोपकारमुखेन च ऊहिता भवन्ति । विकारेषु नाम विकृतिषु कार्यकारिदृष्ट्या पंचधा अपूर्वार्थमेव ऊहो भवति ।

२४ । सम्प्रति व्यतिरेकमुखेनोदाहरणानि प्रस्तौति ग्रन्थकारः कारिकागत-विषयाणाम् । अमुख्यार्थस्य साद्यस्क इत्यनेन । ज्योतिष्टोमे सोमक्रयणार्थ-मिदमाम्नायते अरुणया पैङ्गाक्ष्या एकहायन्या गवा सोमं क्रीणातीति । तत्रापि प्रकृते इदमर्थवादत्वेनाम्नातं यत् इयं गौः तया ते क्रीणामि तस्मै शृतम्, तस्यै शरः, तस्यै दधि, तस्यै मस्तु, तस्यै आतंचनम्, तस्यै नवनीतम्, तस्यै घृतम्,

---

° नः इति ख पुस्तकपाठः ।
°° इला इति तत्रैव ।

तस्यै आमिक्षा, तस्यै वाजिनम् इति। तस्य विकृतिभूते साद्यस्क्राख्ये यागे ज्योतिष्टोमगता धर्माः चोदकेन प्राप्यन्ते। तत्रेदमाम्नातं—साण्डस्त्रिवासः (त्रिवर्ष इत्यर्थः) सोमक्रयणः इति। अत्र एकहायन्याः तस्यै इति सर्वनामवचनं सर्वत्राम्नातम्। विकृतौ साण्डस्य त्रिवर्षस्यगौः पुल्लिंगतया तस्मै शृतम् इत्याद्यूहः करणीयः स्यादिति जातायां शंकायाम् आरुणया पैंगाक्ष्यादिवाक्यं विधिचोदिम्। इयं गौः तया ते क्रीणामि तस्यै शृतम् इति वाक्यं स्तुतिपरकत्वेन अर्थवादमात्रम्। अर्थवादानां विध्यर्थपोषणतया मुख्यार्थत्वाभावेन ऊहसिद्ध्यघटकतया तस्यै शृतमिति स्थाने तस्मै शृतमिति ऊहो न भवितुमर्हनीति विषये जैमिनीयेषु "असंयोगात्तदर्थेषु तद्विशिष्टं प्रतीयते। कर्माभावादेवमिति चेत्। न परार्थत्वात्" (९-१-४२) सूत्रेषु वर्णकान्तरं विचारितम्।

तत्राहुर्भाष्यकाराः—अथेदमन्यदुदाह्रियते। अस्ति साद्यस्क्रः। तत्रेदं समामनन्ति साण्ड़स्त्रिवत्सः (त्रिवर्ष इत्यर्थः) सोमक्रयणः इति। अस्ति तु प्रकृतौ एकहायिनी क्रयार्था। तत्रेदम् आम्नायते इयं गौ ते क्रीणामि तस्यै शृतम्, तस्यै दधि, तस्यै मस्तु, तस्यै आतंचनम्, तस्यै नवनीतम्, तस्यै घृतम्, तस्यै आमिक्षा, तस्यै वाजिनम्, इति। तदिहे (साण्डे) चोदकेन प्राप्तम्। तत्र सन्देहः किं गोशब्दस्थाने (साण्डशब्दस्य) ऊहं कृत्वा अवशिष्टानां पदानामविकारः, उत सर्वेषामूह इति। किं प्राप्तम्? गोपदार्थविशिष्टमेव ऊहवचनं स्यात्, तस्यै शृतम्, इत्येवमादीनामविकारः असंयोगात् शृतादिभिरर्थैः। तेषामेकहायन्यामेकहायिनीत्यादेव। न हि एकहायिनी दुग्धे (दुग्धे दुहाते दुहते)। तस्यां समवेतं वदन्त्येते। तस्मात् साण्डेऽपि अधिकारेण प्रयोक्तव्या इति। (अपरसूत्रभाष्यम्) इति चेत् एवं भवान् मन्यते, नैकहायन्यामेते समदेतानर्थान् अभिवदन्तीति। भवेदेतदेवम्, यद्येकहायिन्या इमे गुणा न भवेयुः, कालान्तरेषु तस्या उपपद्यन्ते, न तु साण्डस्य भविष्यत्कालवचना अप्येते प्ररोचनार्था भवन्ति। तस्यै शृतं भविष्यति। तस्मात् नाविकारेण प्रयोक्तव्या इति। (अन्तिमसूत्रभाष्यम्) नैतदेवम् अविकारेण प्रयोक्तव्यम् इति। असमवेतवचना ह्येते, नैकहायन्यां भवन्ति एकहायनीत्वादेव। अथोच्यते, कालान्तरे भविष्यन्तीति, साण्डेऽपि कालान्तरे भवितुमर्हन्ति। साण्डादपि हि या धेनुर्जनिष्यते, सा धोक्ष्यते इति। तस्मादविकारेण प्रयोक्तव्या इति।

अत्र भाट्टाः यथा—भविष्यताया अपि बन्ध्यात्वादिना नियतत्वाभावात् संभवि इत्येव पदं प्रकृतौ अध्याहार्यम्, तच्च गोस्तावकं विक्रेतानमनार्थं नेत्यन्यदेतत्। उभयथापि त्रिवत्से अविकृतस्येव प्रयोगादनूहः। शक्यते हि साण्डात् या

**निगदे यज्ञपतिशब्दस्य, असमवेतार्थस्य निर्वापमन्त्रे सवित्रादिशब्दस्य आदिशब्दाद-विद्यमानार्थस्य प्रकृतिकार्यापन्नस्य च नोहः।**

---

गोर्जनिष्यते तस्या जायमानं शृतादि साण्डीयमपि व्यपदेष्टुम्। तस्मात् संभावनाया विकृतावपि समभवदनूह एव।

एतद्व्याख्याने तन्त्ररत्ने (पृ० ८४०) पार्थसारथिमिश्राः आहुः—यथा तस्मात् प्ररोचनामात्रार्थमेषां कीर्त्तनम्। सा च साण्डेऽप्येतैरेव गुणैः शक्या कर्तुम्, साण्डाद् पशोर्या गौर्जनिष्यते सा घोक्ष्यत इति। तस्मादविकारेण प्रयोग इति। जैमिनीयन्यायमालायां माधवाचार्यो यथा—

ऊह्यं तस्यै शृतं नो वा भाविवृत्त्या समन्वयात्।
एकाबूह्यां साण्ड ऊहो नोहः साम्यात्स्तुतिर्द्वयोः॥

इति। अत्र विस्तरे सिद्धान्तो यथा—एकहायन्यामपि मुख्यया वृत्त्या सावेतार्थत्वा-भाविनि स्तुतित्वात् साण्डेऽपि स्तुतित्वान्नास्त्यूहः। इति।

२५। दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत इति वाक्यं दर्शपूर्णमासप्रकरणेऽ-भिहितम्। तत्रास्ते इडानिर्णयः। निःशेषेण गद्यते उच्यते इति निगदो नाम वाक्यम्। इडानिगादो नाम इडावाक्यम्। तत्रेदमाम्नातं यत् दैव्या अध्वर्यव उपहूता उपहूता मनुष्याः, य इमं यज्ञमवान्, ये च यज्ञपतिं वर्धान् इति। अत्रायमर्थो यत्—ये अत्र दैव्या औध्वर्यवो भवन्ति, ते यज्ञं पालयन्ति अवन्ति, ते च मनुष्याः अध्वर्यवाः यज्ञपतिं नाम यजमानं वर्धयन्ति नाम पोषयन्ति। अस्मिन् सत्रे तेषामुपह्वानं भवति इति। विकृतौ सोऽयं निगदः चोदकेन प्राप्यते। अत्र इडोपाह्वानवाक्यतो वृद्धिवाक्यस्य पृथक्त्वाभावात् निखिलस्य मन्त्रभागस्य इडो-पाह्वानगतार्थत्वेन एकवाक्यतया सत्त्वात् प्रत्यक्षा श्रुतिः एतन्मन्त्रम् इडोपाह्वाने विनियोजयति। किन्तु अभिवृद्धिनिमित्ते जपे अस्य मन्त्रस्य लिंगं विनियोजकं न भवति। लिंगं त्वत्र वृद्धिरिति, तत्तु मन्त्रे वर्धान् इति पदे लक्ष्यते। श्रुत्या (एकवाक्यतया) तद् बाध्यते। अतः विकृतौ पृथक्त्वशंका उपहीयते। तत्-सत्तायामूहोऽपेक्षितो भवति। किं च यज्ञपतिवृद्धिकथनप्रसंगस्तु तत्स्तावकत्वेन उपन्यस्तः। यतो हि ये मनुष्याः यज्ञपतिं वर्धयन्ति, ये वा अध्वर्यवः यजुर्वेदा-ध्यायिनः पुरोहिताः यज्ञमवन्ति ते सर्वे अत्र उपहूता भवन्ति इति उक्तम्। यज्ञ-पतिर्नाम यजमानः। ते बहवो भवन्ति। अत्र उपादानार्थ एव समवायि-सम्बन्धेन तिष्ठति, तस्यैवात्र स एवात्र समवेतः। यज्ञपतिवृद्धिपरकार्थस्य स्तुत्यर्थ-त्वेन अस्वार्थत्वेन च असमवेतार्थत्वं तेषां नोहः। अतः जैमिनीये—चोदिते तु

तथा प्रत्यक्षदर्शनविकारस्वशब्दाभिभावाभिधानप्रतिषेधात्मकपंचप्रकारकार्या-

---

परार्थत्वात् विधिवदविकारः स्यात् (९-१-४०) इति उक्तम् । अर्थात् चोदिते नाम वाक्ये अस्मिन् मन्त्रे दैव्या अध्वर्यव इत्यत्र परार्थत्वात् नाम स्वार्थपरत्वा-भावेन असमवेतार्थत्वात् (गुणत्वात्) विधयो यथा अविकारेण प्रयुक्ता भवन्ति, तथा अत्र मन्त्रे यज्ञपतिशब्दोऽविकारेण प्रयोक्तव्य इत्यर्थः ।

अत्राहुर्भाष्यकाराः । स्तो दर्शपूर्णमासौ, दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेति । तत्र इडानिगदः, इडोपहूतो—इत्येवमादिः । तत्रेदमाम्नायते । दैव्या अध्वर्यव उपहूता उपहूता मनुष्या य इमं यज्ञमवान् ये च यज्ञपतिं वर्धान् इति । तत्रायमर्थः सांशयिकः । किं बहुयजमानके यज्ञपतिशब्द आहर्तव्य उताविकारेण प्रयोक्तव्य इति । तत्रेदं तावत् परीक्ष्यते । किं समवेतवचनो यज्ञपतिशब्द उतासमवेतवचन इति । कथं समवेतवचनः । यदि यज्ञपतिवृद्धिवचनं यज्ञपते-रुपकारकं, ततः समवेताभिधायी । अथ तत्स्तुत्यर्थं ततो न समवेताभिधायी इति ।

श्रीभट्टचरणा आहुः सिद्धान्ते—यज्ञपतिशब्दो वृद्धिविशेषणम् । वृद्धिरिडा-स्तुत्यर्था । इडोपह्वानेनैकवाक्यत्वात् । अथ यदुक्तमिडापदमनपेक्षं यज्ञपति-वृद्धिवचनं गम्यत इति । उच्यते । स यो हैवं विद्वानिडया चरन्ति इत्यनेन, इडया चरितव्यमिति विधीयते । तत्रैडाप्रचारस्यायं मन्त्र इडोपहूतेरित्यादिः । ब्रह्मदेवकृतमुपहूतम् इत्येवमन्त इडोपह्वानार्थः । दैव्या अध्वर्यवः इत्यादि ऋत्वि-गुपह्वानार्थः । अध्वर्यु शब्दवाच्यः सर्वऋत्विजो लक्षणया, उपहूताः मनुष्याः इति त एवोच्यन्ते । कीदृशास्त इति उच्यते । ये यज्ञमवन्ति रक्षन्ति, ये च यज्ञपतिं वर्धयितुं क्षमास्तादृशा मनुष्या उपहूताः । तस्मात् मनुष्यविशेषण-त्वात्परार्थो यज्ञपतिशब्दः । तेन नोह्यते ।

जैमिनीयन्यायमालायां माधवाचार्यश्च—

ऊह्यो यज्ञपतिर्नो वा वृद्ध्यर्थोत्साहतोऽग्रिमः ।
प्रत्यक्षोक्त्या कृत्स्नमन्त्र इडार्थो नोहनं ततः ।।

अत्र विस्तरे सिद्धान्तो यथा—प्रत्यक्षश्रुत्या कृत्स्नो मन्त्र इडोपह्वाने विनियुक्तः । एकवाक्यत्वं च कृत्स्ने मन्त्रे उपलभ्यते । प्रकरणं चेदमिडायाः । ततः श्रुति-वाक्यप्रकरणैर्विरोधान्न लिंगविनियोगः सम्भवति । तदभावे च यज्ञपतिवृद्धि-प्रतिपादकमवान्तरवाक्यमिडाप्रतिपादकेन महावाक्येन सहैकवाक्यतामापन्नामिडां प्रशंसति । प्रशंसा चैकवचनान्तेनापि यज्ञपतिशब्देन सिद्ध्यतीति नास्ति सत्रे तदूहः ।

पत्तेः। [२६]निवारानखावपनपरिधिमध्यशनत्रकपदेषु मन्त्रस्य संस्काराणामूहो भवति। [२७]मन्त्रेषु तु अष्टधाविकार ऊहः प्रातिपदिकस्य सूर्याय जुष्टमिति, लिङ्गस्य छागाय वपायै मेदस इति। वचनस्य प्राजापत्येषु छागानां वपाभ्यो मेदसामिति। प्रातिपदिकलिङ्गयोः अदित्यै जुष्टमिति प्रातिपदिकवचनयोः विश्वेभ्यो देवेभ्यो जुष्टमिति। लिंगवचनयोर्विशा आलभेतेत्यत्र प्राभ्योऽग्नि

---

२६। निवार इत्यादिना मन्त्राणां संस्काराणामूहो भवतीति प्राकरणिकीं सूचनां ददाति ग्रन्थकारः।

२७। मन्त्रेषु कथमष्टधाविकार ऊहो भवति, तस्योदाहरणं क्रमेण प्रातिपदिकस्य सूर्ययेत्यादिना ददाति ग्रन्थकारः। स च सौर्यादिविकृतावतिदिष्टमन्त्रे वैकृतद्रव्यादिवाचकपदोहाधिकरणे जैमिनीये प्रकृतौ यथोत्पत्तिवचनमर्थानां तथोत्तरस्यां ततो तत्प्रकृतित्वादर्थे चाकार्यत्वात् (९-३-१) इति सूत्रे विचारित।

अत्राहुर्भाष्यकाराः सिद्धान्ते—प्रकृतौ यथोत्पत्तिवचनमर्थानां कृतं मन्त्रं तथोत्तरस्यामपि ततो विकृतौ तेनैव मन्त्रेण वचनं कर्तव्यम्। तत्प्रकृतित्वात्। तथा प्राप्त इदमुच्यते। नैतदेवम्। अर्थे चाकार्यत्वात् इति। एतावर्थौ अग्निव्रीहिशब्दौ सूर्यं नीवारं च नाभिदध्याताम्। च शब्दोऽत्र तुशब्दस्यार्थे। मन्त्राणां चार्थवचनं कार्य, न स्वरूपम्। स्वरूपे ह्यदृष्टं कल्पयितव्यम्। अर्थवचनेन दृष्ट उपकारः। तस्मादूहितव्याविति।

एतद्भाष्यव्याख्याने कुमारिलश्रीचरणैरूहस्य प्रकारभेदं न दर्शयित्वा षडंगानि प्रदर्शितानि। तथा—मन्त्रविषय इदानीमूहश्चिन्त्यते। स च षडंगः। यद्यस्यपराः मन्त्राः' मुख्यार्थाभिधायिनश्च, अपूर्वप्रयुक्ताश्च धर्माः प्रकृतौ, समवेतार्थाभिधायिनोऽपरार्थाश्च। यदि वोच्यते देवता विकृतिरिति। तथोहोप्यष्टविधः। क्वचित्प्रकृतिरूह्यते। यथा सूर्यायेति। क्वचिल्लिंगमूह्यते। यथा वसुरसि रुद्रोऽसीति। क्वचिद्वचनमूह्यते। यथा प्राजापत्ये छागानामिति। क्वचित् प्रकृतिश्च लिगंच, आदित्यं जुष्टमिति। क्वचित् प्रकृतिवचने विश्वेभ्यो देवेभ्य इति। क्वचिल्लिंगवचने प्राभ्योग्नामिति। क्वचित्त्रयाणामपि। यथा यथा घृतप्रोक्षणे घृतदेव शुद्धमसि। क्वचिदभ्यासः, एकधैकधेति यथा। प्रकृत्यूहस्तत्र प्रथमे पादे प्रायेण चिन्तित इति।

प्राकरिणकग्रन्थकारस्तु तन्त्ररत्नदिशा विविच्य तत्पंक्तिस्वरूपं विशिष्योट्टङ्कयति। कुमारिलस्वामिनां टुप्टीकाव्याख्याने पार्थसारथिमिश्राः एतमेव विषयमुज्जहार यं विप्रमिश्रो जग्राह। तद्यथा—तथोहोऽपि स्वयमष्टविधः क्वचित्।

**भरतेति निगद । प्रातिपदिकलिंगवचनानाम् आपो देवी शुद्धाः स्थेति प्रोक्षण्य-भिमन्त्रणमन्त्रे । घृतं प्रोक्षणमिति विकृतौ घृतदेवशुद्धमसीति । अभ्यासो यथा पशुगणे एकधा त्वचमित्ययं निगदः एकधैकधा इत्यभ्यस्यते । एवं प्राति-पदिकलिंगयो र्बहूनां यथावस्थितस्य चाभ्यासादष्टधा विकृतिः ।**

**प्रकृत[२८]मनुसरामः । तत्र कात्यायनः[२९] । यथार्थमूहश्चोदितो न प्रकृतावपूर्वत्वाद् विकृतौ वचनात् । विष्णुः[३०] (२१-२) एकवन्मन्त्रानूहेति ।**

---

प्रकृतिरूह्यते सूर्याय जुष्टमिति, लिंगं वचनं च तदवस्थम् । क्वचिल्लिंगमूह्यते, यथा वस्वसि रुद्रोऽसि इत्येकहायिन्यां मन्त्रो वसुरसि रुद्रोऽसि इत्येवमूह्यते साण्डे । अत्र प्रकृतिवचनं तदवस्थम् । क्वचित् वचनमूह्यते, यथा छागस्य वपाया मेदसः इत्ययं मन्त्रः प्राजापत्येषु छागानामित्येवमूह्यते । तत्र प्रकृतिलिंगं च तदवस्थम् । क्वचित् प्रकृतिलिंगं चोह्यते, यथा अग्नये जुष्टमित्येतददित्यै जुष्टमिति । अत्र हि वचनं तदवस्थम् । क्वचित् प्रकृतिवचने उह्येते लिंगं तु तदवस्थम् । यथा अग्नये जुष्टमिति विश्वेभ्यो देवेभ्यः इति । क्वचिल्लिंगवचने ऊह्येते, यथा प्रास्मा अग्नि भरत इति । अत्रास्मैपदं पुल्लिंगैकवचनम् मल्हा आलमेत इत्या-दिषु प्राभ्योऽग्निम् इत्येवं स्त्रीलिंगबहुवचनरूपेणोह्यते । अत्र प्रकृतिस्तदवस्था । क्वचित्त्रयाणामपि प्रकृतिल्लिंगवचनानामूहः, यथा आपो देवी शुद्धाः स्थ इति प्रोक्षणाभिमन्त्रार्थो मन्त्रः । तत्रापीदं स्त्रीलिंगबहुवचनान्नम् । घृतं प्रोक्षणम् इति निहिते घृते प्रोक्षणे घृतमेव शुद्धमसि इत्येवं नपुंसकलिंगैकवचने घृतपद-निक्षेपे सर्वमेवान्यथा भवति । क्वचित्तु तदवस्थस्य सकलस्य पदस्याभ्यासः, यथा पशुगणे एकधाकधेत्येकधाशब्दोऽभ्यस्यते । तत्र यथा प्रकृतेरूहः, तथा अर्थाभिधानं संयोगात् इत्यादिना प्रथमे पादे प्रायेण चिन्तितः इति ।

२८ । मीमांसादर्शनमूहविषयं तत्पक्षपातिभ्यो जैमिनि-शबर-कुमारिल-पार्थसारथिमिश्रप्रभृतिकर्तृकग्रन्थेभ्यः पंक्त्युट्टंकनपुरःसरं विविच्य श्राद्धमन्त्रे तदुपयोजयितुकामो ग्रन्थकारः प्राकरणिकं श्राद्धविषयमुत्थापयति प्रकृतमनुसराम इत्यादिना ।

२९ । तत्रादौ कात्यायनसूत्रमुपदेशोपष्टम्भवचनत्वेत उपन्यस्यति । अत्रायं भावो यत् प्रकृतिगताणां धर्माणां विकृतिषु चोदकेन प्राप्तौ प्रयोजनं वीक्ष्य तत्रो-हस्यावसरः फलति । तत्र हेतुरपूर्वम् । क्वचिच्च वचनद्वारेणैव ऊहसद्भावो घटते । अपूर्व तु न्यायद्वारेण अगत्या आश्रयितुं शक्यम् । किन्तु न्यायापेक्षया वचनस्य बलवत्त्वात् तद्द्वारेणैव मन्त्रेषु ऊहो भवतीति सारः ।

३० । तत्र वचनप्राप्तोहोदाहरणं विष्णुस्मृतिवचनोपन्यासेन विधत्ते ।

(विष्णुस्मृतिः—७५।७) ³¹मातामहानामप्येवं श्राद्धं कुर्यात् विचक्षणः ।
मन्त्रोहेन यथान्यायं शेषाणां मन्त्रवर्जितम् ॥

---

पार्वणश्राद्धस्य निखिलश्राद्धानां प्रकृतित्वेन एकोद्दिष्टश्राद्धस्य पार्वणप्रकृतिकतया तद्विकृतित्वात् त्रिपुरुषोद्दिष्टार्थानामेकोद्दिष्टे एकपुरुषोद्दिष्टरूपेणोहो भवतीति एकवन्मन्त्रानूहेदेकोद्दिष्टं इति सूत्रस्य भावः । अत्राह वैजयन्तीकारो नन्द-पण्डितो यथा—

यावदुक्तेतिकर्तव्यतानैराकांक्षादमन्त्रत्वप्राप्तावाह । प्रकृतौ पार्वणे ये बहुवचनान्ताः मन्त्राः, ते विकृतावेकोद्दिष्टे एकवचनान्तत्वेनोह्याः । वचन-ग्रहणमुपलक्षणम् । तेन प्रकृतेरप्यूहः, मुख्यदृष्टार्थतास्वार्थसमवेतार्थतादीनामूह-कारणानां तुल्यत्वात् । यथा आश्वलायनानामर्घ्यपात्रतिलावापे तिलोऽसि सामदेवत्यः इति मन्त्रे (आश्व० गृ० सू० ४-७-८) बदुवचनान्तपितृशब्दस्थाने एकवचनान्तपितृशब्दस्योहः । शुन्धन्तां पितरः इत्यत्र तु प्रकृतिमात्रस्यैवोहः, न वचनस्य, प्रकृतावसमर्थत्वात् । एवमन्येऽपि शाखाभेदेन ग्राह्याः । एकव-दूहेनैव एकोद्दिष्टत्वसिद्धावेकोद्दिष्टवचनमितः प्राचीनेषु अमन्त्रत्वबोधनाय ।

नवश्राद्धममन्त्रं च पिण्डोदकविवर्जितम् ।

इति परिशिष्टात् (आश्व० गृ० परि० २०-६) इति ।

३१। विष्णुस्मृतेः द्वितीयं वचनमुपन्यस्य वाचनिकमूहमुपसंहरति ग्रन्थकारः । तत्रायं भावो यत् पितृश्राद्धस्य विकृतित्वेन मातामहश्राद्धप्राप्तौ पितृश्राद्धगताः प्राकृतिकाः धर्माः चोदकेन प्राप्ता मातामहश्राद्धे । यत्र मन्त्रे पितरः इति उक्तमस्ति, तत्र मातामह इति ऊहितव्यमिति । एतद्वचनव्याख्याने नन्दपण्डित आह । यथा—पूर्वोक्तविध्यतिदेशमाह । येन विधिना यत्राष्टकादौ व्युत्क्रम-मृतौ ये यथा पित्रादिश्राद्धमुक्तम्, तथैव तत्र तेन क्रमेण मातामहानामपि श्राद्धं कुर्यात् । तद्यथा—पितरो यत्र पूज्यन्ते तत्र मातामहा अपि इति वचनेन जीवदजीवत्पितृकयोरविशेषेण मातामहश्राद्धं प्राप्तम् । तत्र सर्वं पूर्वोक्त विश्वेदेवादिविसर्जनान्तमतिदिश्यते । ...................... । तच्च यत्र नाममात्रेषु वैदिकमन्त्रेषु वा पितॄनावाहयिष्ये शुन्धन्तां पितरः इत्यादौ पितृशब्दः तत्र यथान्यायं प्रथमान्तं द्वितीयान्ते द्वितीयान्तमित्यादिप्रकारेण माता-महशब्दस्योहेन कार्यम् । ऊहापवादमाह । शेषाणां पितृव्यमातुलभ्रात्रादीनां श्राद्धममन्त्रकमिव, पितृपदवन्मन्त्ररहितमेव कुर्यात् । तेन च शुन्धन्तां पितरः इत्यादिमन्त्रसाध्यं क्रियामात्रमेव, न मन्त्रप्रयोग इति ।

अत्र वाचनिक एवोहः। तत्र[३२] तिलोऽसीति मन्त्रे स्वाहापदमंगुष्ठावगाहन[३३]मन्त्रे कव्यपदं प्रकृतिमन्त्रत्वादेवानूह्यम्। तिल[३४]स्तावकत्वेनास्वार्थत्वात् वा यज्ञपति[३५]पदवत्। [३६]विज्ञानगिरिचरणास्तु विष्णोः हव्यं च कव्यं च ब्रूयात् रक्षेति वै क्रमादिति आम्नातमेव मन्त्रद्वयं दर्शितवन्तः। तच्च मन्त्रद्वयं वैकल्पिकत्वाद् वाजसने(ये) तु पितृपदे जपमन्त्रत्वादूहसम्भावनापि नास्ति। यत्तु स्नगूहन-

---

३२। प्रकृतिमन्त्रस्य ऊहो न भवति। तिलोऽसि मन्त्र इत्थम्—

तिलोऽसि सोमदैवत्यौ गोसवो देवनिर्मितः।
प्रयत्नवद्भिः पितॄन् लोकान् प्रीणाहि नः स्वधा॥ इति

अत्र स्वधास्थाने स्वाहापदमूहेन न दीयते इत्यर्थः।

३३। अंगुष्ठावगाहनमन्त्रो यथा—

इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्।
समूढमस्य पांसुरे॥ (ऋग्—१-२२-१७) इति।

३४। तिलोऽसि सोमदैवत्य इति मन्त्रे—तिलस्य स्तावकत्वेनाभिप्रायसिद्धया प्रशंसार्थवादोऽयम्।

३५। यज्ञपतिपदे विधिस्वारस्याभावात् अर्थवादत्वेन स्वार्थासिद्धौ नोहः।

३६। श्राद्धे ब्राह्मणसम्प्रदानकान्ननिवेदनप्रसंगप्रसक्तस्य याज्ञवल्क्यवचनस्य

दत्त्वान्नं पृथिवीपात्रमिति पात्राभिमन्त्रणम्।
कृत्वेदं विष्णुरित्यन्ने द्विजांगुष्ठं निवेशयेत्॥ (१-२३८)

इत्याख्यस्य व्याख्यानावसरे मिताक्षरायां विज्ञानेश्वर आह—

अन्नमोदनसूपपायसघृतादिकं भाजनेषु दत्त्वा पृथिवी ते पात्रमित्यादिना मन्त्रेण पात्राभिमन्त्रणं कृत्वा इदं विष्णुर्विचक्रमे (ऋ० १-२२-२७) इत्यनयार्चा अन्ने द्विजांगुष्ठं निवेशयेत्। तत्र च वैश्वदेवे यज्ञोपवीती विष्णो हव्यं रक्ष इति। पित्र्ये प्राचीनावीती विष्णो कव्यं रक्ष इति, ......................

विष्णो हव्यं च कव्यं च ब्रूयाद्रक्षेति वै क्रमात्

इति मनुस्मरणादिति। इति।

एतद्विषयं प्रकृत्य पैठीनसिराह—पृथिवी ते पात्रं द्यौरपिधानं ब्राह्मणस्य मुखेऽमृतं जुहोमि स्वधा। इदं विष्णुर्विचक्रम इत्यनेनांगुष्ठमन्ने चोदके चावधार्य व्याहृतिपूर्वां गायत्रीं जप्त्वा वाग्यतः स्वदतेति ब्रूयात् इति। (अपोरार्कोधृते या० स्मृ०-१-२३८)

मन्त्रे प्रकृतावप्यूहस्य यथादैवमन्यदिति काण्वशाखीयवचनबलादेव । यत्तु कर्काचार्यैः प्रकृतावपि देवानामसि इत्यत्र ऊहः साम्नाय्ययाजिनः प्रदर्शितो [37]धान्यमसीत्यत्र च नोक्तः स्रगूहनस्थल इव शाखान्तरादेवेति प्रतिभाति ।

अन्नादि[38]संकल्पवाक्यस्य ब्रह्मपुराणीयामुकसंज्ञे तत्तुभ्यमन्नं स्वधा नम इति वचने सर्वनामद्वयस्य गोत्रनामोपलक्षणत्वात् सर्वनामस्थाने स्वशब्द[39]प्रयोगः । भवदेवभट्टास्तु[40] यत्राम्नातस्य सर्वनाम्नः प्रयोगप्रामाण्यं विधिसद्भावात् यथा—प्रवरनामधेयानि यजमानस्य कीर्त्तयेदिति विधायकत्वादमन्त्रत्वम् । यत्र[41] तु

---

उक्तवाक्येभ्यः पूर्वमंगुष्ठनिवेशनं पश्चादन्नसंकल्प इति क्रमः प्रतीयत इति अपरार्को निर्मलीचकार ।

३७ । धान्यमसीति मन्त्रो यथा—(शु० य० वे० १-२०)—

धान्यमसि धिनुहि देवान् प्राणाय त्वोदानाय त्वा व्यानाय त्वा । दीर्घामनु प्रसितिमायुषे धां देवो वः सविता हिरण्यपाणिः प्रतिगृभ्णात्वच्छिद्रेण पाणिना चक्षुषे त्वा महीनां पयोऽसि इति ।

३८ । अन्नादिसंकल्पवाक्यं ब्रह्मपुराणे यथा—

ततो मधुघृताक्तं तु सौष्णमन्नं तिलान्वितम् ।
गृहीत्वा देवतीर्थेन प्रणवेनैव तत्पुनः ॥
एतद्वोऽन्नमितीत्युक्त्वा विश्वादेवांश्च संयजेत् ।

++ ++ ++

पितृभ्यश्च ततो दद्यादन्नमामन्त्रणेन तु ।
अमुकामुकगोत्रैतत्तुभ्यमन्नं स्वधा नमः ॥ इति ।

३९ । सर्वनाम्नां विशेषपदस्थाने प्रयोगसामर्थ्यात् तत्तुभ्यमिति ब्रह्मपुराणीयवचने अमुकामुकसंज्ञयोः मूलनाम उच्चारयितव्यमिति ग्रन्थकर्तुराशयः । त्यदादिसर्वनाम्नां बुद्धिस्थे शक्तिरिति अभियुक्तोक्त्या यज्ञदत्तादिनाम, भारद्वाजादिगोत्रम् इतिवद् वा वदितव्यम् ।

४० । एतस्य प्रकरणस्य मन्त्रोहगतविमर्शकत्वे ब्रह्मपुराणीयवचनजातेषु सर्वनामपदानां विधिवाक्यघटितपदसमवेतत्वे मन्त्रत्वाभावात् ऊहो न भवति इति भवदेवभट्टमतं पूर्वपक्षत्वेनोपन्यस्यति ग्रन्थकारः ।

४१ । सर्वनामपदघटकतया मन्त्ररूपत्वेन च वाक्यस्य कस्यचिदपि सत्त्वात् ब्रह्मपुराणीयवचनस्यापि पौराणिकमन्त्रत्वं फलतीति ब्रुवता ग्रन्थकारेण भवदेवमतं खण्डितम् । अत्राप्युदाहरणम्—असौ स्वर्गाय इति ।

**सर्वनाम्नः तत्स्थाने शब्दान्तरसमर्पकत्वं स्वयमेव वोपस्थापकत्वं यथा—असौ स्वर्गायेत्यत्र प्रारभ्य अग्निमित्यत्र वा मन्त्रत्वमेव, तद्विशेषनाम्नामानन्त्यादाम्नातुमशक्यत्वाद्[४२] विशेषप्रतिपादनार्थमेव तदुच्चारणात्। अतो विशेषणस्य[४३] नामपदमध्ययनविध्यापितमिति तेषामेवि मन्त्रत्वमूचुः। एवं च सर्वत्र[४४] ऊह एव। अन्वष्टकायां[४५] प्रेतश्राद्धे च संकल्पवाक्य ऊह एव प्रयोजनं[४६] प्रायश्चित्तवैलक्षण्यम्। ऊहस्य[४७] व्याकरणस्मृतिसिद्धत्वेन अन्यदेशहोमः। अनूहे[४८] स्वस्ववेदोक्ताध्वर्यवादिप्रायश्चित्तमिति।**

---

४२। विशेषपदपरिवर्त्ते सर्वनाम्नां प्रयोगे हेतुरत्र उपन्यस्यते तद्विशेष इत्यादिना। वस्तुगत्या व्यक्तयो बह्व्यो भवन्ति संसारस्य अनादित्वात् व्यक्तीनामानन्त्येन तन्नाम्नामपि आनन्त्यात्। एकैकशो गणनाया असंभवात् सर्वनामद्वारेण मन्त्रवाक्ये तन्नामोच्चारणात् प्रयोजनवशेन ऊहं विधाय व्यक्तिस्वीकारो भवितव्य इति निष्कलंकोऽभिप्रायो ग्रन्थकर्तुः।

४३। विधि-मन्त्र-नामधेय-निषेधार्थवादात्मके वेदे समेषामध्ययनविधिद्वारेण प्राप्तौ नामधेयस्य तदन्तर्गतत्वेन तस्यापि अध्ययनविधिचोदितत्वात् नामधेयस्य विशेषापरपर्यायत्वेन सत्त्वात् तत्पदघटितवाक्यान्मन्त्रत्वमूचुरिति उक्तम्।

४४। सर्वत्र नाम यत्र यत्र प्रयोजनवशेन व्यवस्था अपेक्षिता, तत्र तत्र ऊहो भवतीति आशयः।

४५। अन्वष्टकायां व्यक्तिभेदोऽस्ति इतरश्राद्धापेक्षया, प्रेतश्राद्धेऽपि च। अत ऊहो भवति तत्र।

४६। अन्यथा प्रायश्चित्तं भवति। प्रयोजनसत्त्वेनापि ऊहाकृते प्रायश्चित्तविधानात् तदभावप्रयोजनार्थमेव ऊहकरणमिति सिद्धम्।

४७। व्याकरणज्ञानरहितेन प्रयोजनक्षेत्रे ऊहितुं न शक्यते इति व्याकरणस्मृतेरध्ययनत्वप्रतिपादनस्थले साक्षाद् पतञ्जलिराह (महाभाष्यम्—भा० १ पृ १३) यथा—कानि पुनः शब्दानुशासनस्य प्रयोजनानि। रक्षोहागमलघ्वसन्देहाः प्रयोजनम्। रक्षार्थं वेदानामध्येयं व्याकरणम्। लोपागमवर्णविकारज्ञो हि सम्यग्वेदान् परिपालयिष्यति। ऊहः खल्वपि। न सर्वैर्लिङ्गैर्न च सर्वाभिर्विभक्तिभिर्वेदे मन्त्रा निगदिताः। ते चावश्यं यज्ञगतेन यथायथं विपरिणमयितव्याः। तान्नावैयाकरणः शक्नोति यथायथं विपरिणमयितुम्। तस्मादध्येयं व्याकरणम् इति।

अथ पिण्डदानमन्त्रोहविचारः[४९]

तत्र याज्ञवल्क्यः[५०] (१-२४२)

सर्वमन्नमुपादाय सतिलं दक्षिणामुखः ।
उच्छिष्टसन्निधौ पिण्डान् दद्यात् वै पितृयज्ञवत् ॥

इति वचनादतिदेशे° सिद्धे विचार्यते ।

कात्यायनो[५१] यथा—अविभज्य[५२] पिण्डान् दद्यादाचान्तेष्विति चैके ।

---

४८ । ऊहनिमित्तं प्रयोजनीयतायां सत्यां क्षेत्रे तदकरणे प्रत्यवायः अङ्गहानिश्च । तदपशमयितुं प्रायश्चित्तं क्रियते । तत् प्रातिस्विकाध्वर्यवे लभ्यते इति भावः ।

४९ । ऊहभेदं प्रकृत्य इदानीं पिण्डदाने विनियुक्तानां मन्त्राणामूहं विचारयति ग्रन्थकारः ।

५० । सर्वमन्नमित्यादिवचनोपरि विचारं प्रस्तूय पितृयज्ञवत् इत्यत्र पितृयज्ञगतान् धर्मान् श्राद्धकर्मणि अतिदेशेन चोदकद्वारा प्रापय्य ऊहसद्भावो निरूप्यते । अत्रायं विशेषो यत् तिलमिश्रस्यान्नभागस्य पिण्डपितृयज्ञकल्पेन दानमिति । एतदुक्तं मिताक्षरायां यथा—पिण्डपितृयज्ञकल्पातिदेशेन चरुश्रपणसद्भावे अग्नौकरणशिष्टचरुशेषेण सह सर्वमन्नमुपादायाग्निसंनिधौ पिण्डान् दद्यात् । तदभावे ब्राह्मणार्थं कृतमन्नं सर्वमुपादाय सतिलं तिलमिश्रं दक्षिणामुख उच्छिष्टसंनिधौ पिण्डपितृयज्ञकल्पेन पिण्डान् दद्यात् इति ।

अतिदेशे ऊहविचारस्य क्षेत्रावगमेन तिलमिश्रितस्य अन्नस्य पितृयज्ञापेक्षया विशेषत्वमपरार्कोऽपि दर्शयति, तद्यथा—प्रकृतं सर्वप्रकारमन्नं स्तोकशः स्तोकशः क्वचित् पात्र उपादायोद्धृत्य पिण्डपितृयज्ञविधानेन चान्नपानपिण्डान् दद्यात् । सतिलदक्षिणामुख इति पितृयज्ञाद् विशेषः । उच्छिष्टसंनिधौ नाग्निसंनिधावित्यर्थ इति ।

५१ । कात्यायनवचनं संपूर्ण यथा—(श्राद्धसूत्रकण्डिका—३) उद्धृत्य घृताक्तमन्नं पृच्छत्यग्नौ करिष्य इति कुरुष्वेत्यनुज्ञातः पिण्डपितृयज्ञवद्धुत्वा हुतशेषं दत्त्वा पात्रमालभ्य जपति पृथिवी ते पात्रं द्यौरपिधानं ब्राह्मणस्य मुखे अमृते जुहोमि स्वाहेति वैष्णव्यर्चा यजुषा वांगुष्ठमन्नेऽवगाह्यापहतस्व इति तिलान् प्रकीर्योष्णं

---

° वचनातिदेशे इति ख पुस्तकपाठः ।

(का० श्रौ० सू० क० ३) अत्र मातृसांवत्सरिके[५३] अन्वष्टकादौ च······इत्यूहः ।

---

स्विष्टमन्नं दद्याच्छक्त्या वाशनत्सु जपेद् व्याहृतिपूर्वां गायत्रीं सप्रणवां सकृत् त्रिर्वा रक्षोघ्नीः पित्र्यमन्त्रान् पुरुषसूक्तमप्रतिरथमन्यानि च पवित्राणि तृप्तान् ज्ञात्वान्नं प्रकीर्य सकृत् सकृदपो दत्त्वा पूर्ववद्गायत्रीं जपित्वा मधुमतीभिर्मधुमध्विति च तृप्ताः स्थेति पृच्छेति तृप्ताः स्म इत्यनुज्ञातः शेषमन्नमनुज्ञाप्य सर्वमन्नमेकतोद्धृत्योच्छिष्टसमीपे दर्भेषु त्रींस्त्रीन् पिण्डानवनेज्य दद्यादाचान्तेष्वित्येके आचान्तेषूदकं पुष्पाण्यक्षतानक्षय्योदकं च दद्यादघोराः पितरः सन्तु सन्त्वित्युक्ते गोत्रं नो वर्धतां वर्धतामित्युक्ते दातारो नोऽभिवर्धन्तां वेदाः सन्ततिरेव च। श्रद्धा च नो मा व्यगमद् बहुधेयं च नोऽस्त्वित्याशिषः प्रतिगृह्य स्वधा वाचनीया । सपवित्रान् कुशानास्तीर्य स्वधां वाचयिष्य इति पृच्छति वाच्यतामित्यनुज्ञातः पितृभ्यः पितामहेभ्यः प्रपितामहेभ्यो मातामहेभ्यः प्रमातामहेभ्यो वृद्धप्रमातामहेभ्यश्च स्वधोच्यतामित्यस्तु स्वधेत्युच्यमाने स्वधावाचनीयेष्वपो निषिंचति ऊर्ज्जमित्युत्तानं पात्रं कृत्वा यथाशक्ति दक्षिणां दद्यात् ब्राह्मणेभ्यो विश्वेदेवाः प्रीयन्तामिति दैवे वाचयित्वा वाजे वाजे वतेति विसृज्यामावाजस्येत्यनुव्रज्य प्रदक्षिणीकृत्योपाविशेत् इति ।

५२ । अत्र ग्रन्थकृदुद्धृतकात्यायनवचनं व्याख्यातं कर्काचार्येण यथा—तृप्ताः स्म इति ब्राह्मणैरनुज्ञातः शेषस्यान्नस्यानुज्ञां दापयित्त्वा सर्वमन्नमेकस्मिन् पात्रे उद्धरेत् । स चायं सर्वशब्दः शालिसूपापूपापेक्षया, न तु यावत् परिमाणं किंचित् सिद्धं तत्सर्वमिति । उच्छिष्टसमीपे इति स देशो लक्ष्यते, नोच्छिष्टमेव प्रतिषिद्धत्वात्तस्य । दर्भेषु त्रींस्त्रीन् पिण्डानवनेज्य दद्यादिति दर्भग्रहणमिहोपमूलसकृदाच्छिन्नोपलक्षणार्थम् । पिण्डपितृयज्ञवदुपचार इति सूत्रितत्वात् । परिसंख्यानमिति चेन्न । उच्छिष्टसमीपोपदेशात् । त्रींस्त्रीन् पिण्डानिति वीप्सा मातामहविषया । आचान्तेष्वेके उभयशास्त्रत्वाद् विकल्पः । आचान्तेषूदकं पुष्पाण्यक्षतानक्षय्योदकं च दद्यादित्येवमादि बहुदेयं च नोऽस्तु इत्येवमन्तं सूत्रम् । आचान्तेषु ब्राह्मणेषु तेभ्य उदकादिदानम् । तच्च पूर्वं दैवे । ततोऽपसव्यं पित्र्ये । पित्र्ये अपि केचित् सव्ये नेच्छन्ति दानसंयागात् । तन्न । पिण्डपितृयज्ञवदुपचार इति ह्युपदेशात् इति ।

५३ । याज्ञवल्क्य-कात्यायनवचनयोः याज्ञवल्क्यवचनेन पितृयज्ञधर्माणां श्राद्धे अतिदेशे प्राप्ते कात्यायनवचनेन प्रक्रियादशायां तेषामुपयोगप्राप्तौ प्रयोजनवशतया ऊहसद्भावमवतार्य ग्रन्थकृत् मातृसांवत्सरिक-अन्वष्टकादिषु तत्परा-

**न च असमवेतार्थत्वात् सर्वं.........विध्यत्वेन प्रतिपत्तिकर्मसम्बन्धिदेवतावाचित्वादवभृथेष्टावग्नीवरुणौ[५४] स्विष्टकृतौ यजतीत्यत्र यजप्रैषवत् ।**

---

मृशति । इतद् व्याख्याति कात्यायनवचनव्याख्याने गदाधरः—मन्त्रश्चायं समवेतार्थः । अतोऽस्य मातृश्राद्धे मातृभ्यः पितामहेभ्य इत्याद्यूहः संख्यासमवेतार्थः इति ।

५४ । आकीर्णकरस्य द्रव्यस्य विहितदेशे प्रक्षेपः प्रतिपत्तिरिति लक्षणद्वारा प्रतिपत्तेरुपयुक्तसंस्कारविशेषत्वे अवभृतेष्टेरेतद्धर्मकत्वेन प्रतिपत्तित्वम् । श्राद्धस्य कर्मधर्मत्वेन तत्र पितॄणां देवतात्वे उपयुक्तसंस्कारवत्तया ब्राह्मणस्य च प्रतिपत्तिस्थानत्वेन इति आपस्तम्बोक्तेः अवभृथरूपत्वं श्राद्धस्येति स्थितम् । तदर्थं ग्रन्थकृत् अग्नीवरुणौ यजतीति श्रौतवाक्यविन्यासेन यजप्रैषवदिति वतिप्रत्ययेन सादृश्यं स्थापयति । सोऽयं विषयः जैमिनीययोः स्विष्टकृद्देवतान्यत्वे तच्छब्दत्वान्निवर्तेत । संयोगो वार्थापत्तेरभिधानस्य कर्मजत्वात् (१०-५-३४, ३५) इति सूत्रयोर्विचारितः ।

तत्र भाष्यकाराणामयमाशयो यत्—अस्त्यवभृथः, वारुणेनैककपालेनावभृथं यन्तीति । तत्रेदमाम्नायते—अग्नीवरुणौ स्विष्टकृतौ यजतीति । तत्रायमर्थः सांशयिकः । किं निगमे स्विष्टकृच्छब्दकं वचनं कर्त्तव्यमुत सस्विष्टकृच्छब्दकमिति । अत्र सिद्धान्तो यथा—सस्विष्टकृच्छब्दकं वचनं कर्त्तव्यमिति । तत एतद् वर्ण्यते । गौणमिदमभिधानमिति । स्विष्टकरणात् स्विष्टकृदिति गम्यते । गम्यमाने न न्याय्यमविवक्षितं कल्पयितुम् । क्रियानिमित्तत्वमवयवशब्देभ्यो गम्यते । समुदायस्य चाग्नावप्रयोगाल्लोकेऽग्न्यभिधानत्वं नाध्यवसीयते । तस्मान्न सांशयिकः । एवं चेत् सस्विष्टकृच्छब्दकं वचनं कर्त्तव्यम् इति ।

अत्र स्विष्टकृतौ अग्निवरुणदेवताकयागनिमित्तं प्रैषो भवति । तत्र विचिकित्सापन्ने विषये समाधीयते सस्विष्टकृत् अग्नीवरुणौ आवह इति प्रैषो भवति । पार्थसारथिमिश्राः तदीयदीपिकायामेव निश्चयीचक्रुः । अवभृथे श्रूयते—अग्नीवरुणौ स्विष्टकृतौ यजतीति किं निगमेष्वस्विष्टकृच्छब्दकं वचनमग्नीवरुणावावहेति उत स्विष्टकृच्छब्दकमग्नीवरुणौ स्विष्टकृतावावहेति । यद्येषा वचनव्यक्तिः स्विष्टकृत्कार्येऽग्नीवरुणाविति ततोऽग्नीवरुणयोर्देवतात्वादस्विष्टकृच्छब्दकम् । अथैवं वचनं व्यज्यते यत् स्विष्टकृद्गुणेन सगुणां देवतां यजति तदाग्नीवरुणौ न केवलमग्निमिति । ततः स्विष्टकृत्त्वेनाग्नीवरुणयोर्विधानात् सस्विष्टकृच्छब्दकमिति । इति ।

**लेपभाज[55]स्तृतीयाद्याः पित्राद्याः पिण्डभागिनः ।**
**पिण्डदः सप्तमस्तेषां सापिण्ड्यं साप्तपौरुषम् ।।**

---

अत्र प्राकरणिकविषयसाम्ये अयमेव निष्कर्षः यत् स्विष्टकृत्पदं क्विप् प्रत्ययेन निष्पन्नम् । तत्रैवायं पाणिनिस्वरसः सुकर्मपापमन्त्रपुण्येषु कृञः (पा० सू० ३-२-८९) इति पूर्वपक्षः । यतो हि अतीतार्थक्विबा एतन्निष्पद्यते । किन्तु स्विष्टं वै नेदं भविष्यति यदिमं राधयिष्यतीति अर्थवादेन सहैकवाक्यताहानौ सार्वकालिकक्विपा एतत्सिद्धौ स्विष्टकृतः सार्वकालिकत्वमिति । तदेव स्पष्टीकृतं युक्तिस्नेहप्रपूरण्यां ( १०-४-३४, ३५ ) वनस्पतौ विधिशब्दत्वाद् वनस्पतिशब्देनाभिधानेऽप्याह स्विष्टकृच्छब्दस्य विधिशब्दत्वान्न तेनाभिधानमित्युत्थितेः संगतिः । यद्येषेति । किं स्विष्टकृच्छब्देन लक्षिते कार्ये देवतात्वेनाग्नीवरुणविधिरिति स्विष्टकृत्त्वगुणकदेवतायां प्राकृतमग्निलक्षणगुणिनमपोह्य तत्राग्नीवरुणविधिरिति संशयनिष्कर्षः । न तु क्लृप्तयागेनेवोपपत्तौ ऋद्धिकल्पनायां प्रमाणाभावात् कथं पूर्वपक्षोऽत आह तत्रेति । भूताधिकारे सुकर्मपापमन्त्रपुण्येषु कृञः इत्यत्र कालोपपदप्रत्ययानामेव नियमाभ्युपगमने स्वादिष्वेव कृञः क्विबिति धातुनियमानंगीकारादुपपदान्तरे शास्त्रकृद् भाष्यकृद् इत्यादिवद्भूते क्विबन्तस्वष्टकृच्छब्दः तत्र स्विष्टं वै न इदं भविष्यति यदियं राधयिष्यामः इत्यादिष्वर्थवादेषु अनेन स्विष्टकृद्यागेनाराधितस्याग्नेः स्विष्टकरणत्वे त्ववगमेन स्विष्टकृद्यागसमये भूतस्य तस्याभावात् सुष्टु इष्टं यजनप्रधानं यागं कृतवान्नित्येवं रूपस्य योगस्यासम्भवेन प्रयोगनिर्वाहार्थं ऋद्धिरवश्यमंगीकर्तव्येत्यर्थः । वस्तुतस्तु स्विष्टकृच्छब्दः क्विप् च (पा० सू० ३-२-७६) इति क्विबैव व्युत्पाद्यः स च कालत्रयसाधारण इति भूतार्थसम्भवे वर्तमानार्थमादया योगसम्भवात् पूर्वपक्षोऽयं मन्दः । इति ।

अत्र यथा, सार्वकालिकक्विप्प्रत्ययद्वारा स्विष्टकृत्पदस्य निष्पन्नत्वेन यद्यत्कालमाश्रित्य प्रयोगोऽपेक्षते, तत्तत्कालस्य ऊहेन उच्यमानत्वं, तथा पित्रादिश्राद्धेषु कृतानां धर्माणां निखिलश्राद्धभागेऽतिदेशेन प्राप्तत्वेन मातृसांवत्सरिकादिषूहो भवति ।

५५ । चतुर्थाद्या इति पाठः मन्वर्थमुक्तावल्याम् (५-६०) श्राद्धेषु पितृपितामहानां पिण्डभागित्वेन, वृद्धप्रपितामहादीनां त्रयाणां लेपभागित्वेन च, पिण्डदात्रा सह सप्तपुरुषपूरणात् सापिण्ड्यं सिद्ध्यति । श्राद्धेषु एतेषां सप्तानां नामसंकीर्तनप्रयोजनपरतया यस्य कृते यत्र यत्र येन येन पिण्डो दीयते, तत्र

इति स्मरणात् विशेषणत्वेऽपि वा[५६] "दर्भैस्तृणीत हरितै" रिति बर्हिर्मन्त्र इव पुण्डरीकाणि बर्हींषि भवन्ति इति विकृतौ रक्तपदोहवदूहितव्य एव। अत्र

---

तत्र ऊहद्वारा तत्तन्नामप्रकथनं सिद्ध्यति। यतो हि एतेषां नामवाचकत्वेन विशेषणत्वम्। विशेष्यमनुपधावनौचित्यादेवं भवितव्यमिति वचनस्याशयः।

५६। एतं विषयं वैदिकोहप्रसंगेन तोलयति ग्रन्थकारो यत्—श्रीकाम-पुरुषेण मुद्गमयश्चरुः निरुप्यते। तत्र प्रकृतिवाक्येन दर्भैस्तृणीत हरितैरिति उक्तं, विकृतौ अतिदेशप्राप्तानां धर्माणां पुण्डरीके पर्यवसिते विशेष्यत्वेन पुण्ड-रीकस्योहनिष्पत्तौ तद्विशेषणत्वेन तद्गतं सत्त्वमपि ऊह्यते। यथैतत् भवति, तथा श्राद्धेषु सपिण्डकानां नाम्नां व्यक्तिविशेषस्य विशेषणत्वात् मन्त्रेषु ऊहः कर्तव्य इति। सोऽयं विषयो जैमिनीयेषु जातिनैमित्तिकं यथास्थानम्। अविकारमेके अनार्षत्वात्। लिंगदर्शनाच्च। विकारो वा तदुक्तहेतुः। लिंगं मन्त्रचिकीर्षार्थम्। नियमो वोभयभागित्वात् (९-३-३, ८) इति सूत्रेषु विचारितः।

अत्राहुर्भाष्यकाराः सिद्धान्ते यथा—जातिशब्दो नैमित्तिकश्चोभावप्यूहितव्यौ। तत एतद्वर्ण्यते। स्तरणद्रव्यस्य गुणविवक्षया प्रयुज्यत इति। यद्यपि हारित्वं श्रुत्या हरिशब्दोऽभिवदति, तथापि हरितगुणवचनमनर्थकम्। अदृष्टं हि तत्र कल्पनीयं स्यात्। तच्चाशक्यम् इष्टे सम्भवति। स्तरणद्रव्यगतं तु लक्षणयाभिवदति। तद्वचने तु दृष्टं प्रयोजनं, स्तरणदृष्टाप्रत्यायनम्। एवं चेदिहापि स्तरणद्रव्यस्य पुण्डरीकस्य गुणः प्रत्याययितव्यः। तस्मात्तद्वाचक ऊहितव्यो रक्तशब्द इति।

माधवाचार्यैरेतद्विषयीकृत्य जैमिनीयन्यायमालायामुच्यते—

हरितोक्तिः पौण्डरीके न त्याज्या त्यज्यते ऽथवा।
नादृष्टार्थत्वतो मैवं गुणिद्रव्यस्य भासनात्॥

इति। अत्र दृष्टार्थत्वलाभेन समवेतार्थत्वात्। तस्मात् पुण्डरीकैस्तृणीत रक्तैः इत्यूहनीयम्। इति।

विशेषस्य गुणकीर्तनपरतया विशेषणस्योक्तौ रक्तात्मगुणविशेषणयुक्तत्वेन पौण्डरीकस्योहः संगच्छते तथा श्राद्धे यत् कृते पिण्डदानं क्रियते तद्विशेषण-संयोगेन तत्रोच्चारयितव्यमिति सारः।

पार्थसारथिमिश्राः टुप्टीकाव्याख्याने तन्त्ररत्ने एवमूचु र्यत् स्वगुणद्वारेणा-

**पितरो[५७] मादयध्वं यथाभागमावृषायिध्वम् । अमी मदन्त पितरो यथाभागमावृषायिषत इत्यत्र प्रेत मादयस्व यथाभागमावृषायस्व । अमी मदन्त प्रेत यथाभागमावृषायिष्वेत्येवं [५८]प्रातिपदिकवचनयोः स्त्रीप्रेतैकोद्दिष्टे अत्र प्रेत मादयस्वेत्येवं लिंगस्याप्यूहः । [५९]एकोद्दिष्टमातामहश्राद्धे अन्वष्टकायां न त्रयाणामूहः । कथमुभयथा हि पितृशब्दप्रयोगो जनकत्वोपाधिना पितृलोकसम्बन्धेन च । यत्र[६०] जनकत्वोपाधिना पितृशब्दप्रयगोऽसावेतदिति स्वधावाचनमन्त्रे वा तत्रोहः । अन्यथा[६१] यजमानस्य पितृप्रभृतिजनितपितृभ्यः पितामहेभ्यः इत्याद्यनर्थकं स्यात् । न[६२] चात्र जनकत्वोपाधिना पितृशब्दप्रयोगे प्रमाण-**

---

पूर्वीये द्रव्यप्रकाशेन दृष्टे सति नादृष्टकल्पना युक्ता । तस्मात् पुण्डरीकेष्वपि स्वगुणं प्रकाशयितुं रक्तपदनिक्षेपः कर्तव्य इति ।

५७। पितरो मादयध्वमिति रुण्डीकरणमन्त्रः ।

५८। मन्त्रवाक्यगतशब्देषु प्रयोजनवशेन यस्य कृते पिण्डं दीयते तस्य प्रातिपदिकस्य रूपं तत्रोहितव्यम् । यावत्संख्यकपुरुषोद्देश्येन पिण्डं दीयते तावत् संख्यकपुरुषाणां वचनमूहितव्यम् । यत्र स्त्रीप्रेतस्तत्रापि पुल्लिंगस्थाने स्त्रीलिंगमूहितम् ।

५९। प्रातिपदिकवचनलिंगानामूहविषयं तर्कयित्वा ग्रन्थकृत् स्वमन्तव्यचर्चार्थमारभते एकोद्दिष्ट इत्यादिना । तत्रो एकोद्दिष्टमातामहश्राद्धाष्टकासु यः पितृशब्दः प्रयुक्तः स पितृलोकगतसंबन्धमाश्रित्य वर्तमानत्वात् निरपेक्षतया पितृप्रातिपदिकस्य सत्त्वात् ऊहो न भवतीति एतद् वाक्यस्य आशयः ।

६०। पितृप्रातिपदिके लोकत्वजनकशक्तिकल्पनया यत्र लोकत्वशक्तिविशिष्टतयोपाधिः फलति, तत्र सर्वसामान्यतया लोकस्य स्थितौ ऊहाभावः, समेषां कृते लोकगतसाम्यप्रतीतेः । जनकत्वोपाधिमत्त्वेन प्रातिपदिकस्य यत्रावसरस्तत्र जनकस्य बहुलतया प्रयोजनपरतया च ऊहो भवत्येवेति आशयः ।

६१। पूर्वोक्तपक्षकल्पनायां दृढतां प्रकाशयितुमाह अन्यथेत्यादिना । जनकत्वोपाधिकल्पनाभावेन पितृपितामहप्रपितामहादिप्रातिपदिकेषु चतुर्थ्यन्तप्रयोगविशिष्टो वाक्यांशो निरर्थक स्यादिति ।

६२। पूर्ववाक्यस्वरसं खण्डयितुं पितृप्रातिपदिके जनकत्वोपाधेः लोकसम्बन्धित्वस्य च प्रमाणाभावात् न चात्रेत्यादिना विवृणोति ग्रन्थकारः । पितृप्रातिपदिके जनकत्वोपाधेः सत्त्वेन पितामहस्य प्रपितामहस्य च पितृत्वसत्त्वाभावेन निखिलपुरुषाणामुपरि जनकत्वशक्त्यारोपो दुर्घटः ।

मस्ति। न च पितृलोकसम्बन्धेन पितृशब्दप्रयोगेऽपि किं प्रमाणमिति वाच्यम्। पितामहप्रपितामहयोः पितृत्वाभाव एवेति गृहाण। [६३]अन्यथात्र पितामहा मादयध्वमित्यप्यूहः स्यात्। नच बहुवचनात्तल्लाभः तस्य प्रातिपदिकार्थवशवर्त्तित्वात्। एतेन[६४] न्युब्जीकरणमन्त्रेऽप्यूहाभावो व्याख्यातः। मातामहेभ्यः स्थानमसीत्येकं मातृभ्यः स्थानमसीत्येकं वान्वष्टकायां पितृभ्यः[०] स्थानमसीत्येकोद्दिष्टे वा नोहितव्यम्[६५]।

प्रथमे[६६] पात्रे संस्रवान्समवनीय पितृभ्यः स्थानमसीति न्यूब्जं पात्रं

---

६३। एवं सति पितृपदे जनकत्वारोपे पितामहोद्देश्येन सति स्थाने पितामह इति पदमुह्येत। पितर इत्यत्र पितृपदे बहुवचनादेव पितामहप्रपितामहयो नैव प्राप्तिर्भवति बहुवचनस्य प्रातिपदिकार्थाधीनत्वात्। अत एवात्र पितृलोकसंबन्धेन पितर इति प्रयुक्तमिति सारः।

६४। पितृभ्यः स्थानमसि इति न्युब्जीकरणमन्त्रे मातामहेभ्यः स्थानमसीत्याद्यूहो न भवति इति सिद्धम्।

६५। अत्र अनूहस्य कारणं कर्काचार्यैः कात्यायनश्राद्धसूत्र (कण्डिका-२) व्याख्यायां निरणायि। तद्यथा—पितृशब्दस्तु सपिण्डीकरणान्तसंस्कारजन्यपितृभावापत्तिरूपः। यथा पितृभ्यो दद्यात्, पितॄनावाहयिष्ये, पितॄन् हविषे अत्तवे, आयान्तु नः पितर इति, अत्र पितरो मादयध्वमिति, अमी मदन्त पितर इति नमो वः पितर इति, एतद्वः पितर इति तर्पयत मे पितॄनिति। तस्य पित्रादिषु मातामहादिषु मातृभ्रातृपितृव्यादिषु च तुल्यत्वान्नोह्यते इति।

६६। सम्पूर्णपारस्करवचनं यथा—हिरण्यवर्णा यज्ञियास्ता न आपः शिवाः शंस्योनाः सुहवा भवन्त्वित्यसावेष तेऽर्घ इति प्रथमे मन्त्रे संस्रवान्समवनीय पितृभ्यः स्थानमसीति न्युब्जं पात्रं निदधात्यत्र गन्धपुष्पधूपदीपवाससां च प्रदानम् इति।

एतद्व्याख्याने कर्काचार्या आहुः—प्रथमे पात्रे संस्रवान्समवनीय पितृभ्यः स्थानमसीति न्युब्जं पात्रान्निदधाति। संस्रवाः पात्रसंलग्नाः। अत्र गन्धपुष्पधूपदीपवाससाञ्च प्रदानम् अस्मिन्नवसरे विप्रेभ्यो गन्धादिदानम्। केचित् प्रकृतत्वात् अत्रेति सर्वनाम्नो निर्देशात् पात्रे गन्धादीनिच्छन्ति। तदसत्। अदृष्टप्रसंगात्। तस्मादत्र शब्दोऽवसरार्थो द्रष्टव्य इति।

---

० पित्रे इति ख पुस्तकपाठः।

[0]करोतीति (श्राद्धसूत्रं कण्डिका-२) [६७]पारस्करवचनादेकोद्दिष्टे च पात्रान्तरार्घ्य-शेषजलसमवनयनाभावात् न्यूब्जीकरणमेव नास्ति दूरे मन्त्रोह इति कर्काचार्याः। [६८]कल्पतरुकारानुसारिशम्भुकरवाजपेयिचरणैरत्रापि न्युब्जीकरणं लिखितम्।

---

गदाधरो यथा—संस्रवशब्देनार्घपात्रलग्ना अवयवा अभिधीयन्ते। संस्रवो ह्येव खलु परिशिष्टो भवतीति श्रुतिवाक्यात्। प्रथमे पात्रे पितुः प्रथमे अर्घपात्रे संस्रवान् समवनीय निक्षिप्य पितृभ्यः स्थानमसीत्यनेन मन्त्रेण तत्प्रथमं पात्रं नुब्जमधोमुखन्निदध्यात्। अत्राह यमः—

पैतृकं प्रथमं पात्रं तस्मिन् पैतामहं न्यसेत्।
प्रपितामहं ततो न्यस्य नोद्धरेन्न विचालयेत्॥

पैतामहं संस्रवमित्यर्थः। पुराणे विशेषः—

आसिच्य प्रथमे पात्रे सर्वपात्रस्थसंस्रवान्।
ताभिरद्भिर्मुखं सिंचेद्यदिपुत्रमभीप्सति॥

चतुर्विंशतिमते—संस्रवान् प्रथमे पात्रे निर्णीयाद्भि र्मुखं स्पृशेत्।
अद्भिर्मुखस्पर्शनस्य पुरुषार्थत्वात् विकृतावप्रवृत्तिः॥ तच्च न्युब्जीकरणं पित्र्यब्राह्मणस्य वामपार्श्वे। तथा मत्स्यपुराणे—

या देवेत्यर्घमुत्सृज्य दद्यात् गन्धादिकं ततः।
वस्त्रोत्तरं चानुपूर्वं दत्त्वा संस्रवमादितः॥
पितृपात्रे प्रदायाथ न्युब्जमुत्तरतो न्यसेत् इति।

उत्तरशब्दो वामवचनः स चाचाराद् भोक्तुरेव। ब्राह्मणहस्तान्तितार्घोदकानि पितृपात्रे प्रसिच्य दक्षिणाग्रेषु कुशेषु पितृभ्यः स्थानमसीति सपवित्रं न्युब्जं कृत्वा तस्योपर्यर्घ्यपात्रपवित्राणि क्षिप्त्वा तिलपुष्पादि क्षिप्त्वा तत्पात्रमासमाप्तेर्न चालयेत्। इति।

६७। पार्वणश्राद्धस्य त्रिपुरुषोद्देश्यकत्वेन पात्रत्रये विहिते न्युब्जीकरण-व्यापारे एकस्य पात्रस्योपरि पात्रान्तरस्याधोमुखीकरणत्वेन न्युब्जीकरण-सम्पादनात् एकोद्दिष्टे एकपात्रसद्भावेन पात्रान्तराभावात् न्युब्जीकरणमपि नास्ति अतस्तत्रदूरे आस्तामूहचर्चा इति आशयः। विशेषतो द्रष्टव्यं कर्काचार्य-भाष्यम् (कात्यायनश्राद्धसूत्रे)

६८। लक्ष्मीधरभट्टप्रणीतकृत्यकल्पतरुग्रन्थानुसारेण शंभुकरवाजपेयिभिः

---

0 निदधाति इति मुद्रितपारस्करपाठः।

संस्रवान्[६९] समवनीयेत्यत्र द्वितीयाश्रुत्या प्रतिपत्तिकर्मत्वावगतेः समवनयनन्युब्जीकरणयोः [७०]कालार्थसम्बन्धित्वेनांगांगिसम्बन्धित्वाभावात् संस्रवनिनयनाभावेऽपि-

---

स्वग्रन्थे निर्णीतम्। अत्र शंभुकरपदे बहुवचनान्तचरणशब्दप्रयोगादेतन्मतं बहुमतं सत् ग्रन्थकृद्भिः सम्मतमिति प्रतीयते।

६९। एकाधिकपात्रसद्भावाभावेऽपि एकोद्दिष्टे न्युब्जीकरणं भवतीति ज्ञापयितुं संस्रवान् इत्यादिना आरभते। संस्रवान् समवनीयेत्यत्र असमापिकाक्रियास्वरूपकल्यप्प्रत्ययेन संस्रवस्थजलसमवनयनं विधाय अनन्तरं पात्रन्युब्जीकरणं भवतीति आनन्तर्यप्रतीतिः पदार्थयोः समवनयनन्युब्जीकरणयोः। ल्यप्प्रत्ययस्यायमेवार्थो यत् ध्वंसाधिकरणकालवृत्तित्वमिति। समवनयनरूपकर्मणः सम्पादनानन्तरं तस्य ध्वंससद्भावात् ध्वंसाधिकरणात्मकं तस्य ल्यप्प्रत्ययस्य नाम तद्युक्तक्रियाया वृत्तिः वर्तनमवस्थितिरिति नैयायिकैः सिद्धान्तितम्। स्मृतौ च स्नात्वा भुङ्क्ते इत्यत्र स्नानं समाप्य भोजनं कर्तव्यमिति सिद्ध्यति। तत्राप्यस्य न्यायस्यावसरो यत् स्नानस्य स्वनिष्ठप्रतियोगितानिरूपकत्वसम्बन्धेन ध्वंसेऽन्वय इति। तत्परवर्तिभोजनस्य स्नानप्रतियोगिकध्वंसाधिकरणकालवृत्तित्वम्। तद्वदत्रापि संस्रवान् समवनीय न्युब्जीकरणं कुर्यादिति वाक्ये समवनयनस्य स्वनिष्ठप्रतियोगितानिरूपकत्वसम्बन्धेन ध्वंसेऽन्वेयः। तथा च समवनयनप्रतियोगिकध्वंसाधिकरणकालवृत्तिः न्युब्जीकरणमिति। संस्रवसमवनयनन्युब्जीकरणयोरंगांगिसम्बन्धं निराकृत्य कालार्थसम्बन्धं प्रस्तौति ग्रन्थकारः। तत्र समवनयनस्य प्रधानत्वेनांगित्वे, न्युब्जीकरणस्य च तद्गुणत्वेन अंगत्वे सम्बन्धसद्भावनया अंगिप्रतिषेधे अंगमपि प्रतिसिद्ध्यति। किन्तु एतावत्सत्त्वे एकोद्दिष्टे संस्रवसमवनयनस्याभावेऽपि न्युब्जीकरणं भवतीति। केवलं कालार्थसम्बन्धित्वेन सत्त्वात् तयोः पौर्वापर्यमात्रता। सम्बन्धस्य द्विनिष्ठत्वेन समवनयनन्युब्जीकरणयोस्तस्य वर्तमानत्वे अर्थत्वेन नाम प्रयोजनत्वेन तत्स्थितौ कालाधिकरणतया उभयोः सिद्धिः। सोऽयं विषयोऽग्रे ग्रन्थकृता परामृष्टः—कृतार्थयोः सम्बन्धस्य कालार्थत्वात् इत्यादिना। अर्थस्य प्रयोजनापरपर्यायत्वे सम्बन्धस्य द्विप्रयोजननिष्ठत्वेन कृतौ अर्थौ नाम कृते प्रयोजने ययोस्तयोः सम्बन्धः कालार्थः। कालार्थो नाम कालेऽर्थोऽर्थात् काले प्रयोजनम् इति। एतावतैकोद्दिष्टे न्युब्जीकरणं भवतीति सिद्धम्।

७०। द्रष्टव्या पा० टी० -६९।

७१। पितरो मादयध्वमित्यादिना मन्त्रस्य पितृप्रातिपदिकसत्त्वेन पितृगतकार्योपपत्तौ प्रेतकर्मणि प्रेतस्य पितृत्वाभावेन मन्त्रे पितृस्थाने प्रेतपदोहः कर्तव्यः।

एकोद्दिष्टे न्युब्जीकरणं भवत्येवेति तत्त्वम्। प्रेतस्य[७१] तु पितृलोकसम्बन्धाभावात् ऊह एव। तथा च विष्णुधर्मोत्तरे मार्कण्डेयः—

कृते सपिण्डीकरणे नरः संवत्सरात्परम्।
प्रेतदेहं परित्यज्य भोगदेहं प्रपद्यते ।।

हारीतः— ततःप्रभृति वै प्रेतः पितृसामान्यमाप्नुयात्।
विन्दते पितृलोकं च ततः श्राद्धं प्रपद्यते ।।

एवं प्रातिपदिकोहे[७२] वचनमप्यूहितव्यम्। एकोद्दिष्टे[७३] पुनः प्रातिपदिकस्य समवेतार्थत्वादूहाभावाद्वचनस्याप्यनूह एव। °एतावतापि बहुवचनस्य छान्दसत्वात्। यथादितिः[७४] पाशान् प्रामुमोक्त्वेतान् (मै० सं० १-२-१०८, का० सं० ३०-४५)

---

प्रेतलक्षणं च मिताक्षरायां (१-१५३-५४) स्पष्टम्। तद्यथा—प्रेतत्वं क्षुत्तृष्णोपजनितात्यन्तदुःखानुभवावस्था। यथाह मार्कण्डेयः—

प्रेतलोके तु वसति नृणां वर्षं प्रकीर्तितम्।
क्षुत्तृष्णे प्रत्यहं तत्र भवेतां भृगुनन्दन ।। इति।

पितृत्वप्राप्तिश्च वस्वादिश्राद्धदेवतासम्बन्धः। प्राक्तनैकोद्दिष्टसहितेन सपिण्डीकरणेन प्रेतत्वनिवृत्त्या पितृत्वं प्राप्नोतीत्यवगम्यते।

यस्यैतानि तु दत्तानि प्रेतश्राद्धानि षोडश।
प्रेतत्वं सुस्थिरं तस्य दत्तैः श्राद्धशतैरपि। इति।

तथा— चतुरो निर्वपेत् पिण्डान् पूर्वं तेषु समावपेत्।
ततःप्रभृति वै प्रेतः पितृसामान्यमश्नुते ।।

इत्यादिवचनात्।

७२। पितृभ्यः स्थानमसीति न्युब्जीकरणमन्त्रे प्रातिपदिकस्य पितृपदस्थ प्रेतपदत्वेन ऊहे प्राप्ते पितृपदगतबहुवचनस्यापि एकवचनात्मक ऊहः भवति। तेन प्रेतस्य स्थानमसि इत्येवं वाक्यं प्रयोक्तव्यमिति सारः।

७३। बहुवचनान्तपितृप्रातिपदिकस्य प्रकृतौ पार्वणमन्त्रे समवायसम्बन्धेन सत्त्वात् विकृतौ एकोद्दिष्टे तस्योहः अनपेक्षणीयः समवायसम्बन्धस्य समवेतार्थत्वज्ञापकत्वेन पितृशब्दप्रयोगे बाधाभावात्। तथा बहुवचनस्थाने एकवचनान्नोहो विधेयः बहुवचनान्तप्रयोगस्य छान्दसत्वात्। बहुवचनमध्ये एकवचनस्यापि सत्वाच्च बहुवचनप्रयोगो वैदिकत्वेन अविकारेण कर्तव्य इति हृदयम्।

७४। अविकारप्रयोगस्य पृष्ठपोषकप्रमाणरूपेण पाशमन्त्रमुदाहरति

---

° एवमत्रापि इति ख पुस्तकपाठः।

**इत्ति बहुवचनान्तः प्राशमन्त्रः प्रकृतौ समवेतार्थत्वात् द्विपशुके ऊह्येत, अन्यथा समवेतार्थत्वेन ऊहः स्यात् ।**

---

ग्रन्थकारः । तत्र ज्योतिष्टोमेऽग्नीषोमीयपशौ बहुवचनान्तेन अदितिः पाशान् प्रमुमोक्त्वेतान् (मै० सं० १-२-१०८) इति मन्त्र आम्नातः । अत्र पाशान् इति बहुवचनान्तपरम् । पशूनां बाहुल्यात् तेषां पाशा अपि बहवः । अतः पाशपदे बहुवचनप्रयोगः सार्थकः । अस्य द्विपशुके विकृतौ एतद्धर्मस्य चोदकेन प्राप्तत्वात् तद्गतबहुवचनत्वमपि प्राप्तम् । किन्तु पशुगतद्वित्वे वर्तमाने बहुवचनप्रयोगस्यान्याय्यत्वात् विकारो भवितव्य इति पक्षे उत्थाप्यमानोऽयं सिद्धान्तस्तत्र फलति यत् प्रकृतौ पाशपदे बहुवचनस्य समवायसम्बन्धेन वर्तमानतया तस्यापि मन्त्रस्य चोदितत्वे तत्प्रातिपदिकस्यापि तथात्वे वचनोहो न युक्त इत्यपि सिद्धान्तैकदेशी । चरमे तु छान्दसत्वेन तथैव स्यात् । अत्रापि एकोद्दिष्टे बहुवचनस्य छान्दसत्वात् पार्वणे पितॄणां बहुत्वम्, एकोद्दिष्टे पितृगतावयवानां बहुत्वात् च निष्पक्षपातः सिद्धान्तः फलति ।

सोऽयं विषयः जैमिनीये अन्यायस्त्वविकारेणादृष्टप्रतिघानित्वादविशेषाच्च तेनास्य (९-३-१०) इति सूत्रे विचारितः ।

तत्राहुर्भाष्यकाराः । अस्ति पशुरग्नीषोमीयः यो दीक्षितो यदग्नीषोमीयं पशुमालभते इति । तत्र पाशैकत्वाभिधायी मन्त्रः अदितिः पाशं प्रमुमोक्त्वेतम् (तै० सं० ३-१-११-११) । तथा पाशबहुत्वाभिधायी अदितिः पाशान् प्रमुमोक्त्वेतान् इति (मै० सं० १-२-१०८) । प्रकृतौ तयोः समुच्चयं वक्षति (उत्तराधिकरणे) । अस्ति द्विपशुविकृतिः मैत्रं श्वेतमालभेत, वारुणीं कृष्णम् अपां चौषधीनां स सन्धौ अन्नकाम इति । तत्र चोदकेन पाशाभिधायिनौ मन्त्रौ प्राप्तौ । तयोः संशयः किं बहुवचनान्तः अविकारेण प्रवर्त्तते एकवचनान्तस्य निवृत्तिः, उत बहुवचनान्तो निवर्तते एकवचनान्त ऊहितव्यः, उत उभयोरपि प्रवृत्तिः अभिधानविप्रतिपत्तिश्च, उत एकवचनान्त ऊहितव्यो बहुवचनान्तोऽपि न निवर्तते । किं प्राप्तम् ? अन्यायस्तु अविकारेण । अन्यायनिगदः बहुवचनान्तः अधिकारेण प्रवर्तते । एकवचनान्तो निवर्तितुमर्हति । कुतः ? नास्य एकस्मिन् पाशे प्रवर्त्तमानस्य दृष्टः प्रतिघातः । यथैव एकस्मिन् पाशे प्रवर्त्तते तथा द्वयोरपि प्रवर्तितुमर्हति । नासौ एकस्य वाचको न द्वयोः । एवमार्षश्चोदकोऽनुगृहीतो भविष्यति । इतरथा हि ऊह्यमाने यथा प्रकृतिमन्त्रो न कृतः स्यात् । न द्वयोः पाशयोः एकस्मिंश्च पाशे कश्चित् विशेषोस्ति । तस्मादविकारेण बहुवचनान्तः प्रयुज्यते एकवचनान्तस्य निवृत्तिरिति ।

लेपभागिपितॄणामपि[७५] प्रकृतौ बहुत्वस्य प्रकाश्यत्वादेकोद्दिष्टेऽपि तत्सत्त्वाच्छान्दसत्वेऽपि बहुचनस्य नोहः। किंच[७६]—

पितरो वसवो ज्ञेया रुद्राश्चैव पितामहाः।

इति स्मरणात् वसुरूपतायाः ध्येयत्वात् तद्बहुत्वाभिप्रायेण बहुवचनप्रयोगात् विकृतावेकोद्दिष्टे[७७] पितु र्वसुरूपताध्यानानधिष्ठातृदेवताभिप्रायेण बहुवचनस्य छान्दसत्वमवयवबहुत्वाभिप्रायेण पाशमन्त्रबहुवचनवदित्यतोऽपि नोहः। अपि च[७८] मार्कण्डेयपुराणे रौच्यमन्वन्तरप्रसंगे—

एकत्रिंशत् पितृगणा यैर्व्याप्तमखिलं जगत्।

(मार्क० पु० ९६-४८) इति सोमपादीननुक्रम्य°

---

अत्र भाट्टास्तु नार्थ ऊहेत।.........प्रकृतौ विचारितायां विकृतै विषय इत्याहुः। इति।

७५। लेपभाजश्चतुर्थाद्याः पित्राद्याः पिण्डभागिनः।
पिण्डदः सप्तमस्त्वेषां सापिण्ड्यं सप्तपौरुषम्॥

इति मात्स्योक्तेः वृद्धप्रपितामहादीनां यथा प्रकृतौ पार्वणे लेपभागित्वं तथैव विकृतौ एकोद्दिष्टेऽपि लेपभागित्वमव्याहतमिति एकोद्देश्यके एकोद्दिष्टे अपि पितॄणां बहुत्वयोगात् बहुवचनप्रयोगो युक्तः। तथा छान्दसत्वाच्च बहुवचनस्थाने एकवचनान्तोहः न करणीय इति सारः।

७६। एकोद्दिष्टे ऊहाभावे युक्त्यन्तरं दर्शयति—

वसुरुद्रादितिसुताः पितरः श्राद्धदेवताः। (या० स्मृ० १-२६०)

इनि योगेश्वरवचनात् वसुरुद्रादित्यानां पितृरूपतोक्तौ साक्षात् विभागेन पितॄणां वसुरूपत्वेन पितामहानां रुद्ररूपत्वेन च उक्तत्वात् वसव इत्यनेन अष्टसंख्यकानां वसूनां बहुत्वे पितॄणां बहुत्वं सिद्धम्। ततोऽपि नोहः।

७७। एकोद्दिष्टे विकृतौ एकपुरुषोद्देश्येन श्राद्धस्य क्रियमाणत्वे तदर्थं बहुवचनव्यवहारः किमर्थमिति शंकायामुच्यते अवयवबहुत्वाभिप्रायेण। वसूनामष्टसंख्यकत्वेन तेषां च पितृत्वकलनात् सम्मिलितदेवतात्वम्। सम्मिलितदेवताप्रसंगे अवयवसमवायेन निखिलस्य अंगिनः सौष्ठवप्रकाशात् एकत्वेऽपि बहुत्वाभिप्रायः सिद्ध्यति। अतः एकोद्दिष्टे अपि पितृबहुत्वसिद्ध्या न एकत्वेनोहः।

७८। पितॄणां बहुत्वं मार्कण्डेयपुराणमनुसृत्य प्रकारान्तरेणापि प्रतिपाद्यते। तत्रान्ते रुचिर्वक्ति—

एकत्रिंशत् पितृगणा यैर्व्याप्तमखिलं जगत्।
ते मेऽनुतृप्तास्तुष्यन्तु यच्छन्तु च सदा हितम्।

नद्या विविक्ते पुलिने चकार पितृतर्पणम् ।
निवेदितं च यत्नेन पुष्पगन्धानुलेपनम् ॥
तद्भूषितानथ स तान् ददृशे पुरतः स्थितान् ।

इत्युपसंहारात् प्राप्तपितृलोकानां सोमपादिपितृगणभावापन्नत्वादपि संख्यासमवाय-संभवान्नोहः[७९] । नह्यत्र[८०] देवदत्तादयः श्राद्धे सम्प्रदानभूताः पित्रादिशब्दै-

---

(मा० पु० ९६-४८) इति । तत्र एकत्रिंशत्संख्यकानां नाम विवृणोति स एव स्तुतिं प्रकृत्य । तद्यथा—

अग्निष्वात्ता बर्हिषद आज्यपाः सौमपास्तथा ।
व्रजन्तु तृप्तिं श्राद्धेऽस्मिन् पितरस्तर्पिता मया ॥
अग्निष्वात्ताः पितृगणाः प्राचीं रक्षन्तु मे दिशम् ।
तथा बर्हिषदः पान्तु याम्यां ये पितरः स्मृता ॥
प्रतीचीमाज्यपास्तद्वदुदीचीमपि सोमपाः ।
रक्षोभूतपिशाचेभ्यस्तथैवासुरदोषतः ॥
सर्वतश्चाधिपस्तेषां यमो रक्षां करोतु मे ।
विश्वो विश्वभुगाराध्यो धर्मो धन्यः शुभानवः ॥
भूतिदो भूतिकृद् भूतिः पितॄणां ये गणा नव ।
कल्याणः कल्पिता कर्त्ता कल्प्यः कल्यतराश्रयः ॥
कल्यताहेतुरनघः षडिमे ते गणाः स्मृताः ।
वरो वरेण्यो वरदः पुष्टिदस्तुष्टिदस्तथा ॥
विश्वपाता तथा धाता सप्तैवैते तथा गणाः ।
महान् महात्मा महितो महिभावान् महाबलः ॥
गणाः पञ्च तथैवैते पितॄणां पापनाशनाः ।
सुखदो धनदश्चान्यो धर्मदोऽन्यस्य भूतितः ॥
पितॄणां कथ्यते चैतत्तथा गणचतुष्टयम् ।
एकत्रिंशत् पितृगणा यैर्व्याप्तमखिलं जगत् ॥
ते मेऽनुतृप्तास्तुष्यन्तु यच्छन्तु च सदा हितम् ॥

(मार्क० पु० ९६/४०-४८)

७९ । कृतसपिण्डीकरणस्य पितृत्वप्राप्त्या सोमपादिगणान्तर्वर्त्तित्वेन संख्या-बाहुल्यं सुस्थितमित्यतो नैकोद्दिष्टे ऊहप्रसरः ।

---

० उपक्रम्य इति ख पुस्तकपाठः । ( पूर्वपत्रगतं पाठान्तरम् )

रुच्यन्ते, किन्त्व[८१]धिष्ठातृवस्वादिदेवतासहिता एव। यथा[८२] मैत्रशब्दे न नाममात्रं न शरीरमात्रं किं तु शरीरविशिष्टात्मा वसन्ते[८३] ब्राह्मणोऽग्नीनादधीते–(तै० ब्रा० १-१-२) तिवत् सामानाधिकरण्यात्। एवं पित्रादिशब्देऽपि।

वसुरुद्रादितिसुताः पितरः श्राद्धदेवताः। (१-२६९)

---

८०। देवदत्तपदेन स्वबोधकत्वे सति स्वेतरबोधकत्वमुपलक्षणत्वमिति न्यायात् निखिलनामग्रहणात् तस्मिन् सम्प्रदानशक्तिमनंगीकृत्य पितृत्वं नोच्यते। संप्रदानत्वं नाम दातृकर्तृकदेयद्रव्यप्रतिपत्त्यधिष्ठानरूपत्वम्। नहि केवलं देवदत्तादयो नामिविशेषाः पितृत्वमाप्ताः, तेषां विशेषत्वेन तच्च सामान्यशक्तिरिच्छिन्नतया उपसंहारेणाभिव्यज्यते।

८१। वस्वादिसहितानामेव देवदत्तादीनां पितृत्वम्।

८२। कर्मफलोपभोगसाधनीभूतशरीराबद्धस्य जीवस्य व्यवहारिकजगति परिचितिनिमित्तं नामकरणं विधीयते। तत्र मैत्रशब्देनोच्यमानो जीवो न शरीरमात्रं, न वा मैत्र इत्यक्षरद्वयसमवेतपदमात्रं, किन्तु शरीरविशिष्टः आत्मा। तस्य जागतिकत्वम् अत्र मैत्रपदे शरीरात्मनोः समानाधिकरणवशेन सत्त्वात्। तद्वत् पितृपदे वसुरुद्रादित्यसहिताः पितरः सामानाधिकरण्येन गृह्यन्ते।

८३। सामानाधिकरण्यं द्योतयितुं वैदिकमुदाहरणं दीयते वसन्ते ब्राह्मणोऽग्नीनादधीत इत्यादिना। तत्रेदं सम्पूर्णं वाक्यं—वसन्ते ब्राह्मणोऽग्नीनादधीत, ग्रीष्मे राजन्यः, शरदि वैश्यः (तै० ब्रा०-१-१-२) इति। अत्र अग्नीनामाधानकर्मणः ब्राह्मणैस्त्रैवर्णिकैः सम्पाद्यत्वात् तत्र ब्राह्मणकर्तृके आधाने वसन्तकालस्य कालाधिकरणोपमुखेन संबन्धित्वे ब्राह्मणत्वस्य वसन्तत्वस्य च आधाने सामानाधिकरणम्। तद्वत् पितृशब्दे वसुरुद्रादित्यैः सहिता एव पितरः मन्त्रपदे समवेता इत्यर्थः। सोऽयं विषयः ब्राह्मणकर्तृकवसन्तकालिकाग्न्याधानाख्यः जैमिनीये "आधाने सर्वशेषत्वात्" (२-३-४) इति सूत्रे विचारितः।

अत्राहु र्भाष्यकाराः—इदं समामनन्ति वसन्ते ब्राह्मणोऽग्नीनादधीत ग्रीष्मे राजन्यः शरदि वैश्य हति। तत्र सन्दिह्यते। किं ब्राह्मणादिश्रवणं निमित्तार्थं ब्राह्मणादय आदधाना वसन्तादिष्वादधीरन्निति, यत ब्राह्मणादीनामाधानं विधीयत इति। कथं निमित्तार्थता स्यात्। कथं चाधानविधानमिति। यदि ब्राह्मणो वसन्ते इति पदद्वयं परस्परसम्बद्धं, ततो निमित्तार्थं श्रवणम्। अथ राजान्यादिष्वपि। किं तावत्प्राप्तम्। निमित्तार्थं श्रवणमिति। कुतः

**इति याज्ञवल्क्यवचनात् । यथा माता गर्भपोषणाय अन्यादत्तेन दोहदेन स्वयमुपभुक्तेन तृप्ता गर्भमपि प्रीणयति दोहददायिनश्च प्रत्युपकारं करोति तद्वत् वस्वाद्यधिष्ठातृदेवता [८४]पुत्रादिदत्तेनान्नपानादिना तृप्ता पितॄन् देवदत्तादीन्**

---

निमित्तसरूपा इति शब्दाः । किं निमित्तसारूप्यम् ? ब्राह्मणादीनां वसन्तादिभिः समुच्चारणम् । इति ।

अत्राहुः कुमारिलश्रीचरणा यथा—किं निमित्तसारूप्यमिति यदि शब्दाद्यनुपबन्धाभिप्रायम् । ब्राह्मणादीनां वसन्तादिविधिभिः समुच्चारणमिति परपदसम्बन्धसंचारितायां विधिशक्तौ निमित्तफलत्वात् इति ।

माधवाचार्या जैमिनीयन्यायमालायां यथा—

वसन्ते विप्र आदध्यात्तत्रैवोपनयीत तम् ।
अनुवादः प्रापणं वानुवादः कालसिद्धये ।।
अन्तरेणाग्निविद्याभ्यां कर्मानुष्ठित्यसंभवात् ।
क्लृप्ते आधानोपनीती प्राप्ता विप्रादयस्ततः ।।
लौकिकाग्नेः पुस्तकाश्च तत्सिद्धेर्नास्ति कल्पनम् ।
कालविप्रादिसंयुक्तमतोप्राप्तं विधीयते ।।

अत्र सिद्धान्ते विस्तरो यथा—लौकिकाग्नौ होतुं पुस्तकपाठे नाधिगन्तं च शक्यत्वेनाधानोपनयोरकल्पेन ब्राह्मणादीनामप्राप्तेः । तस्माद् वसन्तादिकालविशिष्टे ब्राह्मणादिकर्तृके आधानोपनयने अत्र विधीयेते इति ।

अत्र वसन्तादिकालविशिष्टे ब्राह्मणादिकर्तृके इत्युक्तो सामानाधिकरण्यमिति ।

८४ । द्रष्टव्या—या० स्मृ० १-२६९-२७० ।

वसुरुद्रादितिसुताः पितरः श्राद्धदेवताः ।
प्रीणयन्ति मनुष्याणां पितॄन् श्राद्धेन तर्पिताः ।।
आयुः प्रजां धनं विद्यां स्वर्गं मोक्षं सुखानि च ।
प्रयच्छन्ति तथा राज्यं प्रीता नृणां पितामहाः ।। इति ।

निःश्रेयसं नाम मोक्षः । अत्र पितामहपदं पितृपदोपलक्षकमिति अपरार्कः ।

८५ । पितृप्रातिपदिके वस्वादिदेवानां बुद्धिः कार्या इति पंक्तेराशयः । बहुवचनप्रयोगे वस्वादिसम्मिलितदेवतात्वमपि अवगन्तव्यमिति संख्यायाः समवेतत्वे नाम पितृगतसंख्या आकलनीया । या० स्मृ० व्याख्याने अपरार्क आह (२६९-७०)—उक्तं स्वसम्बन्धिभ्यः प्रेतेभ्यः श्राद्धं प्रदेयमिति तत्र पित्रादिषु श्राद्धदेवताभूतेषु वस्वादिबुद्धिः कार्येत्यनेन विधीयते । ये पितृ-पितामह-

कर्त्तृश्च पुत्रादीन् निःश्रेयसेन योजयतीति । अतो[८५] वस्वादिविशिष्टानां पितृपद-वाच्यत्वात् संख्यासमवायसम्भव इति । अत एव ब्रह्मपुराणम्—[८६]

एतद्वः पितरो वास इति जल्पन् पृथक् पृथक् ।

इत्येतस्मिन्नपि बहुवचनोक्तं मन्त्रं दर्शयति । न च[८७] पृथक् पृथगित्यस्य—

दद्यात् क्रमेण वासांसि श्वेतवस्त्रभवा दशाः ।

---

प्रपितामह-श्राद्धदेवतात्वेन नियुक्ताः शास्त्रेषु ते यथाक्रमं वसुरुद्रादित्या बोद्धव्या इत्यन्वयः । ते वस्वादयः श्राद्धेन तर्पिताः श्राद्धेषु सन्तोषिताः मनुष्याणां पित्रादींस्तर्पयन्ति । अत एव वस्वादीनामेव श्राद्धदेवतात्वं न केवलं यजमान-पित्रादीनामिति भावः । अत एव मनुः—

वसून् वदन्ति हि पितॄन् रुद्रांश्चैव पितामहान् ।
प्रपितामहांस्तथादित्यान् श्रुतिरेषा पुरातनी ।।

आयुरादीनि फलानि श्राद्धकर्मभ्यः प्रयच्छन्ति । न पुनः वस्वादयः । यथा श्रुतिग्राहिणः पूर्वश्लोकाद् वस्वादिदैवत्यमेव सर्वं श्राद्धं न पुनः पित्रादि-दैवत्यमिति कस्यचिद् बुद्धिरुत्पद्यते । तन्निवृत्तिद्वारेण श्राद्धस्यायुरादिफलत्व-प्रतिपादनपरोऽयं श्लोकः । अत्र च पितामहग्रहणं पित्राद्युपलक्षणार्थम् । ततश्च श्राद्धकर्तॄणां मनुष्याणां श्राद्धे वस्वादिभिः सम्बध्यमानाः पित्रादय आयुरादि-फलप्रदा भवन्तीत्युक्तं भवति इति ।

८६। बहुवचनान्तपितृप्रातिपदिकप्रयोगस्य श्रौतस्मार्तप्रमाणे प्रदर्श्य पौराणिकं प्रमाणमुपस्थापयति ग्रन्थकारः एतद्वः इत्यादिना ।

८७। बहुवचनान्तपितृप्रातिपदिकप्रयोगे युक्तिं व्याहृत्य एकवचनात्मक-क्रियाव्यापारगतविषयं मैथिलीयं निराकर्तुमारभते ग्रन्थकारो नच इत्यादिना । पितृकोटिकपितृप्रातिपदिकप्रयोगे वैदिकं प्रमाणं ग्रन्थकारेण दत्तं प्राक् क्रमशो वासोदशाप्रदानस्य तत्स्थले अर्हतां निराकरोति, यतो हि एतद्वः पितरो वासो, दद्यात् क्रमेण इत्यनयोः एकभावनात्मकता नास्ति । भावना नाम भवितुर्भव-नानुकूलभावकव्यापारविशेषः इति मीमांसकप्रसिद्धिः । शाब्दीभावनाया भाव्यत्वेन आर्थीभावनाया अन्वयात् तद्भाव्यत्वेन किंपदोत्थितपदार्थस्य कर्मणो-ऽन्वयात् युगपत् भावनाद्वयसंभवाभावेन एकस्मादनन्तरमपरस्योत्थानसंभवात् प्रकृतौ एतद्वः पितरः इति वाक्यस्य यत्कालप्रयोगार्हत्वं, नहि तत्कालप्रयोगार्ह-त्वम् दद्यात् क्रमेण इत्यस्य ।

इत्यनेनैवान्वय इति मैथिलव्याख्यानमादरणीयम्। सन्निहितभावनापरित्यागेन भावनान्तरान्वयायोगात्। अत एव [८८]तरसमयाधिकरणे (जै० सू० ३-४-५८) सन्निहितेन सवनीयपदेनैव तरसान्वयात् तरसं सवनीयहविर्गात्रविकार इत्युक्तम्। नचैवमन्वये वाक्यभेदः [८९]रेवतीवारयन्तीयवत् भावनान्तरविशिष्टभावनान्तर-

---

८८। तरसमयाधिकरणं विवृतं पूर्वमेव। अत्रायमाशयो यत्—शाक्यानामयेने षट्त्रिंशत् संवत्सरे इदं श्रूयते—संस्थिते संस्थितेऽहनि गृहपतिर्मृगायां याति, स तत्र यान् मृगान् हन्ति, तेषां तरसाः पुरोडाशाः सवनीया भवन्ति इति। तरसं नाम मांसम्। अत्र सन्देहो भवति सर्वपुरोडाशानां किं मांसमयता? सिद्धान्त इत्थं फलति यत् पुरोडाश इत्युक्ते निखिलाः पुरोडाशाः पिष्टपदार्थान्तर्गताः। सवनीया इत्युक्ते पुरोडाशेषु कश्चन विशिष्टः, तस्य मांसमयता स्यात्, यतः सन्निधौ सोऽस्ति। अतः तरसं नाम सवनीयहविर्गात्रविकार इति।

विषयोऽयं जैमिनीये मांसं तु सवनीया चोदनाविशेषात् (३-८-९२) इति सूत्रे विचारितः।

भाष्यकारा आहुः—न शक्यते पुरोडाशानां च मांसमयतां विधातुम्। सवनीयशब्देन च पुरोडाशान् विशेषयितुम्। भिद्यते हि तथा वाक्यम्। तस्मात् सर्वपुरोडाशानां मांसमयतेति प्राप्ते उच्यते मांसं तु सवनीयानां स्यात्। तस्याः सवनीया भवन्तीति तरससमवनीयसम्बन्धो विधीयते, तरसाः पुरोडाशा भवन्ति इत्ययं त्वनूद्यते इति।

माधवाचार्याः जैमिनीयन्यायमालायाः सिद्धान्तविस्तरे आहुः यत्—तदा हि। ये पुरोडाशास्ते तरसाः इति वचनव्यक्तौ व्यवहितान्वयः स्यात्। तरसशब्द-पुरोडाशशब्दयोर्मध्ये सर्वनामशब्देन व्यवधानात्। इह तु तरसाः सवनीयाः इत्यनयोः सन्निधिः श्रूयते। तथा सति ये सवनीयास्ते तरसाः इत्यनेन संनिध्यनुगृहीतेन वाक्येन मांसत्वं सवनीयपुरोडाशेष्वेव विधीयते इति।

प्रकृतौ एतद्वः पितरो वास इति वचने बहुवचनान्तपितृप्रातिपदिकस्य सन्निधौ वाससः पाठेन सम्बन्धात्—दद्यात् क्रमेण वासांसि इति व्यवधानेन वर्तमानत्वात् एतद्वः इतिकथनं गृह्यते, नेदम् यथा सवनीयानां पुरोडाशानां तरसमयत्वं सान्निध्यात् इति समन्वयः।

८९। भावनान्तरोत्थानमयं निराकर्तुमारभते नचैवमन्वये वाक्यभेदः इति। वस्तुगत्या एतद्वः पितरो वासः, दद्यात् क्रमेण वासांसि इत्यनयोः

वाक्ययोः कर्मान्तरप्रसंगता नास्ति, एकस्मिन् कर्मणि तयोः विनियोक्तव्यत्वात् । तर्हि अयमत्र सिद्धान्तः यत् एतद्वः पितरो वास इति मन्त्रः, इमं पठित्वा श्वेतवस्त्रभवादशाः प्रतिपिण्डं दातव्याः इति प्रसंगावसरः । अतः परस्परसान्निध्यात् एतद्वः पितर इति मन्त्रविशिष्टवस्त्रदानमिति एकं कर्म, नास्ति कर्मान्तरं, नास्ति भावनान्तरम् । नास्ति वा वाक्यभेदविषयः । सोऽयं विषयः रेवतीवारवन्तीयेन प्रसंगेन तुल्यः । अत्रेदं वाक्यं—रेवतीषु वारवन्तीयमग्निष्टोम साम कृत्वा पशुकामो ह्येतेन यजेत (तै० सं० १-८-१८) इति । वारवन्तीयं साम भवति । तद्विशिष्टया रेवत्या यजेत इति वाक्यार्थः । अतः रेवती अन्या, वारवन्तीयमन्यदिति न । नानयोः कर्मानन्तरता । वारयन्तीयसामविशिष्टत्वात् रेवत्याः । प्रकृतौ एतद्वः पितरो वास इति मन्त्रविशिष्टत्वं दद्यात्क्रमेण वासांसि इति वाक्यप्राप्तपिण्डाधिकरणकवस्त्रदानस्य इति ।

सोऽयं विषयः जैमिनीये "समेषु कर्मयुक्तं स्यात्" (२-२-२७) इति सूत्रे विचारितः ।

अत्र सिद्धान्तभाष्यं यथा—न ह्येतस्य रेवत्यः सन्ति, यास्वस्य वारवन्तीयं भवेत् । तत्र रेवत्यो भवन्ति, तासु च वारवन्तीयं विधीयेतेति वाक्यं भिद्येत । अथोच्यते—अस्य पूर्वा रेवतीरुपादाय तासु च वारवन्तीयं कृत्वा एतेन यजेतेत्यनुवदतीति । तथाग्निष्टोमसामेति नावकल्पेत । अथाग्निष्टोमकार्ये भवतीत्युच्यते । एतस्यैवेत्येतदविवक्षितं स्यात् । उभयस्मिन् विवक्ष्यमाणे भिद्येत वाक्यम् । तस्मात् कर्मान्रितरम् । अथ कर्मान्तरे कथं वाक्यभेदः रेवतीषु ऋक्षु वारयन्तीयं साम कृत्वा पशुकामो यजेतेत्यपूर्वो यागः सर्वैर्विशेषणैर्विशिष्टो विधीयते इति ।

अत्र सैद्धान्तिकतन्त्रवार्त्तिके कुमारिलश्रीचरणा यथा—यदि हि रेवतीगुणकं वारवन्तीयं यागं प्रति गुणत्वेन विधीयते, ततोऽवश्यं स उद्देष्टव्यः । ततश्चोद्दिश्यमानत्वादेव फलप्रदं न तेन गुणेन वा सम्बध्येत इत्यनर्थकमेव स्यात् संबध्यमानं वा वाक्यं भिन्द्यात् । गुणविशिष्टकर्मविधाने वा प्रत्यभिज्ञायमानत्वात् एकार्थेन कर्मान्तरत्वम् । नच यत्पशुकामो यजेतेत्यप्राप्तत्वात् अनुवादः संभवति । एतेन रेवतीवारवन्तीयविधिं प्रत्यस्य निमित्तत्वं प्रत्युक्तम् । अतश्च न वारवन्तीयं केनचित् बलवत्तरेण प्रमाणेन रेवतीभिः सम्बन्धमिति विशेषहानाय निर्गुणं भवेत् इति ।

**विधानात् । प्रेतस्य[९०] पितृसामान्याभावात् वस्वाद्यधिष्ठानत्वासम्भवादेकत्रिंशत् पितृगणापत्त्यभावात् प्रातिपदिकस्य ऊहेनोहस्य उत्तराधिकरणफलविचारन्यायेन**

---

अत्र माधवाचार्या जैमिनीयन्यायमालायामाहुः—

अत्त्वाग्निष्टुतमेतस्य वारवन्तीयसाम हि ।
रेवतीष्वृक्षु कृत्वेति श्रुतं पशुफलाप्तये ।।
रेवत्यादिगुणः कर्म पृथग्वा पूर्ववद्गुणः ।
रेवतीवारयन्तीयसम्बन्धाख्यः पशुप्रदः ।।
साम्नोऽत्र फलकर्मभ्यां सम्बन्धे वाक्यभिन्नता ।
तेनोक्तगुणसंयुक्तमन्यत् कर्मोच्यते फलम् ।।

अत्र सिद्धान्तविस्तरो यथा—विषमो दृष्टान्तः । दध्नो होमजनकत्वं न शास्त्रेण बोधनीयम् । तस्य लोकतोऽवगन्तुं शक्यत्वात् । फलसम्बन्धः एक एव शास्त्रबोध्य इति न तत्र वाक्यभेदः । इह तु रेवत्यृगाधारकवारवन्तीयसाम्नोग्निष्टुत्कर्मसाधनत्वं फलसाधनत्वं चेत्युभयस्य शास्त्रैकबोध्यत्वाद् दुर्वारो वाक्यभेदः । तेन पशुफलकं यथोक्तगुणविशिष्टं कर्मान्तरकमत्र विधीयते । एतच्छब्द एवकारश्च विधीयमानकर्मान्तरविषयतया योजनीयौ इति ।

९० । प्रेतस्य पितृत्वाभावात् वस्वाद्यधिष्ठानत्वं नास्ति···एकत्रिंशत्पितृगणान्तर्भावोऽपि नास्ति । तेन प्रेतस्य पितृत्वं यथा नास्ति बहुत्वमपि तथैव नास्ति । ततस्तत्र प्रातिपदिकस्य यथा ऊहस्तथा वचनस्याप्यूहो युज्यत एव उत्तराधिकरणन्यायेन । तत्र छान्दसबहुवचनता न स्वीक्रियते । सोऽयमुत्तराधिकरणविषयो जैमिनीये वरुणप्रघासेष्वाग्नेयादीनां मारुत्या भेदेनानुष्ठानाधिकरणे विवृतः । तत्रेतानि सूत्राणि—दक्षिणेऽग्नौ वरुणप्रघासेषु देशभेदात् सर्वं विक्रियते । अचोदनेति चेत् । स्यात् पौर्णमासीवत् । प्रयोगचोदनेति चेत् । अथेह । आसादनमिति चेत् । नोत्तरेणैकवाक्यत्वात् । अवाच्यत्वात् । आम्नायवचनं तद्वत् ।। (जै० सूत्र० ११-२-३३-४१) इति ।

अत्राहु र्भाष्यकाराः—वरुणप्रघासेषु विहारपृथक्त्वमाम्नातं पृथगग्नीन् प्रणयतः, पृथग्वेदीं कुरुत इति । तत्र श्रूयते, अष्टावध्वर्युरुत्तरे विहारे हवींष्यासादयति, मारुतीमेव प्रतिप्रस्थाता दक्षिणेऽस्मिन्निति । इह विचार्यते । किं भेदेन दक्षिणविहारेऽगानि कर्तव्यानि, अथवा यान्येवोत्तरे कृतानि तान्येवेतरत्राप्युपकुर्वन्तीति । किं प्राप्तम् । भेदेनांगानि कर्तव्यानि । कुतः ? देशभेदात् । देशो हि भिद्यते दक्षिण उत्तर इति । यान्युत्तरे विहारे प्रधानानि तेषां तद्देशान्येवाङ्-

[०]लौकिकनयेऽस्मिन् छान्दसबहुवचनासम्भवात् वचनस्याप्यूह एव। पितृभ्यस्त्वा जुष्टं प्रोक्षामि इत्यत्र प्रेताय त्वेत्याद्यूहः।

[६१]एतेन नमो व इति मन्त्रे जलनिषेकमन्त्रे चोहाभावो गतार्थः। ब्रह्मपुराणे तु—

नीवीं विस्रंस्य च जपेत् नमो वः पितरस्त्विति।
यथेह पुरुषान्तं च मन्त्रं जप्त्वा[००] कृतांजलिः॥

---

गान्युपकुर्वन्ति, अंगानि तु विधानत्वात् प्रधानेनोपदिश्येरंस्तस्मात् स्यादेकदेशत्वमिति। नान्यदेशाया मारुत्याः। तस्मात्तदर्थं दक्षिणे विहारे भेदेन कर्तव्यानीति इति।

जैमिनीयन्यायमालायां च—

मारुत्याः सार्धमष्टाभिरंगैस्तन्त्रं भिदाथवा।
प्रयोगैकत्वतस्तन्त्रं भेदो देशस्य भेदतः॥ इति।

तत्र विस्तरे यथा—वरुणप्रघासेष्वाग्नेयादीनि नव हवींषि विहितानि। तेषु मारुतीमामिक्षां प्रतिप्रस्थाता दक्षिणे विहारेऽनुतिष्ठति। इतराणि त्वष्टावध्वर्युरुत्तरे विहारेऽनुतिष्ठति। तेषामष्टानां प्रयोगैक्यात्तन्त्रेणांगान्युभयवादिसंमतानि। तथा तान्येव मारुत्या अपि, इत्यत्रापि तन्त्रं प्राप्तम्। कुतः। वरुणप्रघासान्तःपातित्वेन प्रयोगैक्यात्। ननु अत्र विहारभेद आम्नातः। पृथगग्नी प्रणयत, पृथग्वेदी कुरुतः इति। सोऽयं पृथगनुष्ठानाभावे व्यर्थः स्यात्। मैवम्। हविरासादनमात्रे तदभेदोपयोगात्। अष्टावध्वर्युरुत्तरे विहारे हवींष्यासादयति। मारुतीमेव प्रतिप्रस्थाता दक्षिणास्मिन्निति तद् विधानात् तस्मात्तन्त्रम्। इति प्राप्ते ब्रूमः—देशभेदात् प्रयोगभेदे सत्यंगानुष्ठानमपि भिद्यते। न तदभेदस्य हविरासादनमात्रार्थता युक्ता। तदासादनस्य दृष्टहोमार्थतापरित्यागेनादृष्टार्थकल्पनाप्रसंगात्। न च प्रयोगभेदेनैवासादनभेदस्यापि सिद्धौ वचनमनर्थकं स्यात् इति वाच्यम्। अव्यवस्थया प्रयोगप्राप्तौ तद्व्यवस्थार्थत्वात् सस्मात् भेदेनांगानुष्ठानम् इति।

प्रकृतौ एतद्वत् भेदेन पित्रपेक्षया प्रेतस्योद्देशेन ऊहो भवति, तद्गतं वचनमपि ऊह्यते इति सारः।

६१। एतेन हेतुना नमो व इति नमस्कारमन्त्रे तथा जलनिषेकमन्त्रे च ऊहो नास्तीति भावः।

---

० लौकिकत्वेन एकस्मिन्निति ख पुस्तकपाठः।

०० जल्पन् इति ख पुस्तकपाठः।

एतद्वः पितरो वास इति जप्त्वा पृथक् पृथक् ।
अमुकामुकगोत्रैतत्तुभ्यं वासः पठेत्ततः ।।

इति जपमन्त्र[९२]वचनात् देवताभ्य इति मन्त्र इव ऊहसम्भावनापि नास्ति ।

एवं [९३]प्रदक्षिणावृत्को वृद्धौ नान्दीमुखान् पितॄन् ।
यजेत दधिकर्कन्धुमिश्रान् पिण्डान् यवैः क्रिया ।।

इति (१-२५०) याज्ञवल्क्यवचनात् नान्दीमुखविशेषितपितॄणामेव । वस्तुतः शस्त्राधिकरणन्यायेन[९४] देवतात्वादत्र नान्दीमुखाः पितरो मादयध्व मित्याद्यूहः । प्रदक्षिणावृत्क इति वचनाद्

अपसव्यं ततः कृत्वा पितॄणामप्रदक्षिणम् ।

---

९२ । जपमन्त्राणां पितृसामान्योद्देश्येन विधीयमानत्वात् ऊहो नास्तीति सारः ।

९३ । एवं प्रदक्षिणं कृत्वा..........यजेत् दधिकर्कन्धुमिश्राः पिण्डा यवैः क्रियाः इति अपरार्कपाठः । नान्दीमुखान् पितॄन् नाम मंगलमुखिनः पितॄन् इत्यर्थः । अस्य विषयस्य वृद्धिश्राद्धार्थत्वात् वृद्धौ नान्दीमुखपितॄणां सत्त्वात् पितॄणां विशेषणतया नान्दीमुखपदस्य प्रयोगः । याज्ञवल्क्यवचनेव्याख्याने अपरार्क इत्थमाह—वृद्धौ विवाहादौ नान्दीमुखसंज्ञकान् पितॄनेवं पार्वणोक्तश्राद्ध-प्रकारेण यजेत । मिताक्षरायां विज्ञानेश्वरोऽपि—वृद्धौ पुत्रजन्मादिनिमित्ते श्राद्धे एवमुक्तेन प्रकारेण पितॄन् यजेत पूजयेत् । .................. । विश्वेदेवा इदं वोऽर्घ्यं नान्दीमुखाः पितर इदं वोऽर्घ्यम् इति यथालिंगमर्घ्यदानम् इति ।

ब्रह्मपुराणे स्पष्टमेतत् यथा—

कर्मण्यथाभ्युदयिके मांगल्यवति शोभने ।
जन्मन्यथोपनयने विवाहे पुत्रकस्य च ।।
पितॄन्नान्दीमुखान्नाम तर्पयेद् विधिपूर्वकम् ।

इति । अतोऽत्र नान्दीश्राद्धे पितॄणां बहुत्वमेव वाचनिकम् ।

९४ । शस्त्राधिकरणं जैमिनीये स्तुतशस्त्रयोस्तु संस्कारो याज्यावद्देवता-भिधानात् (२-१-१३) इति सूत्रे विचारितम् । अत्रायं विषयो यत् स्तौति शंसतिधात्वोर्वाच्योऽर्थः स्तुतिपरकतया उपदिष्टः । तत्र अप्रगीतमन्त्रसाध्या स्तुतिः शस्त्रम् । प्रगीतमन्त्रसाध्या स्तुतिः स्तोत्रम् । अनेन देवतायाः सन्तोषोत्पादनि-मित्तं क्रियमाणं कर्त्तुः कर्म अवगम्यते । अतः पुरुषः यं प्रशंसति, स्तौति, शंसति,

**इत्यप्रादक्षिण्यस्य निवृत्तिः एवं स्वधावाचनमन्त्रे नान्दीमुख्यो मातर इति लिंगमप्यूहितव्यम्। युग्मानाशयेदिति अयुग्मनिवृत्तिः। ऋजवो दर्भा इति द्विगुणीकृतनिवृत्तिः। यवैस्तिला° इति प्रत्याम्नानात् मन्त्रस्य प्रकाशनार्थत्वात्तिलोऽसि इत्यर्थे यवोऽसि इत्यूहः। नान्दीमुखान् पितृन् प्रीणाहि नः स्वाहेति च। अस्तु स्वधेत्युच्यमाने एषु आपो निषिंचति इति वचनादाभ्युदयिके न स्वधां प्रयुञ्जीतेति प्रतिषेधात् स्वधावाचनकुशेषु जलनिषेको न कर्तव्य इति केचित्। तदयुक्तम्। तस्य**

---

सन्तोषयति वा यागे, स देवतात्वेन गीयते। प्रकृतौ पितॄणां स्तुतिपरकतया नान्दीमुखात्मविशेषणस्य सत्त्वात् श्राद्धस्य यागरूपत्वेन यागस्य च द्रव्यदेवतागुणपदार्थविशिष्टतया श्राद्धाख्ययागे पितुर्देवतात्वं प्राक् विमृष्टम्। शस्त्राधिकरणन्यायेन स्तुत्यस्य देवतात्वप्रकीर्तनात् श्राद्धे नान्दीनुखानां पितॄणां तद्वत् स्तुत्यत्वमित्यर्थः।

एतदधिकरणभाष्ये शबरस्वामिन आहुः—प्रउगं शंसेति, निष्कैवल्यं शंसति, आज्यैः स्तुवते, पृष्ठैः स्तुवते इति गुणवचनं स्तवनं शंसनं च। तथा इन्द्रस्य (ऋ० वे० १-२-३६) नु वीर्याणि प्रवोचम् इति। यदेतद् गुणवचनं श्रूयते, किमेतद् गुणभूतं देवतां प्रति, उत प्रधानमिति। तत्रोच्यते। स्तुतशास्त्रे संस्कारकर्मणी इति। कुतः? देवताभिधानत्वात्। गुणवचने निर्वर्त्यमाने गुणिनि देवता संकीर्त्यते, नान्यथा तद् गुणवचनं भवति। तत्र प्रत्यक्षं देवताभिधानं गम्यते, देवताप्रकाशेन च प्रत्यक्ष उपकारे यागसिद्धिः इति।

तन्त्रवार्त्तिके कुमारिलश्रीचरणा आहुः—

दृष्टेन कृतसिध्यर्थाः साधयन्ति यतः स्मृतिम्।
स्तोत्रशस्त्राणि तेन स्युः संस्कारा देवताः प्रति॥

जैमिनीयन्यायमालायां माधवाचार्या अपि—

प्रउगं शंसतीत्यादौ गुणतोत प्रधानता।
दृष्टा देवस्मृतिस्तेन गुणता स्तोत्रशस्त्रयोः॥
स्मृत्यर्थत्वे स्तौतिशंस्योर्धात्वोः श्रौतार्थबाधनम्।
तेनादृष्टमुपेत्यापि प्राधान्यं श्रुतये मतम्॥

शत्र सिद्धान्तविस्तरो यथा—स्तोत्राख्याया देवतायाः स्तावकैर्गुणैः सम्बन्धकीर्तनं स्तौतिशंसतिर्धात्वो र्वाच्योऽर्थः। यदि मन्त्रवाक्यानि गुणसंबन्धाभिधानपराणि,

---

° यवैस्तिलार्था इति ख पुस्तकपाठः।

**कालमात्रत्वेनांगांगिसम्बन्धाभावात्[९५]। स्वर्दृशं प्रत्यवीक्षे, शंखवेलायामागन्तव्यमितिवत् अवीक्षणेऽपि न दोषः, शंखध्वन्यभावेऽप्यागमनम्। इयांस्तु विशेषः यत् तत्र [९६]कर्मप्रवचनीयविभक्त्या इह तु कालसप्तम्येति। पूर्वाह्ण इति अपराह्णनिवृत्तिः। पित्र्यमन्त्रवर्ज्यमिति वचनात् अश्नस्सु जपेत् [९७]कृणुष्व पाज इति**

---

तदा धात्वो मुंख्यार्थलाभाच्छ्रुतिरनुगृहीता भविष्यति। यदा तु गुणद्वारेणानुस्मरणीयदेवतास्वरूपप्रकाशनपराणि मन्त्रवाक्यानि स्युः, तदा धात्वो मुंख्यार्थो न स्यात्। लोके हि देवदत्तश्चतुर्वेदाभिज्ञः इत्युक्ते स्तुतिः प्रतीयते तस्य वाक्यस्य गुणसम्बन्धपरत्वात् इति।

९५। कालमात्रत्वेन नाम पौर्वापर्यमात्रता, तत्र अंगांगिसम्बन्धो नास्ति। सोऽयं विषयः कृतार्थयोः सम्बन्धस्य कालार्थत्वात् इति प्रसंगे विचारितः।

९६। कर्मप्रवचनीयाः (पा० सू० १-४-८३) इति पाणिनिवचनात् कर्मप्रवचनीयाख्या एका संज्ञा भवति। अत्रोक्तं पतंजलिना महाभाष्ये—किमर्थं महती संज्ञा क्रियते। अन्वर्थसंज्ञा यथा विज्ञायेत। कर्म प्रोक्तवन्तः कर्मप्रवचनीया इति। के पुनः कर्म प्रोक्तवन्तः। ये सम्प्रति क्रियां नाहुः। ये प्रयुज्यमानस्य क्रियामाहुस्ते कर्मप्रवचनीयाः इति। कर्मप्रवचनीययुक्ते द्वितीया (पा० सू० २-३-८) इति पाणिनिसूत्रेण द्वितीया विभक्तिर्भवति। आधारोऽधिकरणम् (पा० सू० १-४-४५) इति सूत्रेण अधिकरणसंज्ञा भवति। तत्राह सिद्धान्तकौमुदीकारः—कर्तृकर्मद्वारा तन्निष्ठक्रियाया आधारः कारकमधिकरणसंज्ञं स्यात्। इति। सप्तम्यधिकरणे च (पा० सू० २-३-३६) इति सूत्रेण अधिकरणे सप्तमी विभक्तिर्भवति। शंखवेलायामित्युक्तेः सप्तमीनिर्देशात् कालाधिकरणं सूच्यते।

९७। कृणुष्व पाजः इति पंच मन्त्राः यथा—

कृणुष्व पाजः प्रसितिन्न पृथ्वीं याहि राजेवामर्वा इमेन।
तृष्वीमनुप्रसितिन्द्रूणानोस्तासि विद्ध रक्षसस्तपिष्ठैः॥ १॥
तव भ्रमास आशुया पतन्त्यनु स्पृश घृषता शोशुचानः।
तपूंष्यग्ने जुह्वा पतंगानसन्दितो विसृज विष्वगुल्काः॥ २॥
प्रतिस्पशो विसृज तूर्णितमोभवा, पायुर्विशो अस्या अदब्धः।
यो नो दूरे अघशंसो, यो अन्त्यग्ने माकिष्टे व्यथिरादधर्षीत्॥ ३॥
उदग्ने तिष्ठ प्रत्यातनुष्वन्यामित्रां ओषतात्तिग्महेते।
यो नो अरातिं समिधानचक्रे नीचा तन्धक्ष्यतसन्न शुष्कम्॥ ४॥

पंचर्चस्य [98]सुरावन्तमित्यूनचत्वारिंशदृचस्य निवृत्तिर्न त्वावाहन-सम्बन्धिमन्त्र-द्वयस्येति । अत्र मधुमतीनाम्[99] ऋचां स्थाने उपास्मै गायता[100]नरः (ऋ वे०

---

ऊर्ध्वो भव प्रतिविध्याद्ध्यस्म, दाविष्कृणुष्व दैव्यान्यग्ने ।
अवस्थिरा तनुहि यातुजूनां, जामिमजामिं प्रमृणीहि शत्रून् ।। ५ ।।
(शु० य० वे० १३।६-१३)

९८ । सम्पूर्णमन्त्रो यथा– (शु० य० वे० १९-३२)
सुरावन्तं बर्हिषदं सुवीरं यज्ञं हिन्वन्ति महिषा नमोभिः ।
दधानाः सोमं दिवि देवतासु मदे मेन्द्रं यजमानाः स्वर्काः ।।

एते मन्त्राः नान्दीमुखे न पठनीया इति सारः ।

९९ । मधुवाता ऋतायते मधु क्षरन्ति सिन्धवः ।
माध्वीर्नः सन्त्वोषधीः ।।
मधुनक्तमुतषसो मधुमत्पार्थिवं रजः ।
मधु द्यौरस्तु नः पिता ।।

मधुमान्नो वनस्पतिर्मधुमां अस्तु सूर्यः ।
माध्वीर्गावो भवन्तु नः ।। (ऋग्वेदः—१-९०-६)

१०० । उपास्मै गायता नरः पवमानायेन्दवे । अभि देवां इयक्षते ।।
(ऋ० वे० ९-११-१, शु० य० वे० ३३-६२, सा० वे० २-१)
ये त्वाहिहत्ये मघवन्नवर्धन्ये शाम्बरे हरिवो ये गविष्ठौ ।
ये त्वा नूनमनु मदन्ति विप्राः पिबेन्द्र सोमं सगुणो मरुद्भिः ।।
(शु० य० वे० ३३/६३)

जनिष्ठा उग्रः सहसे तुराय मन्द्र ओजिष्ठो बहुलाभिमानः ।
अवर्धन्निन्द्रं मरुतश्चिदत्र माता यद्वीरं दधनद्धनिष्ठा ।।
(शु० य० वे० ३३/६४)

आतू न इन्द्र वृत्रहन्नस्माकमर्धमागहि ।
महान् महीभिरूतिभिः ।। (शु० य० वे० ३३/६५)

त्वमिन्द्र प्रतूर्तिष्वभि विश्वा असि स्पृधः ।
अशस्तिहा जनिता विश्वतूरसि त्वं तूर्य तरुष्यतः ।।
(शु० य० वे० ३३/६६)

९-११-४८) इति पंचर्चम् [१०१]अक्षन्नमीमदन्त (ऋ० वे० १-६-३) इति षष्ठीम् आश्वलायनवचनात्[१०२] श्रावयेत् ।

वसिष्ठोक्तो विधिः कृत्स्नो द्रष्टव्योऽत्र निरामिषः

इति वचनात् आमिषनिवृत्तिः । आमश्राद्धे च मरीचिः—

आवाहने स्वधाकारे मन्त्रा ऊह्या विसर्जने ।
अन्यकर्मण्यनूह्याः स्युरामश्राद्धविधिः स्मृतः ।।

इति वचनादावाहनमन्त्रे हविषे अत्तवे[१०३] इत्यत्र विशेषस्वीकर्त्तव्याय इत्यूहः । विसर्जनमन्त्रे तृप्ता यात[१०४]पथिभिर्देवयानैरित्यत्र तर्प्यमाना इति लोट्° प्रयोगः ।

---

१०१ । अक्षन्नमीमदन्त ह्यव प्रिया अधूषत ।
अस्तोष्यत स्वमानवो विप्रा नविष्ठया मती योजान्विन्द्र ते हरी ।।
(शु० य० वे० ३/५१)

१०२ । अथाभ्युदयिके युग्मा ब्राह्मणा अमूला दर्भाः प्राङ्मुखो यज्ञोपवीती स्यात् प्रदक्षिणमुपचारो यवैस्तिलार्थो गन्धादिदानं द्विर्द्विः ऋजुदर्भानासने दद्यात् । यवोऽसि सोमदैवत्यो गोसवो देवनिर्मितः । प्रत्नवद्भिः प्रत्तः पुष्ट्या नान्दीमुखान् पितॄनिमां लोकान् प्रीणयाहि नः स्वाहा इति यवावपनम् । विश्वेदेवा इदं वोऽर्घ्यं, नान्दीमुखाः पितर इदं वोऽर्घ्यम् इति यथा लिंगमर्घ्यदानम् । पाणौ होमोऽग्नये कव्यवाहनाय स्वाहा, सोमाय पितृमते स्वाहेति । मधुवाता ऋतायते (ऋ० वे० १-६-१८) इति ऋचः स्थाने उपास्मै गायत (ऋ० वे० ६-७-३६) इति पंच मधुमतीः श्रावयेत् । अक्षन्नमीमदन्त (शु० य० वे० ३-५१) इति षष्ठीम् आचान्तेषु मुक्ताशयान् गोमयेनोपलिप्य प्राचीनाग्रान् दर्भान् सन्तीर्य तेषु पृषदाज्य-मिश्रेण भुक्तशेषेणैकैकस्य द्वौ द्वौ पिण्डौ दद्यात् । इति—मिताक्षरा (या० स्मृ० १-२५०) धृतमाश्वलायनवचनम् ।

१०३ । उशन्तस्त्वा निधीमह्युशन्तः समिधीमहि ।
अशन्नुशत आवह पितॄन् हविषे अत्तवे ।। (शु० य० वे० १९/७०)

१०४ । सम्पूर्णमन्त्रो यथा—(ऋ० वे० ७।३८।८ )

वाजे वाजे वत वाजिनो नो धनेषु विप्रा अमृता ऋतज्ञाः ।
अस्य मध्वः पिबत मादयध्वं तृप्ता यात पथिभिर्देवयानैः ।। इति ।

यात इत्यत्र याधातोः मध्यमपुरुषे लोटि बहुवचने रूपम् ।

---

° लेट् इति ख पुस्तकपाठः ।

स्वधावाचनमन्त्रश्च गृह्यान्तरे अनुसन्धेयः। अत्र यद्यपि श्रद्धया° पिण्डदानस्य पिण्डपितृयज्ञप्रकृतित्वेन°° तत्र गन्धपुष्पदानाद्यभावात् अत्रापि न प्राप्नोति तथापि

एते वै पितरो देवा देवाश्च पितरः पुनः।
गन्धपुष्पादिधूपानामेष मन्त्र उदाहृतः॥
मधु साज्यं जलं चार्घ्यं पुष्पं धूपं विलेपनम्।
बलिं दद्याच्च विधिवत् पिण्डोऽष्टांगो भवेत्तथा॥

इति ब्रह्मपुराणवचनात् कर्त्तव्यम्। एवं च प्रेतश्राद्धे एते वै प्रेता देवा देवाश्च प्रेताः पुनरिति। एते वै नान्दीमुखाः पितरो देवा इत्यूहः°°°। एवं विकीर्णदानवैकल्पिकप्रथममन्त्रे[१०५] पित्रन्तराणामेव देवतात्वान्नोभयत्रोहः। निमन्त्रणमन्त्रे त्वेकोद्दिष्टे एकस्मिश्छान्दसबहुवचनसंभवान्नोहः। अत एकोद्दिष्टपारस्करसूत्रे[१०६] (पा० गृ० सू० श्राद्धसूत्र-४) अभिरम्यतामिति वदेदभिरताः स्म इत्यपरे इति विसर्जने बहुवचनान्त एव मन्त्रः प्रदर्शितः। एवं शूद्रेण नमस्कार इति मन्त्रेण श्राद्धादि कर्तव्यम्। पुराणोक्तमन्त्राश्च पठनीयाः। नमस्कारमन्त्रश्च देवताभ्यः पितृभ्यश्चेति मन्त्रो नम इत्येव वा विज्ञानगिरिलिखनात्[१०७]।

---

१०५। ये चास्मत् पिण्डा पितरो लुप्तपिण्डोदकक्रियाः।
ये चाप्यकृतचूडाश्च ये च गर्भाद् विनिःसृताः॥
येषां दाहो न क्रियते येऽग्निदग्धास्तथा परे।
भूमौ दत्तेनान्नेन तृप्ता यान्तु परां गतिम्॥

इति वैकल्पिकविकीर्णदानमन्त्रः।

१०६। बहुवचनस्य सिद्ध्यर्थं पुनरपि दृष्टान्तं ददाति पारस्करवचनोपन्यासेन। तत्रेयं सम्पूर्णा कण्डिका—(४) अथैकोद्दिष्टमेकोर्थ एकं पवित्रमेकः पिण्डो नावाहनं नाग्नौकरणं नात्र विश्वेदेवाः स्वदितमिति तृप्तिप्रश्नः। सुस्वदितमितीकारे ब्रूयुरुपतिष्ठतामित्यक्षय्यस्थानेऽभिरम्यतामिति विसर्गोऽभिरताः स्म इत्येतैरिति।

१०७। शूद्राणामप्येतत् कर्त्तव्यमन्त्रकम् / मिताक्षरा—( या० स्मृ० १-२५५)।

१०८। अयमेव विधिरित्यादिना शूलपाणिमतं पूर्वपक्षत्वेनोपन्यस्यति ग्रन्थकारः। अत्र शूलपाणेरयं भावो यत् शूद्रस्य वेदाध्ययने साक्षादधिकारा-

---

° श्राद्धीय इति ख पुस्तकपाठः, °° विकृतित्वे इति ख पुस्तकपाठः,
°°° इत्याद्यूहः इति ख पुस्तकपाठः।

अत्र शूलपाणिः[१०८] :—

अयमेव विधिः प्रोक्तः शूद्राणां मन्त्रवर्जितः ।
अमन्त्रस्य तु शूद्रस्य विप्रो मन्त्रेण गृह्यते ॥

इति एकोद्दिष्टकथनानन्तरं वराहपुराणेऽभिधानान्नमस्कारमन्त्रेण कर्मानुष्ठानम् । ब्राह्मणपठितमन्त्रादनुष्ठेयार्थस्मरणमिति अमन्त्रस्य शूद्रस्येति परिभाषेयम् । तेन शूद्रस्य स्नानदानादावपि ब्राह्मणेन मन्त्रः पठनीयः । यथा[१०९] पित्र्ये द्विगुणा दर्भा इति श्राद्धप्रकरणाधीतमपि तर्पणादौ गच्छत परिभाषात्वात् । एवं स्त्रीणामिति मन्त्रपाठो ब्राह्मणद्वारा । ब्राह्मणपठितः पाठो ऽदृष्टजनकः । नमस्कारमन्त्रोऽदृष्टजनकः । अत्र कश्चित् । वैदिकमन्त्रपाठे निषेधोऽयम् । पौराणिकमन्त्रास्तु पठनीय एवेति । यथा मत्स्यपुराणे—

नहि वेदेष्वधिकारः कश्चित् शूद्रस्य विद्यते ।
पुराणेष्वधिकारो हि दर्शितो ब्राह्मणैरिह ॥

इति । तन्न । एतस्य शूद्राधिकारप्रतिपादनापरत्वात् । एतस्य संकरजातित्वात् । यत्र प्रतिलोमजस्याधिकारस्तत्र[११०] सुतरां शूद्रस्य इति चेत् वचनात् नयस्य दुर्बलत्वात् । यथा पुराणमधिकृत्य भविष्यपुराणे—

अध्येतव्यं न चान्येन ब्राह्मणं क्षत्रियं विना ।
श्रोतव्यमेव शूद्रेण नाध्येतव्यं कथंचन ॥

इति । तथा—

श्रौतं स्मार्तं च वै धर्म्यं प्रोक्तमस्मिन्नृपोत्तम ।
तस्मात् शूद्रं विना विप्रं न श्रोतव्यं कदाचन ॥

इति । तत्तुच्छम्[१११] । न तावत् ब्राह्मणपठितात् मन्त्रादृष्टमनुष्ठेयार्थस्मरणं नमस्कारमन्त्रेणादृष्टं मन्त्राधिकरणविस्मरणात्[११२] । तत्र हि मन्त्राणां

---

भावेऽपि परंपरया अधिकारोऽस्ति । किंच तद्रीत्या वैदिकमन्त्रविनियोक्तव्यकर्मस्वपि अधिकारोऽस्तु, यत्र यत्र वेदमन्त्राणामुच्चारणमावश्यकं, तत्र तत्र ब्राह्मणेन तत् सम्पाद्यमिति ।

१०९ । प्रतिलोमजपदेन सूत इति संकरजातिविशेषे विवक्षा । उपरिष्टात् तदुपरि व्याख्यादर्शनात् ।

११० । उच्चवर्णायां नीचवर्णेन जातः प्रतिलोमजः ।

१११ । तत्तुच्छमित्यादिना शूलपाणिमतं खण्ड्यते ।

११२ । स्मरणं—स्मृतिश्चेति प्रत्ययभेदेन पदसृष्टेः एकार्थकतायां सत्यां स्मृतिरूपः परत्र पूर्वदृष्टावभासः इति शंकरभगपत्पादैः शारीरकभाष्ये अध्यास-

दृष्टार्थतानिर्णये मन्त्रेण करणभूतेनैव स्मृतं कर्मानुष्ठानं फलाय भवतीति नियमाद-दृष्टमुक्तम्। अतः कथं ब्राह्मणोच्चारितात् मन्त्रात् शूद्रस्यार्थस्मृतिः। शूद्रस्य तप्ततैलपूरणप्रायश्चित्तविधेर्वेदश्रवणप्रतिषेधात्[११३]। कथं च यस्य वेदपाठः प्रतिषिद्धः स द्वादशलक्षणीमीमांसागम्यतात्पर्यस्य वेदस्यार्थं ब्राह्मणोच्चारणादेव जानीयात्। किंच अथातो धर्मजिज्ञासेति[११४] (जै० सू० १-१-१) सूत्रे अथ वेदाध्ययनानन्तरं यतोऽध्यापनमर्थज्ञानफलकमतो न समावर्त्तितव्यं, गुरुकुले एवं स्थित्वा वेदार्थविचारः कर्तव्यः। न त्वधीत्य स्नायात् इति विधिबलेन समा-

---

निरूपणे स्मृतिस्वरूपोक्तेः पूर्वज्ञानसत्तया तत्सत्त्वे शूद्रस्य अधिकाराभावेन अध्ययनविधिघटनाभावात् परवर्तिस्मरणव्यापारो नास्तीत्येवायमर्थः ग्रन्थकृता व्याधायि।

११३। शूद्रः कस्मादपि द्विजात् वेदमन्त्रं न शृणुयात्। यदि शृणुयात् तस्य कर्णयोः तप्ततैलेन पूरणं प्रायश्चित्तस्वरूपतया कर्तव्यम्। एतत् प्रायश्चित्तं मनुप्रभृतिभिः स्वस्मृतिशास्त्रे नोट्टंकितम्। शारीरकभाष्ये श्रीमद्भिः शंकराचार्यैः एतत् लिखितमिति तदुद्धृत्य ग्रन्थकारोऽत्र विवृणोति।

११४। अथातो धर्मजिज्ञासा (जै० सू० १-१-१) इति सूत्रव्याख्याने भाष्यकारा शबरस्वामिन आहुः। यथा—तादृशीं तु धर्मजिज्ञासामधिकृत्याथ-शब्दं प्रयुक्तवानाचार्यः। या वेदाध्ययनमन्तरेण न सम्भवति। कथं वेद-वाक्यानामनेकविधौ विचार इह वर्तिष्यते। अपिच नैव वयमिह वेदाध्ययनात् पूर्वं धर्मजिज्ञासायाः प्रतिषेधं शिष्म परस्ताच्चानन्तर्यम्। नह्येतदेकं वाक्यं पुरस्ताच्च वेदाध्ययनात् धर्मजिज्ञासां प्रतिषेधयिष्यति परस्ताच्चानन्तर्यं प्रकरि-ष्यति। भिद्येत हि तथा वाक्यम्। अन्या हि वचनव्यक्तिरस्य पुरस्ताद्वेदा-ध्ययनाद्धर्मजिज्ञासां प्रतिषेधति। अन्या च परस्तादानन्तर्यमुपदिशति, वेदानधीत्य एत्येकस्यां विधीयते अनूद्यानन्तर्यं विपरीतमन्यस्यामर्थैकत्वाच्चैकवाक्यतां वक्ष्यति। किं त्वधीते वेदे द्वयमापतति गुरुकुलाच्च समावर्तितव्यं, वेदवाक्यानि च विचार-यितव्यानि। तत्र गुरुकुलान्मा समावर्तिष्ट कथं तु वेदवाक्यानि विचारयेदि-त्येवमर्थोऽयमुपदेशः। यद्येवं, न तर्हि वेदाध्ययनं पूर्वं गम्यते। एवं हि समापनन्ति वेदमधीत्य स्नायात् इति। इह च वेदमधीत्य स्नास्यत धर्मं जिज्ञासमान इममाम्नायमतिक्रामेत्। न चाम्नायो नोमातिक्रमितव्यः। तदुच्यते—अतिक्रमिष्याम इममाम्नायमनतिक्रामन्तो वेदमर्थवलं सत्तमनर्थकमव-कल्पयेम दृष्टो हि तस्यार्थः कर्मावबोधनम् नाम इत्यादिः।

एवं भाष्यस्य भावं गृहीत्वा ग्रन्थकारोऽत्रोपन्यस्यति।

वर्त्तितव्यमितयध्ययनपूर्वकताविचारस्याविचारसाध्यश्चानुष्ठेयार्थनिर्णयः। अनुभवपूर्वकं[११५] च स्मरणम्। स कथं ब्राह्मणोच्चारणात् शूद्रस्य स्यात्। यच्च पौराणिकमन्त्रो न पठनीय[११६] इत्युक्तं तदतितुच्छम्। अर्थवादाधिकरणे-सिद्धान्ते[११७] वार्त्तिककारेण

श्रावयेच्चतुरो वर्णान् विप्रं कृत्वा पुरःसरम्।

---

११५। स्मृतिरूपः परत्र पूर्वदृष्टावभास इति शंकराचार्यकृतशारीरकभाष्यगतस्मरणलक्षणस्य आधारेण कथितमेतत् अथवा ज्ञातस्य पुनरभ्यनुज्ञानं स्मरणमिति वाक्यात्। प्रथममध्ययनं ततश्चार्थावगमस्तदनन्तरमनुष्ठानमिति क्रमः। यस्य शूद्रस्य अध्ययने अधिकारो नास्ति तस्य कथं ब्राह्मणपठितेन वेदमन्त्रेण अनुष्ठानं संभवतीति सर्वथा अयुक्तमेवेति शूलपाणिमतं चिन्त्यम्।

११६। अध्येतव्यं न चान्येन ब्राह्मणं क्षत्रियं विना।
श्रोतव्यमेव शूद्रेण नाध्येतव्यं कथंचन ॥

इति शूलपाणिधृतभविष्यपुराणवचनं लक्ष्यीकृत्य पूर्वं खण्डयति तदतितुच्छमिति।

११७। विधिमन्त्रनामधेयनिषेधार्थवादाः वेदस्य प्रविभागाः। विध्यर्थसमर्पकत्वेन विध्यैकवाक्यतया अर्थवादस्य विधिवत् प्रामाण्यमंगीक्रियते। वायव्यं श्वेतमालमेत भूतिकाम इत्यत्र वाक्ये भूतिकामनया नाम ऐश्वर्य्येप्सया वायुदेवतोद्देश्येन श्वेतच्छाग आलभ्यते। अत्र वायुदेवतोद्देश्येन छागस्य उपलब्धव्यत्वे ताद्धितिकप्रत्ययेन वायोः देवतात्वमवगम्यते। अत्र किमर्थं वायुदेवतात्वेनेति पृच्छायामर्थवादः। श्रूयते वायुर्वै क्षेपिष्ठा देवता इति। क्षिप्रगामिदेवतात्वेन वायुः शीघ्रं फलं दद्यात्। अतः वायुरंगीकर्त्तव्यो देवतात्वेन। इति अर्थवादेन विधिः पुष्टिं प्राप्तवान्।

सोऽयं विषयो जैमिनीयेषु आम्नायस्य क्रियार्थत्वात् आनर्थक्यमतदर्थानाम् ……अन्त्ययोर्यथोक्तम् (जै० सू० १।२।१-१८) इति सूत्रेषु विचारितः।

अत्राहुर्भाष्यकाराः—इदं समाम्नायते—वायव्यं श्वेतमालभेत भूतिकामः (तै० सं० ७-१-३०) वायुर्वै क्षेपिष्ठा देवता। वायुमेव स्वेन भागधेयेनोपधावति स एवैनं भूतिं गमयति इति (तै० सं० २-१-१)। वायुर्वै क्षेपिष्ठा देवतेत्यतो यद्यपि क्रिया नावगम्यते क्रियासम्बन्धं वा किंचित् तथापि विध्युद्देशैकवाक्यत्वात् प्रमाणम्। भूतिकाम इत्येवमन्तो विध्युद्देशः। तेनैकवाक्यभूतो वायुर्वै क्षेपिष्ठा देवतेत्येवमादिः। कथमेकवाक्यभावः। पदानां साकां-

**इत्यस्य निषादस्थपतिं[११८] याजयेदितिवत् श्रवणविधित्वात् चत्वारो वर्णाः शृणुयुः। तत्तदनुष्ठानोपयोगितत्तदर्थज्ञानार्थमिति सर्ववर्णानामर्थज्ञानपर्यन्त-**

---

क्षत्वाद्विधेः स्तुतिश्चैकवाक्यत्वं भवति। भूतिकाम आलभते। कस्मात्? यतो वायुः क्षेपिष्ठेति।

अत्र वार्त्तिककारैः कुमारिलश्रीचरणैरित्थमुक्तं—सर्वत्र च किंचित्पदं स्तौति निन्दति चेतराणि त्वेकवाक्यतया तादर्थ्यं प्रतिपद्यन्ते। यत्रापि तादृशं पदं न स्यात् तत्रापि लक्षणा लक्षितलक्षणा वान्यथानुपपत्तेराश्रयणीया। विधि-प्रतिषेधयोश्च स्तुतिनिन्दाभ्यामविनाभावादन्यतरदर्शनेनैतरदनुमाय वाक्यं पूरयि-तव्यम्। एवं भारतादिवाक्यानि व्याख्येयानि। तेषामपि हि श्रावयेत् चतुरो वर्णान् इत्येवमादिविध्यनुसारेण पुरुषार्थत्वान्वेणादक्षरादि व्यतिक्रम्य धर्मार्थकाम-मोक्षाधर्मानर्थदुःखसंसारसाध्यसाधनप्रतिपत्तिरूपाशनपरित्यागांगभूतं फलम् इति।

जैमिनीयन्यायमालायां माधवाचार्या अपि—

न विधेधावास्ति धर्मे किं किंवासौ तत्र विद्यते।
विध्यर्थवादशब्दानां मिथोऽपेक्षापरिक्षयात्॥
नास्त्येकवाक्यता धर्मे प्रामाण्यं संभवेत् कुतः।
विध्यर्थवादौ साकांक्षौ प्राशस्त्यपूरुषार्थयोः॥
तेनैकवाक्यता तस्माद् वादानां धर्ममानता।

अत्र सिद्धान्तविस्तरो यथा—यतः क्षिप्रगामिस्वभावतया शीघ्रफलप्रदो वायुरस्य पशोर्देवता। ततः प्रशस्तमिमं वायव्यं पशुमालभेत इति वाक्ययोरन्वयः। तस्माद् अर्थवादा धर्मे प्रमाणम् इति।

११८। वेदश्रवणाधिकारितया चतुर्णां वर्णानां श्रुतिरस्ति श्रावयेच्चतुरो वर्णान् इति। नात्र शुद्ररुच्यवते। यथा निषादस्थनिविषयो यः निषादः स स्थपतिः। तं याजयेत्। प्रकृतौ यः चतुर्णां वर्णानां मध्ये पठितः सोऽत्र श्रवणायाधिकारी।

सोऽयं विषयः जैमिनीये निषादस्थपत्यधिकरणे स्थपतिर्निषादः स्यात् शब्द-सामर्थ्यात्। लिंगदर्शनाच्च इति सूत्रद्वये विचारितः।

अत्राहुर्भाष्यकाराः वास्तु मध्ये रौद्रं चरुं निर्वपेत्, यत्र रुद्रः प्रजाः शमये-दित्येतामिष्टिं प्रकृत्योच्यते। एतया निषादस्थपतिं याजयेदिति। निषादस्थपतिं प्रति सन्देहः। किमधिकृतानामन्यतम उतान्त एवेति.........नात्र षष्ठीं

**श्रवणविधेः प्रदर्शितत्वात् । अत एव भारतीयसहस्रनाम्नां[११९] श्रवणकीर्त्तनं[१२०] चोपक्रम्य [१२१]शूद्रः सुखमवाप्नुयात् इति फलश्रवणात् न शूद्राधिकारप्रतिपादनार्थमिदं वचनं शूद्रशब्दस्य सूतवाचकत्वाभावात्[१२२] । यच्च भविष्यपुराण-**

---

शृणुमः..........तत्र षष्ठ्यर्थे कल्पयन्नश्रुतं गृह्णीयात् । तस्मान्निषाद एव स्थपतिः स्यात् ।

कुमारिलश्रीचरणा यथा—ऐकाधिकरण्यात् सामर्थ्यं, सामर्थ्याच्च समासः । यदि च निषादशब्देन निषाद एवोच्यते, स्थपतिशब्देन स्थपतिरेव, ततो भिन्नाधिकरणत्वात् सामर्थ्याभावः । सामर्थ्याभावात् समासाभावः । तस्मान्निषादशब्देन स्थपतिं यावत् मन्तव्यम् ।

जैमिनीयन्यायमालायां माधवाचार्या :

द्विजः स्थपतिरन्यो वा द्विजः षष्ठीसमासतः ।
कर्मधारयमुख्यत्वान्निषादो रौद्रयागवत् ।।

अत्र सिद्धान्तविस्तरो यथा—निषादश्चासौ स्थपतिश्च इति कर्मधारयसमासस्य मुख्यत्वात् । षष्ठीसमासे तु संकीर्णजातिविशेषवाचिना निषादशब्देन तत्संबन्धं उपलक्षेत । न त्वयं कर्मधारये दोषोऽस्ति । ततस्तात्कालिकाचार्योपदेशादिना विद्यां सम्पाद्य धनिको निषादो रौद्रयागं कुर्यादिति ।

११९ । भारतीयसहस्रनाम नाम महाभारतीय-अनुशासनपर्वान्तर्गतभीष्मप्रोक्तं विष्णुसहस्रनामस्तोत्रम् । तच्च १४९ अध्याये विवृतम् ।

१२० । विष्णोः श्रवणकीर्त्तनविधिमुपक्रम्य सहस्रनामाध्याये विवृतमित्थम्-

इतीदं कीर्तनीयस्य केशवस्य महात्मनः ।
नाम्नां सहस्रं दिव्यानामशेषेण प्रकीर्तितम् ।।
य इदं शृणुयान्नित्यं यश्चापि परिकीर्तयेत् ।
नाशुभं प्राप्नुयात् किंचित् सोऽमुत्रेह च मानवः ।।
(महा० भा० अनु० १४९ । १२१-२२)

१२१ । सम्पूर्णश्लोको यथा— (महा० भा० अनु० १४९।१२३)

वेदान्तगो ब्राह्मणः स्यात् क्षत्रियो विजयी भवेत् ।
वैश्यो धनसमृद्धः स्याच्छूद्रः सुखमवाप्नुयात् ।। इति ।

१२२ । सूतः संकरजातिविशेषः प्रतिलोमजः । तल्लक्षणं यथा—

ब्राह्मण्यां क्षत्रियात् सूतो वैश्यात् वैदेहकस्तथा ।
शूद्राज्जातस्तु चण्डालः सर्वधर्मबहिष्कृतः ।। (या० स्मृ० १-९३)

वचनं तद् ब्राह्मणसहितस्यैव शुद्रस्य श्रवणं न स्वतन्त्रस्येत्येतत् प्रतिपादनार्थम्। अन्यथा भारतश्रवणेऽपि नियमविधिपालनात् शूद्रस्याध्ययनादर्थज्ञानाभावेन धर्मानुष्ठानं न स्यात्। अथवा श्रौतं सप्तसंस्थादि[१२३] स्मार्त्तं पार्वणं स्थालीपाकादि अग्निसाध्यत्वात् भारतोक्तमपि तेन न कर्त्तव्यम्। न तु प्रासादपुष्करिणीमखादिवैदिकमन्त्रसाध्यमपि। अथवा

नीवीं विसंस्र (वा) जपेन्नमो वः पितरस्त्विति। इति
यथेह पुरुषान्तं च मन्त्रं जप्त्वा कृतांजलिः॥

इति ब्रह्मपुराणवचनात् नमो व इति वैदिकसन्त्राः शूद्रेण न पठनीयाः। यत्तु सहस्रनामभाष्ये[१२४] आचार्यैः °शूद्रो यज्ञे नावक्लृप्त इति श्रुतेः, शूद्रः सुखमवाप्नुयात् इति शुद्रस्य श्रवणेनैव इत्युक्तं तत् ब्रह्मयज्ञाभिप्रायं, न तु काम्यप्रायश्चित्तप्रयोगाद्यभिप्रायं वार्त्तिकविरोधात्। अत एवोत्तरमीमांसायां वाचस्पतिमिश्रैः शूद्रस्यापि[१२५] मोक्षाधिकारः समर्थितः अपशूद्राधिकरणे। अन्यथा

---

१२३। सोमयागे सप्त संस्था भवन्ति। ता यथा—अग्निष्टोमसंस्था, षोडशिसंस्था, अतिरात्रसंस्था, अत्यग्निष्टोमसंस्था, वाजपेयसंस्था, आप्तोर्यामसंस्था, एताः संस्थाः क्रमेण सोमयागे भवन्ति।

१२४। आचार्यैर्नाम शंकराचार्यैः। विष्णुसहस्रनामभाष्ये—(१२३)

वेदान्तगो ब्राह्मणः स्यात् क्षत्रियो विजयी भवेत्।
वैश्यो धनसमृद्धः स्यात् शूद्रः सुखमवाप्नुयात्॥

इति श्लोकोपरि शंकराचार्यैः विवृत्ताया निष्पत्तेराधारेण ग्रन्थकारः समन्वयति-तद्भाष्यं यथा—शुद्रः सुखमवाप्नुयात् श्रवणेनैव न तु जपयज्ञेन, तस्माच्छूद्रो यज्ञे नावक्लृप्त (तै० सं० ७-१-१-६) इति श्रुतेः। शान्ति० ३२७-४९— श्रावयेच्चतुरो वर्णान् कृत्वा ब्राह्मणमग्रतः। इति महाभारते श्रवणमनुज्ञायते। कुर्यात्.........च्छ्रवणाच्च शूद्रयोनिः इति हरिवंशे। यः शूद्रः शृणुयात् स सुखमवाप्नुयात् इति व्यवहृतेन सम्बन्धः त्रैवर्णिकानां कीर्त्तयेदित्यनेन इति।

१२५। ब्रह्मसूत्रस्य अपशूद्राधिकरणे—शुगस्य तदनादरश्रवणात्तदाद्रवणात् सूच्यते हि। क्षत्रियत्वगतेश्चोत्तरत्र चैत्ररथेन लिंगात्। संस्कारपरामर्शात् तदभावाभिलापाश्च। तदभावनिर्धारणे च प्रवृत्तेः। श्रवणाध्ययनार्थप्रतिषेधात् स्मृतश्च। (१/३/१०/३४-३८) इति सूत्रचतुष्टयस्य शंकरभगवत्कृतभाष्योपरि

---

० न तु ब्रह्मयज्ञेन क्प्त इत्युभयत्र पाठः।

सर्वापेक्षा च यज्ञादिश्रुतेः श्रवणनियमात् पूर्वापेक्षज्ञानस्याभावात् विदुरादिमोक्ष-समर्थनं[१२६] न स्यादिति । तस्मात् पुराणोक्ततर्पणश्राद्धस्नानादिमन्त्राः स्त्रीशूद्रा-दिभिः पठनीयाः, वेदमन्त्राश्च यज्ञे त्रैवर्णिकस्त्रीभिः, न श्रौतमन्त्राः इति तत् सिद्धं पौराणिकमन्त्राणाम् एकोद्दिष्टप्रेतश्राद्धादौ शूद्रादिभिरूहेन पठनमिति ।। इति श्राद्धप्रदीपे ऊहालोकः ।

—०—

---

कृतायां भामत्यां वाचस्पतिमिश्रैः सिद्धान्तितं यत् वैदिकमन्त्रे श्रवणेऽप्यधिकारो नास्ति शूद्राणाम् । श्रावयेत् चतुरो वर्णान् इति चेतिहासपुराणाधिगमे चातुर्वर्ण्याधिकारस्मरणात । वेदपूर्वकस्तु नास्त्यधिकारः शूद्राणामिति स्थितम् इति भष्यसिद्धान्तं समर्थयद्भिः मिश्रैः पौराणिकमन्त्रेण शूद्रस्य मोक्षाधिकारो विवृत्त, ग्रन्थकृता समर्थित इति पदेन वाचस्पतिमिश्राः शंकरभगवत्सिद्धान्तेन सह एकमता इति उक्तम् ।

१२६ । द्रष्टव्यम् शारीरकभाष्यम्—( १/३/१०/३८ )

इति विप्रमिश्रकृतश्राद्धप्रदीपस्य ऊहालोके श्रीव्रजकिशोरस्वाईकृता रश्मि-टिप्पणी समाप्ता ।।

—०—

# बाधाभ्युच्चयालोकः[1][2]

**जैमिने र्मतमालोच्य विप्रमिश्रेण धीमता ।**
**क्रियते श्राद्धविषये बाधाभ्युच्चयनिर्णयः[3] ।।**

---

१ । पूर्वस्मिन्नालोके श्राद्धविषये ऊहो विचारितः । स च जैमिनीयदर्शनस्य नवमाध्यायविषयः । अनन्तरमस्मिन्नालोके दशमाध्यायान्तर्गतबाधो विविच्यते । प्रकृतिवत् विकृतिः कर्त्तव्या इति न्यायेन प्रकृतियागगतधर्माः विकृतियागेषु अतिदेशेन प्राप्यन्ते । किन्तु प्रयोजनपरवशतया कदाचित् अतिदिष्टस्य धर्मस्यापि अन्यथा क्रियते, स भवति ऊहविषयः स च प्राक् प्रदर्शितः । इत्थं चातिदिष्टेऽपि धर्मे कदाचित् तस्य निवृत्तिर्भवति । स निवृत्यात्मा बाधसंज्ञको जैमिनीयदशमाध्यायविषय एतदालोके विमृश्यते । तल्लक्षणं जैमिनीयस्य "विधेः प्रकरणान्तरेऽतिदेशान् सर्वकर्मस्यात्" (१०।१।१) इति सूत्रस्य भाष्ये शबरस्वामिन आहुः । "बाधो नाम यदेवेदमिति निश्चितं विज्ञानं कारणान्तरेण मिथ्येति कल्प्यते तथा" । इति । जैमिनीयन्यायमालायां माधवाचार्या अपि—

रूपान्तरत्वादासन्नं नवमे स्थितमूहनम् ।
निवृत्तित्वाद् विप्रकृष्टो दशमे बाध ऊच्यते ।। इति १०।१।१।१

अत्र विस्तरो यथा—अतिदिष्टपदार्थस्य रूपान्तरमूहनम्, ततः संनिकृष्यते । बाधस्तु पदार्थनिवृत्तिस्ततो विप्रकृष्यते । तस्मान्नवमदशमयोरध्याययोः पूर्वोत्तरभाव उपपन्नः । इति । तन्त्रसिद्धान्तरत्नावल्यां (पृ० १३९) चिन्नस्वामिशास्त्रिचरणा यथा—"बाधो नाम निवृत्तिः । प्रकृतितोऽतिदेशतः संभवत्प्राप्तिकामानामंगानां केनचित् कारणेन विकृतावननुष्ठानमिति यावत्" । इति उपरिष्टात् सर्वं ग्रन्थकृता सम्यक्तया उदाहरणमाध्यमेन वक्ष्यते ।

२ । अभ्युच्चयो नाम समुच्चयः समष्टि र्वा । प्रकृतिगतानां धर्माणां विकृतौ चोदकेन प्राप्तौ प्रयोजनवशेन यदन्यथाकरणं तदूहः, किन्तु चोदकप्राप्तप्रकृतिगतधर्मापेक्षया विकृतावाधिक्येन ये केचन धर्माः प्रयोजनवशेन अनुष्ठीयन्ते, तदनुष्ठानम् अभ्युच्चय इति । शबरस्वामिनो भाष्ये तल्लक्षणमाहुः—"अभ्युच्चयो यदिदमिह भवतीति विज्ञाने परमपि भवतीति विज्ञानम्" । इति अत्र इदं नाम प्रकृतिगता धर्माः, इह नाम विकृतौ । इत्यर्थः टुप्टीकायां भट्टचरणा-

अपि—अभ्युच्चयो नाम अत्र न किंचित् वस्तुस्वरूपं विद्यते, किन्तु उपहोमैः अनुयाजा न बाध्यंते इति बाधाभावमात्रम् अभ्युच्चय इत्युच्यते । (११।१।१।१)

किंच पार्थसारथिमिश्राः शास्त्रदीपिकायामाहुः—

ऊहे सिद्धेऽतिदिष्टानां बाधाभ्युच्चयचिन्तया ।
इयत्ता दशमेऽगानां विकृतिष्वभिधीयते ॥ इति ॥(१०।१।१।३)

एतद्व्याख्याने मयूखमालिकायां सोमनाथयाजी यथा—शिष्यावधानार्थं वृत्तकथनपूर्वकं वर्तिष्यमाणं प्रतिजानीते ऊह इति । विकृतिष्वतिदिष्टानामंगाना-मियत्तेत्यन्वयः । अभ्युच्चयो वैकृतैः प्राकृतानां समुच्चयः । इति । अत्र प्राकृतानां नाम प्रकृतिगतानां चोदकप्राप्तानां धर्माणां, वैकृतैर्नाम विकृतिभूते यागे प्रयोजनवशेन अनुष्ठीयमानैरधिकैः धर्मैः सह समुच्चयः समष्टिः समवायो वेत्यर्थः ।

३ । श्राद्धभागे कुत्र कुत्र बाधस्य अभ्युच्चयस्य च अवसरो भवति तद्-विचारार्थमयं बाधाभ्युच्चयालोकः प्रसरति । अत्र बाधाभ्युच्चययोः समंजसता कीदृशी इति तत्रैव मयूखमालिकायां यथा—"अत्र बाधाभ्युच्चययो र्नाध्यायार्थ-त्वमध्यायभेदापत्तेरित्याशयेनोक्तमियत्तेति । तथा सांगपरिमाणमेकमेवाध्यायार्थ मिति न भेदप्रसक्तिरित्याहुः । वस्तुतस्तु बाध एवाध्यायार्थः । तस्य चैक-त्वान्नाध्यायभेदप्रसङ्गः । अत एवानूपदमूहबाधयोरेव संगतिं वक्ष्यति । न च नक्षत्रेष्ट्युपहोमाद्यै र्नारिष्टादीनामभ्युच्चयस्यापि चिन्तनात् कथं बाधस्यैवाध्या-यार्थत्वमिति वाच्यम् ॥ बाधापवादतया बाधस्यैव स्थिरीकरणार्थमभ्युच्चय-चिन्तनोपपत्तेर्नत्वेतावतास्याध्यायार्थत्वप्रसक्तिः । अन्यथा द्वितीयादावभेदादेरपि प्रतिपादनेन तस्याप्यध्यायार्थत्वप्रसङ्गात् । तस्मादियत्ताभिधीयत इति प्रयोजन-निर्देशो नाध्यायार्थनिदेशः । यथा तन्त्रप्रसङ्गयोरेवैकादशद्वादशाध्यायार्थत्वं प्रयोगपरिमाणं तु फलं, तद्वदिहापि बाध एवाध्यायार्थस्तस्य विकृतिगतपदार्थे-यत्ताफलम् अन्यथा तत्रापि प्रयोगेयत्ताया ऐवैकादशद्वादशाध्यायार्थत्वं तन्त्रप्रसंगयो-स्तूपायत्वमिति वक्तुं शक्यत्वेनैकादशद्वादशयोरप्येकाध्यायत्वं स्यादिति ध्येयम् । इदमत्रावधेयम्—अबाधो द्विविधः । अभ्युच्चयपर्यन्तः केवलश्च । यत्र वैकृतेन प्राकृतस्य बाधप्रसक्तावबाधः प्रतिपाद्यते सोऽभ्युच्चयपर्यन्तः । तत्र प्राकृत-वैकृतयोरुभयोरप्यनुष्ठेयत्वात् । यत्र तु न वैकृतं किंचित् किन्तु प्राकृतस्यैव लुप्तद्वारत्वादिशंकया बाधप्रसक्तावबाधो व्युत्पाद्यते स केवलः । तत्र प्राकृत-मात्रस्यैवानुष्ठेयत्वेनाभ्युच्चयाभावात् यथा खले बाल्यादौ पर्यूहणादेः । एवं-

**तत्रादावागमिकप्राप्तबाधो[४] नाम सामान्यशास्त्रस्य साधारणधर्मदर्शनेन सर्वविशेषानुपसर्पतः क्वचित् विषयविशेषे विशेषदर्शने या प्राप्तिरपोद्यते स उच्यते ।**

**तत्र प्राकृतवैकृतबाधो[५] लुप्तार्थप्रत्याम्नातप्रतिषेधेष्ववघातशरानार्षेयवरणेषु चोदकस्योत्कीलनम् ।**

---

चाभ्युच्चयग्रहणं केवलाबाधस्याप्युपलक्षणमित्यूहनिरूपणानन्तरं बाधनिरूपणस्यावसरलक्षणा संगतिरिति ।

४ । बाधस्य साधारणलक्षणं प्रदर्शयितुकामो ग्रन्थकारः आगमिकप्राप्त बाधस्वरूपं निर्दिशति तत्रादौ इत्यादिना । आगमो नाम वेदः शास्त्राणि, शब्दो वचनं वा । तेन प्राप्तः बाधः आगमिकप्राप्तबाधः वाचनिकप्राप्तबाधो वा । सामान्यशास्त्रं नाम साधारणवचनम् । एकस्मिन् सामान्ये अधिकरणे वर्त्तमानान् सर्वान् विशेषान् उपसर्पति नाम अभिव्याप्य तिष्ठति । क्वचित् क्वचित् विशेषतया तस्य प्राप्तिः न भवति । एतस्य अप्राप्तिरूपस्य अपि प्राप्तिः वचनेन संभवति । एतस्य संज्ञा आगमिक प्राप्तबाध इति ।

५ । प्रकृतिगता धर्मा विकृतिषु बाध्यन्ते । सोऽयं बाधस्त्रिविधः । लुप्तार्थः, प्रत्याम्नातः, प्रतिषेधः । इति । उदाहरणं क्रमेण दत्तम् अवघातशरानार्षेयवरणेषु इत्यादि । प्रथमस्य लुप्तार्थस्य उदाहरणं यथा—"प्राजापत्यं घृते चरुं निर्वपेच्छतकृष्णलमायुष्कामः" (मै० सं० २।२।२) इति । आयुष्कामेष्ट्यौ इदं वाक्यं श्रूयते । तत्र व्रीहिस्थाने कृष्णलो व्यवह्रियते । कृष्णलस्य तुषहीनत्वात् तत्र व्रीहिगतावहननं बाध्यते । तस्य तदर्थत्वलोपात् अवहननस्य तुषविमोकार्थत्वात् । अयं विषयो जैमिनीये "अपि वाऽभिधानसंस्कारद्रव्यमर्थे क्रियेत तादर्थ्यात् । विधेः प्रकरणान्तरेऽतिदेशात् सर्वकर्म स्यात् । तेषामप्रत्यक्षशिष्टत्वात्" (१०।१।१-३) इति सूत्रे विचारितः । तत्राहु र्भाष्यकाराः— सर्वं प्राकृतं विकृतौ कर्त्तव्यमिति । क्वचिदभिधानसंस्कारद्रव्यं निर्वर्त्तितुमर्हति यल्लुप्तार्थम् । कुत एतत् । अभिधानसंस्कारद्रव्यं हि प्रयोजने सति क्रियते, नाप्रयोजनम् । अन्यस्मै प्रयोजनाय तदाम्नायते, न स्वार्थम् । ननु चोक्तं लुप्तार्थमपि क्रियते, वचनप्रामाण्यात् । यथा कृष्णलैः पाकः । नेत्याह । नास्ति लुप्तार्थस्य देशकं वचनम् । न वैकृतं कर्म प्राकृतैरंगप्रधानैः सहैकवाक्यतां याति नैवं विज्ञायते, यागेन फलं कुर्यात्, कथं प्राकृतैरंगैरिति । कथं तर्हि । यथा प्राकृतेन यागेन फलं साधितमभूत्तथेति ।.....सर्वं चैतदन्याय्यम् । तस्मादेवमभिसम्बन्धः क्रियते । यथा प्राकृतेन यागेन फलं साध्यते, तथैवैतेनापीति ।

किमतो यद्येवम् एतदतो भवति । प्राकृतान्यंगानि यस्मै प्रयोजनाय प्रकृतौ भवन्ति, नासति तस्मिन् प्रयोजने विकृतौ चोदितानि भवन्ति । तस्मात् लुप्त-प्राकृतप्रयोजनं न चोदकश्चोदयति, इति ।

टुप्टीकायां सिद्धान्तेऽपि भाट्टा एवमाहुः । "प्रकृतौ पदार्था गृह्यन्ते, न तु पदार्थापेक्षया । किन्तूपकारापेक्षया । स एव कथंभावः श्रुत्योपकारान् गृह्णाति, लक्षणया पदार्थान् । श्रुतिश्च लक्षणाया गरीयसी । इति ।

तन्त्ररत्ने पार्थसारथिमिश्रा अपि—उपकारेष्वतिदिश्यमानेषु ये यत्र न संभवन्ति ते तत्र मा नामातिदिश्यन्ताम्, पदार्थास्तु तत्रातिदिष्टाः प्राकृता उपकारसंभवेऽप्युपकारान्तरमदृष्टं कुर्युः, वचनप्रामाण्यात् । तस्माल्लुप्तार्थमपि प्रवर्तते नास्ति कस्यचिद् बाधः । इति ।

जैमिनीयन्यायमालायां माधवाचार्या यथा—

अवघातः कृष्णलानामस्ति नो वास्ति पाकवत् ।
प्रत्यक्षोक्त्या चरेत् पाकमवघाते तु नास्ति सा ।।

अत्र वस्तरो यथा—विकृतिरूपाणां काम्येष्टीनां काण्डे पठ्यते प्राजापत्यं घृते चरुं निर्वपेच्छतकृष्णलमायुष्कामः । इति । कृष्णलशब्दः सुवर्णसकलवाची । प्रकृतौ व्रीहीनवहन्ति इति पुरोडाशहेतूनां व्रीहीणामवघातो विहितः, सोऽत्र चरुहेतूनां कृष्णलानां चोदकवशादस्ति, नो वा इति सन्देहः । 'अस्ति' इति पूर्वपक्षप्रतिज्ञा । वितुषीकरणं प्राकृत उपकारः । लुप्तेऽप्युपकारे तत्सत्तायां पाकवत् इति निदर्शनम् । लुप्तेऽपि विकलोदनोपकारे पाकः प्रतिवादिनोऽभिमतः तद्वदवघातोऽप्यस्तु इति चेत् । घृते श्रपयति इति प्रत्यक्षोक्त्या पाकोऽभ्युप-गन्तव्यः । अवधाते तु सोक्ति र्नास्ति—इति वैषम्यादवघातो नास्ति । इति ।

द्वितीयस्य प्रत्याम्नातस्य उदाहरणं यथा—शरमयं बर्हिर्भवति ( तै० सं० २।१।७।७) इति । प्रकृतियागे श्रूयते कुशमयं बर्हिर्भवति । सोऽग्रं कुशमय-बर्हिर्विनियोगोऽतिदेशेन विकृतौ प्राप्यते । किन्तु शरमयं बर्हिर्भवति (तै० सं० २।१।७।७ ) इति प्रत्याम्नानात् प्रतिशब्दात् प्रतिवचनाद् वा बर्हिषः बाधो भवति ।

इमं विषयं तन्त्रसिद्धान्तरत्नावल्यां चिन्नस्वामिशास्त्रिचरणा इत्थं विमृशन्ति । पृ०—१३९-१४० । यथा—विकृतिविशेषे नैवारश्चरुर्भवति । इतिविहितैर्नीवारैः प्राकृतानां व्रीहीणां बाधः । शरमयं बर्हिर्भवति इत्यत्र वेदपरिस्तरणादिकार्ये विहितैः शरैः प्राकृतानां कुशानां बाधः । शरास्तृणविशेषाः । इति ।

तृतीयस्य प्रतिषेधस्य उदाहरणं यथा—नाऽर्षेयं वृणीते, न होतारम् । (तै० ब्रा० १।६।६।१) इति । चातुर्मास्यान्तर्गते महापितृयज्ञे इदं वचनं श्रूयते । तत्र आर्षेयहोतृवरणं न भवति । तद्भिन्नानामितरेषां वरणं भवति । चोदकद्वारा सर्वेषां होतृणां वरणे प्राप्तेऽपि एतद् वचनेन आर्षेयहोतृवरणं न भवति । किन्तु वचनमिदं पर्युदासत्वेन अंगीक्रियते । कुत इति चेत् प्रतिषेधत्वेनांगीकरणे विधि र्न भवति । पर्युदासत्वेनांगीगारे आर्षेयहोतृभिन्नानामन्येषां होतृणां ग्रहणं न भवति । तत्रायं शास्त्रानिकर्षो यत्—आर्षेयभिन्नान् वृणीते इति । एतन्निर्मली कुर्वन्नः चिन्नस्वामिशिास्त्रिचरणा वदन्ति (पृ०—१४०) चातुर्मास्यान्तर्गतमहापितृयज्ञे नाऽऽर्षेयं वृणीते, न होतारम् (तै० ब्रा० १।६।६।१) इति निषेधात् आर्षेयहोतृवरणभिन्नं सर्वमंगजातमनुतिष्ठेदिति वचनकल्पनात् होतृवरणादे र्निवृत्तिः । अत्र पर्युदास एवांगीक्रियते, न प्रतिषेधः । प्रतिषेधांगीकारेण हि अप्रसक्तस्य प्रतिषेधायोगात् प्रतिषेध्यस्य प्रसक्ति र्वक्तव्या । प्रसक्तिश्चशास्त्रेणेति शास्त्रप्राप्तस्यात्यन्तिकनिषेधायोगाद् विकल्पापत्तिः । स चाष्टदोषदुष्ट इति तत्परिहारार्थं पर्युदासोऽंगीक्रियते । पर्युदासे हि न प्राप्ति-र्विषयस्याऽऽवश्यकी । तद्भिन्न एव विध्यभुपगमात् । तत्र प्राप्त्यभावादेव च नाऽऽनुष्ठानमिति ।

विषयोयं जैमिनीये अनुयाज-महापितृयज्ञयो र्ये यजामहहोतृवरणपर्युदासाधिकराणे प्रतिषेधः प्रदेशेऽनारभ्यविधाने चप्राप्तप्रतिषिद्धत्वाद् विकल्पः स्यात् । अर्थप्राप्तवदिति चेत् । न तुल्यहेतुत्वादुभयं शब्दलक्षणम् । अपि तु वाक्यशेषः स्यादन्याय्यत्वाद्विकल्पस्य विधीनामेकदेशः स्यात् (१०।८।१-४) इति सूत्रेषु विचारितः ।

अत्राहुः सिद्धान्ते भाष्यकारा यत्—महापितृयज्ञेऽपि प्रकृतिवदितिवचनाद्धोत्रार्षेयवरणमिह कर्त्तव्यं प्राप्तम् । तदुच्यते प्रकृतिवत् कर्त्तव्यं वरणं वर्जयित्वेति । न शब्दोऽत्र वृणीतेरर्थेन संबध्यते । प्रत्ययार्थस्त्वनुवादः । यदत्र प्रकृतिवत्-कर्त्तव्यं तद्वरणं वर्जयित्वेति । इति ।

टुप्टीकायां भट्टचरणा अपि—एवमिहापि, ये यजामहं विपरिवर्त्तमानमनूद्य पर्युदासार्थो विधीयते । तथा चोदकेऽपि यत्प्रकृतिवत्पितृयज्ञेन तद्वरणवर्जमिति । अथवा ये यजामहः सामान्येन प्राप्यमाण एवानुयाजवाक्येन विशेष्यते, अनुयाजवर्जं यजामहं करोतीति । पितृयज्ञेष्वेवमेव । इति ।

तन्त्ररत्ने पार्थसारथिमिश्राः यथा—सम्बद्धार्थतयैकमेवमिहपि ये यजामहं विपरिवर्त्तमानमन्तरवाक्यविहितमनूद्य तदंगत्वेन पर्युदासार्थोऽनुयाजव्यतिरिक्त-

**एवं[६] सामान्यविशेष-नित्य-नैमित्तिक-क्रत्वर्थ-पुरुषार्थ-पौर्वापर्या-भ्युच्चय-सावकाश-निरवकाशां-गप्रधान-तद्धर्मबाधेषु पदाहवनीय-पांचदश्यसाप्तदश्य-एकविंश-अदक्षिण-सर्ववेदसदक्षिण-ऐन्द्री-आग्नेयी-सुब्रह्मण्याह्वान-स्वरनियम-सोमपर्वकालक्रमाचमनादिषु बाध्यत्वाभिमतशास्त्रस्य तद्व्यतिरिक्तविषयत्वलक्षणो बाधो भवति ।**

---

विषयता विधीयते । तथा चोदकेऽपि यत्प्रकृतिवत् पितृयज्ञेन यजेते तद्वरणवर्जमिति वरणपर्युदासः । इति ।

जैमिनीयन्यायमालायां माधवाचार्या यथा—

नाऽऽर्षेयं न च होतारं नानुयाजेष्वितीदृशे ।
विकल्पः पर्युदासो वा स्यादाद्यो वचनद्वयात् ।।
अन्याय्यत्वाद् विकल्पस्य विध्यंशः सा निषेधगीः ।
तेनानुयाजयागस्थस्तदर्थं पर्युदस्यति ।।

अत्र सिद्धान्तविस्तरो यथा-यदि च वृणीते इत्याख्यातप्रत्ययेन सम्बध्यते, तदा वरणं न कर्त्तव्यम् इति स निषिद्ध्यते । न त्वेवं सम्बध्यते, किंत्वनुयाजपदेन वृञ्धातुना च सम्बध्यते । तथा सति अनुयाजव्यतिरिक्तेषु यागेषु ये यजामहः कर्त्तव्यः, वरणव्यतिरिक्तमंगजातमनुष्ठेयम् इति ये यजामहवरणपर्युदासेन विधेरेव विशेषितत्त्वे सति प्रतिषेधवाक्यस्य कस्यचिदभावान्न विकल्प शंकितुमपि शक्यः ।

६ । बाधस्य तटस्थलक्षणमुक्त्वा ग्रन्थकार इदानीं स्वरूपलक्षणं करोति एवं सामान्यविशेष इत्यादिना उदाहरणान्यपि पदाहवनीयादिना निर्देशति । तत्रायं समन्वयः क्रमेण यथा—सामान्यविशेषगतबाधस्य उदाहरणं पदाहवनीय इति । सामान्यविहितं विशेषविहितेन बाध्यते । तदपि विधेयभेदे विधेयैक्ये वेति द्विधा । तत्राद्योदाहरणं यथा—पदेन आहवनीयस्य बाधः । इति (मीमांसाकोषः ५म भागः पृ०-२९६०)। चिन्नस्वामिशास्त्रिचरणास्तन्त्रसिद्धान्तरत्नावल्यामाहु यथा—(पृ०-१४३) एवं सामान्यशास्त्रविहितस्य विशेषशास्त्रेण बाधः यथा यदाहवनीये जुह्वति (तै० ब्रा० १।१।१०।५) इति सामान्यशास्त्रेण वैदिकहोमसामान्योद्देशेन विहितस्याहवनीयस्य अश्वस्य पदे पदे जुहोति (तै० बा० ३।८।९।३) सप्तमे पदे जुहोति (तै० सं० ६।१।८) इति विशेषशास्त्रेण होमविशेषोद्देशेन विहितेन पदेन बाधः । सामान्यशास्त्रं हि पदातिरिक्तस्थले चरितार्थं सत् पदमात्रविषयकेन निरवकाशेन पदशास्त्रेण पदविषये बाध्यते इति ।

नित्यनैमित्तको बाधः तेनैव यथा एवं नित्यं नैमित्तिकेन बाध्यते । यथा

इत्थं बाधस्वरूपे निर्धारिते एकोद्दिष्टाभ्युदयिकमातामहश्राद्धादिषु चिन्त्यते। प्रकृतावपि [७]सर्वशक्त्यधिकरणन्यायेन ब्राह्मणाभावे[०]दर्भमय-सालग्राम-ब्राह्मण-

दर्शपूर्णमासयो नित्यतया विहितं सामिधेन्यनुवचनगतं "पंचदश सामिधेनीरन्वाह" (तै० सं० २।५।८।२) इति पांचदश्यं "सप्तदश वैश्यस्य" (तै० सं० २।५।१०।२) इति वाक्यविहितेन वैश्यकर्त्तृनिमित्तकेन साप्तदश्येन बाध्यते। इति।

ऋत्वर्थपुरुषार्थबाधो यथा—उभयमपि क्रत्वर्थं पुरुषार्थेन, यथा पूर्वोक्तं पांचदश्यं साप्तदश्यं च। एकविंशतिमनुब्रूयात् प्रतिष्ठाकामस्य इति काम्येन एकविंशतित्वेन बाध्यते इति। (मी० को० ५म भागः पृ०-२९६०)।

पौर्वापर्यबाधो यथा–पूर्वं परेण। यथा—"यद्यंगता परिच्छद्येत अदक्षिणो यज्ञः परिसमाप्यते, यत् पूर्वस्मिन् दास्यन् स्यात् तद्द्यात्। यदि प्रतिहर्त्ता सर्ववेदसं दद्यात्" इति द्वयोर्निमित्तयोः द्वे नैमित्तिके विहिते, तत्र निमित्तयोः पौर्वापर्येचरेण नैमित्तिकेन पूर्वनैमित्तिकं बाध्यते। तत्रैव–पृ०-२९६०।

अभ्युच्चयो यथा—अल्पं भूयसा बाध्यते, यथा पंचदशरात्रे नाम्नां मिथश्चिन्तायाम् (जै० सू० १२।२।७।२२) एकम् अग्निष्टुन्नाम आग्नेयीसुब्रह्मण्याप्रवर्त्तकम् अनैकेन्द्रीसुब्रह्मण्याप्रवर्त्तकेत ज्योतिरादिनाम्ना बाध्यते। इति। तत्रैव–पृ०-२९६१।

सावकाशनिरवकाशगतबाधो यथा—"यत् किंचित् प्राचीनम्" इति वीप्सार्थकयत्किंचिच्छब्दवशेन अग्नीषोमीयप्राग्भाविपदार्थविशेषोद्देश्येन विहितं दीक्षणीयातोऽन्यत्रापि सावकाशमुपांशुत्वं दीक्षणीयादिमात्रार्थेन 'यावत्या' इति स्वरेण अन्यत्र निरवकाशेन बाध्यते। इति। तत्रैव–पृ०-२९६१।

अंगप्रधानबाधो यथा अंगं प्रधानेन बाध्यते, यथा पवमानेष्टिषु अग्निहोत्रहवणी निर्वापेण बाध्यते। अंगधर्मः प्रधानधर्मेण बाध्यते, यथा—दीक्षणीयायाः पर्वकालत्वं सुत्यापर्वकालत्वेन। इति तत्रैव—२९६१।

विभागप्रविभागद्वारा बहुधा बाधो भिद्यते। विस्तरभिया न लिख्यते।

७। ब्रह्माधीनं जगत्सर्वं मन्त्राधीना तु देवता।
ते मन्त्रा ब्राह्मणाधीनास्तस्माद् ब्राह्मणो देवता॥

इत्यभियुक्तोक्त्या ब्राह्मणस्य देवतात्वसिद्ध्या देवतायाः सर्वशक्तिमत्त्वेन च ब्राह्मणस्य सर्वशक्तिमत्त्वं सिद्ध्यति। प्रतिपत्तिस्थानत्वेन तस्यैव संप्रदान-

० श्राद्धाधिकरणन्यायेन दर्भमय इति ख० पु० अधिकपाठः।

करणे निमन्त्रणं न कार्यं तस्य [८]अग्निन्ध्रेनामन्त्रितो नापक्रामेत् इत्यनपारकरणार्थत्वेनाचेतनेऽपक्रमणाभावात् । यथा[९] सत्यव्रतः ।

निधायाथ दर्भमयमासनेषु समाहितः ।
प्रैषानुप्रैषसंयुक्तं विधानं प्रतिपादयेत् ।।

स्मृति :— सालग्रामशिलायां च यः श्राद्धं कुरुते नरः ।
गयायास्त्रिगुणं पुण्यं लभतेऽसौ नरोत्तमः ।।

निमन्त्रणस्य तु प्रैषत्वाभावेऽपि[१०] यदुत्कलदेशेऽनुष्ठानं तत् किं निबन्धनमिति न

---

विशेषस्य कृते द्रव्यं दीयते। तदर्थमेव प्राग्दिवससंपाद्याह्वाननिमन्त्रणादिकार्याणि भवन्ति। ब्राह्मणाभावे तत्प्रतिनिधिरूपत्वेन दर्भमयस्य सालग्रामस्य वा स्वीकारे निमन्त्रणं न भवति। निमन्त्रणस्य चेतनोद्देश्येन विहितव्यत्वकीर्त्तनात् दर्भसालग्रामादीनामचेतनत्वात् तत्र चेतनत्वारोपेणापि चेतनोद्देश्यकविधयो न प्राप्यन्ते। अतिदिश्यमानेष्वपि विधिषु, वास्तवाचेतनद्रव्येषु सालग्रामशिलादिषु, असंभवतया अप्रयोजनीयतया च निमन्त्रणं न प्राप्यते। तत्र तस्य बाधो भवतीति सारः। सर्वशक्त्यधिकरणं तु जैमिनीये (६।३।१) अधिकरणे विचारितम्। तत्र यथाशक्तिप्रयोगेणैवाधिकारः।

८। आमन्त्रणनिमन्त्रणयो भेदः पाणिनिना दर्शितः "विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु लिङ् (३-३-१६१) इति सूत्रे। अत्राह सिद्धान्तकौमुदीकारः—निमन्त्रणं नियोगकरणम्। आवश्यके श्राद्धभाजनादौ दौहित्रादेः प्रवर्त्तनम्। आमन्त्रणं कामाचारानुज्ञा। महाभाष्यकारा यथासंनिहितेन निमन्त्रणं भवत्यसंनिहितेनामन्त्रणम्। नैषोऽस्ति विशेषः। असंनिहितेनापि निमन्त्रणं भवति संनिहितेन चामन्त्रणम्। एवं तर्हि यन्नियोगतः कर्त्तव्यं तन्निमन्त्रणम्। किं पुनस्तत्। हव्यं कव्यं वा। ब्राह्मणेन सिद्धं भुज्यतामित्युक्ते धर्मः प्रत्याख्यातुः। आमन्त्रणे कामचारः। इति। प्रकृतौ अचेतने मूर्त्तत्वासंभवात् अप्रक्रमणविषयो नायाति, तस्य तत्र बाधादिति पूर्वमुक्तम्।

९। अत्र सत्यव्रतवचनं विधित्वेन प्रस्तौति ब्राह्मणाभावविहितविषयं, स्मृतिस्तु अर्थवादमुखेन।

१०। प्रैषो नाम प्रमाणान्तरप्रमीतेऽर्थे पुरुषनिष्ठा पुरुषप्रवर्त्तना। इति भाट्टरहस्यम् पृ०-१६। प्रैषः प्राप्तेः प्रवर्त्तनम्, विधेः अप्राप्तस्य इति, विधिप्रैषयोर्विशेषः। तन्त्रवार्त्तिके (२।१।१।१) यथा—

**जानीमः। एवमशक्तौ संकल्पश्राद्धं तत्र स्मृतिवाक्यं बाधादि च विचारितमेव[११]। एवं मातामहश्राद्धेऽन्वष्टकादौ[१२] च मातामहार्घ्यपात्रस्य च न्युब्जीकरणबाधः पितृपात्रन्युब्जीकरणेन तन्त्रसिद्धेः[१३]।**

**"आवृत्तास्तत्र तिष्ठन्ति पितरः शौनकोऽब्रवीत्"**

**इति वचनात् "पितृभ्यः स्थानमसीति° लिंगाच्च पितृरक्षणफलकत्वात् सकृत्कृतेन पितृपात्रन्युब्जीकरणेन मातामहादीनामपि रक्षणं सिद्धमिति [१४]प्रयाजादिवत् तस्य तन्त्रतेति शूलपाणिः।**

---

प्रवर्तनस्मृतिः प्राप्ते प्रैष इत्यभिधीयते।
अप्राप्तप्रापणं सर्वं विधित्वं प्रतिपद्यते॥ इति

प्रकृतौ निमन्त्रणस्य प्रवर्त्तनात्मकवाक्याभावेऽपीत्यर्थः।

११। शूलपाणिमतं पूर्वपक्षत्वेनोपन्यस्यति ग्रन्थकारः। अत्रायमाशयो यत् यत्र श्राद्धे मातामहेभ्यः पितृभ्यश्च पिण्डा दीयन्ते। तत्र शौनकवचनं, पितृभ्यः स्थानमसीति वचनं च न्युब्जीकरणक्रियाया आश्रयत्वेन पितृपात्रमेव स्पष्टयतः। यतो हि "तेषु रक्षा यतः स्थिता" इति विष्णुधर्मोत्तरवचनेन पितृपात्रगतपिण्डरक्षकत्वेन विचारः पूर्वं कृत आसीत्। न्युब्जीकरणेन एकस्य पात्रस्योपरि अपरं पात्रं पिधानरूपेण दीयते। तन्मध्यगताः पितरः आवृत्ताः सन्तः निर्भयास्तिष्ठन्ति। उभयोः मातामहपित्रोः कृते एकमन्त्रेण सकृत् कर्मोक्तौ तन्त्रेणापि न्युब्जीकरणं भवति। न्युब्जीकरणं नाम अधोमुखीकरणम्। पृथग्रूपेण मातामहादेः न्युब्जीकरणं न भवति तन्त्रप्रसक्तेः। इति

१२। मातामहश्राद्धेः मातामहदेवताके श्राद्धे।

१३। तन्त्रं नाम एककर्त्तृकतया एककालिकतया च बहूनां कर्मणां सकृदनुष्ठानम्।

१४। पंच प्रयाजा भवन्ति। ते मन्त्रेणानुष्ठीयन्ते। दर्शपूर्णमासयोरंगयागत्वेन प्रयाजा अनुयाजाश्च क्रियन्ते। प्रयाजादयः तन्त्रेणानुष्ठीयन्ते। सोऽयं विषयो जैमिनीये क्रमकोपश्च यौगपद्ये स्यात्। तुल्यानां तु यौगपद्यमेकशब्दोपदेशात् स्याद् विशेषाग्रहणात् (११।१।५४-५५) इति सूत्रयो विचारितः। अत्रभाष्यकाराः सिद्धान्ते आहुः—सकृदेव प्रयुक्तान्यगानि सर्वैः प्रधानैर्युगपत् संबध्यन्ते। तुल्यानामेकशब्दोपदिष्टानां चैदमर्थ्यं प्रति विशेषाग्रहणात्। इति।

---

° मन्त्रलिङ्गाच्च इति ख० पु० अधिकपाठः।

तदसंगतम्[१५]।

[१६]पितृभ्यः स्थानमसीति न्युब्जं पात्रं करोत्यधः

इति (१।२३५) याज्ञवल्क्यवचने [१७]द्वितीया श्रुत्या अर्घ्यविनि(यु)क्तस्य प्रतिपत्त्या[१८] हि अस्य कृष्णविषाणवत्[१९] प्रतिपत्तिकर्मत्वावगतेः। पूर्वोक्तशौनकवचनेनार्थकर्मत्वावगते[२०]श्चाश्रयिकर्मैतत् स्विष्टकृत्। पशुपुरोडाशवत्[२१] वाक्यद्वय-

---

जैमिनीयन्यन्यमालायां माधवाचार्या यथा—

प्रत्यंगिकार्याण्यंगानि तन्त्रेणोतांगिनो यतः।
एकैकस्योपकार्यत्वं तस्मात् प्रत्यंग्यनुष्ठितिः॥
विधानवदनुष्ठानं सकृदेवोपकारकम्।
तद्देशकालकर्तॄणामेकत्वान्नतकादिवत्॥ इति।

अत्र विस्तरो यथा—पौर्णमास्यां त्रीण्याग्नेयादीन्यंगानि प्रयाजाज्यभागैरुपकार्याणि। तेष्वेकैकस्यांगिनः उपकारापेक्षित्वात् प्रतिप्रधानमंगानि पृथगनुष्ठेयानि इति प्राप्तेः ब्रूमः—यथा "समिधो यजति" इत्यादि सकृदेव प्रवृत्तम् न त्वाग्नेयाद्युद्देशेन पृथक् प्रवर्त्तते, तथानुष्ठानमपि सकृतेव प्रवर्तते। इति।

१५। तदसंगतमित्यादिना शूलपाणिमतं मातामहपितृपात्राणां तन्त्रेण न्युब्जीकरणं दूषयति।

१६। अत्र याज्ञवल्क्येन संपूर्णः श्लोको यथा—(या० स्मृ० १-२३५)

दत्वार्घ्यं संस्रवांस्तेषां पात्रे कृत्वा विधानतः।
पितृभ्यः स्थानमसीति न्युब्जं पात्रं करोत्यधः॥

१७। न्युब्जं पात्रं करोतीत्यत्र न्युब्जीकरणस्य कर्मत्वेनोक्तौ कर्मविभक्तेः नाम द्वितीयाविभक्तेः प्रसरः। अनया प्रतिपत्तिकर्मत्वेन अस्य प्रसरतां ग्रन्थकारः स्वीकरोति। न्युब्जीकरणात् परं यत्कुश-गन्धादिकं दीयते, तत्रापि द्वितीयाश्रुत्या प्रतिपत्तित्वम्। तत्सूच्यते अपरार्कव्याख्याने—"तस्य पात्रस्योपरि गन्धादिदानं कुशसाहचर्यात्। अन्ये तु मन्यन्ते गंधादिदानं पितृब्राह्मणेभ्य इत्युक्त्या कुशदानमेव पात्रस्योपरीति, कुशश्बदं च द्वितीयान्तं पठन्ति। इति।

१८। प्रतिपत्तिर्नाम आकीर्णकरस्य द्रव्यस्य विहितदेशे प्रक्षेप इति।

१९। कृष्णविषाणं नाम कृष्णसारमृगस्य शृङ्गम्।

कृष्णसारस्तु चरति मृगो यत्र स्वभावस्वः।
स ज्ञेयो यज्ञियो देशो म्लेच्छदेशस्त्वतः परः॥ ०३-२३

इति मनुवचनात् कृष्णसारविहारक्षेत्रं यज्ञिया भूरिति। यागे कादाचित्केन गात्रकण्डूयननिवारणनिमित्तं कृष्णमृगस्य विषाणं व्यवह्रियते। सोऽयं विषयो ज्यातिष्टोमान्तर्गतः। तत्रेयं श्रुतिर्यत्—"प्रत्तासु दक्षिणासु चात्वाले कृष्णविषाणां प्रास्यति। यागे अन्तिमे यदा ऋत्विजः दक्षिणां प्राप्नुवन्ति, तदा यजमानः कृष्णमृगशृङ्गं चात्वालनामके गर्त्ते निक्षिपेत्। यागे विनियुक्तः यः परार्थः स उपयुक्तः। उपयुक्तस्य संस्कारस्य प्रतिपत्तित्वात् अत्र उपयुक्तस्य नाम यागे व्यवहृतस्य अस्य संस्कारः नाम विहिते देशे चात्वाले प्रक्षेपः। इति प्रतिपत्तिः।

सोऽयं विषयो जमिनीये "उत्पत्तौ येन संयुक्तं तदर्थं तत्, श्रुतिहेतुत्वात्, तस्यार्थान्तरगमने शेषत्वात् प्रतिपत्तिः स्यात्" (४-२-१९) इति सूत्रे विचारितः।

अत्र सिद्धान्तभाष्यं यथा—कण्डूयने तृतीयासिर्देशात् विषाणाया गुणभावः। प्रासने च द्वितीयानिर्देशादन्यत्र च कृतार्थत्वात् प्राधान्यमिति। अतः प्रतिपत्तिः।

जैमिनीयन्यायमालायां माधवाचार्या अपि—

चात्वाले कृष्णशृङ्गस्य प्रासो यः सोऽर्थकर्म वा।
प्रतिपत्तिः सार्थकत्वादाद्योऽन्त्यो स्तूपयोगतः॥

अत्र सिद्धान्तविस्तरो यथा—अत्र कृष्णविषाणया कण्डूयते इति तृतीयाश्रुत्या यजमानशिरः कण्डूतावुपयुक्तस्य विषाणस्य प्रतिपत्त्यत्वापेक्षत्त्वात्। न च प्रतिपत्तावत्यन्तमपूर्वाभावः। 'चात्वाल एव प्रासनम्' इत्येवं विधस्य नियमस्य वैधत्वेन प्रासनक्रिया प्रयुक्ता अपूर्वाभावेऽपि नियमापूर्वसद्भावात्। तस्मात् प्रासनं प्रतिपत्तिकर्म। इति। प्रकृते न्युब्जीकरणाख्यं कर्म अधिकरणगतप्रासनाख्यकर्म इव न्युब्जीकरणभूरुत्तरादिक् चात्वाल इव। उपयुक्तस्य नाम श्राद्धे व्यवहृतस्य इति समन्वयः।

२०। आवृत्तास्तत्र तिष्ठन्तीति शौनकवचनं गुणकर्मणो द्योतकं न तु गुणकर्मणः इति ग्रन्थकृत् समाधत्ते। "सामान्यतः कर्म द्विविधम्। अथकर्म गुणकर्म चेति। तत्रात्मगतापूर्वजनकं कर्म अर्थकर्म। यथा—अग्निहोत्रदर्शपूर्णमासप्रयाजादिकम्" इति। मी० परि० पृ० ४५। गुणकर्म संस्कारजनकम्। प्रतिपत्तिरेकः संस्कारः। संस्कारमूलत्वेन गुणकर्म। अर्थकर्म गुणकर्मणोरयं भेदो यत्—अर्थकर्मणि द्रव्यापेक्षया कर्मणः प्राधान्यं, कर्मणि द्रव्यस्य गुणत्वम्। यथा अग्निहोत्रादौ द्रव्यादेर्गुणत्वम्। गुणकर्मणि द्रव्यस्य प्राधान्यं, द्रव्ये च कर्मणो गुणत्वम्। व्रीहीन् प्रोक्षति अवहन्तीत्यादौ द्वितीयया व्रीहीणां क्रियासाध्यत्व-

दर्शनात् [22]परिधानीयकर्मवद् वा अर्थकर्मत्वादेव मन्त्रोऽपि पृथगेव वक्तव्यः। प्रतिसंस्कारावृत्तेः[23] मन्त्रस्य चार्थस्मरणार्थत्वात् सत्रे कृष्णविषाणानामिव पात्रस्य प्रतिपत्तेः संस्कारकर्मत्वेऽपि मन्त्रा पृथगेव। मातामहादिपूजार्थं तदर्घ्यपात्रस्य रक्षणात् पित्र्यर्घ्यपात्रस्य च पित्र्यब्राह्मणवत् मातामहार्घ्याधिष्ठानत्वायोगात् नानाबीजेष्टिप्रोक्षणवत्[24] "प्रयाजशेषेण हवींष्यभिघारयती"त्यत्र प्रतिपाद्य-

---

प्रतीतेः क्रियापेक्षया द्रव्यस्य प्राधान्यं प्रोक्षणादिक्रियायास्तदपेक्षया गुणत्वमिति। तत्रैव पृ० ५४

२१। पशुः पुरोडाशः यस्मिन् असौ इति। तत् प्रकाशकं यत् वाक्यम्।

२२। परिधानीयं कर्म अग्निहोत्रस्य प्रतिपत्तिसंस्कारात्मकं कर्म। तदग्रे द्रष्टव्यम् पा० टी० ६६

२३। प्रतिपत्तिसंस्कारात्मके कर्मणि अपि तन्त्रं न भवति, पृथगेव भवतीति ज्ञापयितुमेतदुच्यते प्रतिसंस्कारावृत्तेरित्यादिना। यस्मिन् कर्मणि मन्त्रः प्रयुज्यते, मन्त्रगतोऽर्थः मन्त्रस्मरणार्थत्वेन भवति। आवृत्त्या कर्म क्रियते। मन्त्राश्च आवर्त्तन्ते इत्यर्थः।

२४। नानाप्रकारकाणां बीजानां द्रव्यतया क्रियते या इष्टिः सा। बीजानां प्रकारबाहुल्यात् प्रोक्षणमपि असकृत् भवति। सेयं नानाबीजेष्टिः राजसूये भवति। जैमिनीये "द्रव्यान्तरे कृतार्थत्वात्तस्य पुनः प्रयोगात् मन्त्रस्य च तद्गुणत्वात् पुनः प्रयोगः स्यात्तदर्थेन विधानात्। (११-४-४४) इति सूत्रे सोऽयं विषयो विचारितः।

अत्राहु र्भाष्यकाराः—राजसूये नानाबीजेष्टिः, अग्नये गृहपतये पशूनामष्टाकपालं निर्वपेत, सोमाय वतस्पतये श्यामाकं चरुमित्येवमादि। तस्यामवहन्तिः कमन्त्रकदश्चोदकेन प्राप्यते। अत्र पूर्वेण न्यायेन सकृन्मन्त्रस्य प्रयोगः प्राप्तः। सर्वबीजानां वितुषीकरणं चिकीर्षितं, तदभिसन्धीयत इति। तथा प्राप्ते उच्यते द्रव्यान्तरे पुनः प्रयोगः स्यान्मन्त्रस्य। कुतः कृतार्थत्वात् पूर्वस्मिन् बीजे योऽवहन्ति स कृतार्थः। संनिपत्योपकारी हि सः। स च येन बीजेन संनिपतितस्तदेव संस्कारोति। तदेव चेत् संस्करोति, उत्तरसंस्कारार्थं पुनः प्रयोक्तव्यः। तस्य पुनः प्रयोगात् मन्त्रस्यापि पुनः प्रयोगः। तद्गुणत्वात्। तस्यावहन्तेः स मन्त्रो गुणः। तदर्थेन विधानात्। तस्याप्यसौ प्रतिकर्मावसायिना चोदकेन विहितः। तस्मात् प्रतिबीजं मन्त्रस्यावृत्तिः। इति।

तन्त्ररत्ने पार्थसारथिमिश्रा यथा—बीजभेदेऽपि तर्हि सर्वादौ सकृन्मन्त्रः

स्यापि प्रयाजशेषस्याघारनियमेन हविः संस्कारकस्य वाजपेये[२५] क्रतुपशुवपासु प्रत्येकं संस्कारवत् मन्त्रः कर्मावृत्तेः पृथगेव वक्तव्यः। न चैकद्रव्ये[२६] कर्मावृत्तौ सकृत् मन्त्रवचनम् इति कात्यायनीयपरिभाषा इह संभवति। तस्यावघातस्थल[२७] इव द्रव्यैक्याभावात्। न च न्युब्जपात्रे पित्रादिपूजायां किं प्रमाणमिति वाच्यम्। ब्रह्मपुराणवचनमेव यथा—

ततस्तेष्वर्घ्यपात्रेषु सापिधानेषु वै पितॄन्।
पूजयेत् पितृपूर्वं तु पाद्यार्घ्यं कुसुमादिभिः॥

इति। मैथिलानामनुष्ठानाचारो[२८] मूलादर्शनकृतः।

---

प्रयुज्यते। नेति ब्रूमः। तत्र ह्यवघातभावनैव प्रतिबीजं समाप्येत। अतः प्रधानावृत्तेर्मन्त्रावृत्तिरिति। इति।

जैमिनीयन्यायमालायां माधवाचार्या अपि—

नानाबीजेषु तन्मन्त्रः सकृद्वा सकृदप्रियः।
विशेषाग्रहणात् मैवमवघातस्य भेदतः॥ इति॥

अत्र विस्तरो यथा—नानाबीजेष्टौ बीजानामवघातस्यागंभूतो मन्त्रः "अयमेतदर्थ" इति विशेषस्यागृह्यमाणत्वात् सकृदादौ प्रयोज्यः। इति चेत् मैवम्। अवघातानां भिन्नत्वेन मन्त्रत्वाय प्रत्यवघातं मन्त्रस्यावर्त्तनीयत्वात्। इति।

तद्वत् मातामहपितृब्राह्मणयोर्नानात्वे पृथक् कर्म भवतीति सारः।

२५। वाजपेयेन स्वाराज्यकामो यजेतेति वाक्येन स्वाराज्यं कामयमानः पुरुषो वाजपेयाख्येन यागेनेष्टं भावयेदित्यर्थ आयाति। अत्र प्रजापतिदेवतोद्देश्येन सप्तदश पशवः आलभ्यन्ते—"सप्तदश प्रजापत्यान् पशूनालभेत"। इति तद्गतानि अंगानि मांसवपादीनि यागीयहवींषि भवन्ति। मांसवपादीनां हविषां बाहुल्यात्, तेषां संस्कारा अपि पृथक्तया भवन्ति। तदवत् मातामहपितृदेवतानां भिन्नत्वेन कर्मापि पृथग् भवतीति सारः।

२६। कात्यायनवचनं तन्त्रपरतया प्रसरति एकद्रव्यककर्मबहुत्वस्य एकबारमन्त्रपाठेन समवेतत्वात्। तदत्र न संभवति द्रव्यभेदात्। द्रव्यं हि पितृपात्रं, मातामहपात्रं चेति।

२७। नानाबीजेष्टौ अवघातस्य बाहुल्यं प्रदर्श्य द्रव्यभिन्नतया आवृत्तिः साधीयसीति प्राक् विमृष्टम्। द्रष्टव्या—पा० टी०—२४।

२८। मैथिलानामनुष्ठानाचारः न शास्त्ररीतिसह इत्यर्थः। अनेन मैथिलमतं खण्डितम्॥

न चैवं वैश्वदेवब्राह्मणानां रक्षोघ्नत्वादमावास्याश्राद्धे मातामहाद्यर्थं कथं पृथङ् निमन्त्रणम् । वचनबलात्[२९] । अतएव योगीश्वरेणोक्तं[३०]—१।२२८

मातामहानामप्येवं तन्त्रं वा वैश्वदैविकम् । इति ।

इदं च न्युब्जीकरणं

"पितृपात्रे निधायाथ न्युब्जमुत्तरतो न्यसेत् ।"

---

२९। वचनापेक्षया न्यायस्य दुर्बलत्वात् वचनमुपन्यस्यते ।

३०। संपूर्ण वचनं यथा—या० स्मृ० १।२२८

द्वौ दैवे प्राक् त्रयः पित्र्ये उदगेकैकमेव वा ।
मातामहानामप्येवं तन्त्रं वा वैश्वदेविकम् ।।

इति अत्राह अपरर्कः—मातामहानामपि श्राद्धमेवं पितृश्राद्धवत् कार्यम् । तत्र वैश्वदेविकब्राह्मणभोजने प्रतिश्राद्धभेदेन न्यायतः प्राप्ते विकल्पार्थमिदं वचनं तन्त्रं वा वैश्वदेविकमिति । सामर्थ्याधीना चात्र व्यवस्था । अत एव वृद्धवसिष्ठः— श्राद्धद्वयं करिष्यंन्तु दशैव चतुरोऽपि वा ।

त्रीन् वा निमन्त्रयेद् विप्रानेकं वा ब्रह्मवादिनम् ।।

त्रय—"द्वौ दैवे पितृकृत्ये त्रीन्" इति पक्षं वैश्वदेविकभेदपक्षं चाऽऽश्रित्य दशेत्युक्तम् । एकैकमेव चेति पक्षे चतुर इति । अत्रैव वैश्वदेवतन्त्रे त्रीनिति । अत्यन्तापदि त्वेकमित्युक्तम् । इति ।

विज्ञानेश्वराचार्या अपि—द्वौ दैव इति । दैवे वैश्वदेवे द्वौ ब्राह्मणौ प्राङमुखावुपवेश्यौ । पित्र्ये अयुग्मानित्यविशेषप्रसंगे विशेष उच्यते । त्रयं पित्र्ये इति । पित्र्ये पित्रादिस्थाने त्रय उदङमुखा उपवेश्याः । पक्षान्तरमाह—एकैकमेव वा । वैश्वदेवे पित्र्ये च एकमेकमुपवेशयेत् । संभवतो विकल्पः । मातामहानामप्येवं श्राद्धे निमन्त्रणादि । द्वौ दैवे प्राक् त्रयः पित्रोः उदगेकैकमेव वेत्येव मतं पितृश्राद्धवत् कर्त्तव्यम् । पितृश्राद्धे मातामहश्राद्धे च वैश्वदेविकं पृथक् मन्त्रेण वा कर्त्तव्यम् । मन्त्रशब्दः समुदायवाचकः । यदा तु द्वावेव ब्राह्मणौ लब्धौ तदा तु वैश्वदेवे पात्रं प्रकल्प्य उभयत्रैकैकं ब्राह्मणं नियुञ्ज्यात् । यथाह वसिष्ठः

यद्येकं भोजयेच्छ्राद्धे दैवं तत्र कथं भवेत् ।
अन्नं पात्रे समुद्धृत्य सर्वस्य प्रकृतस्य च ।।
देवतायतने कृत्वा ततः श्राद्धं प्रवर्त्तयेत् ।
प्रास्येदन्तं तदग्नौ तु दद्याद्वा ब्रह्मचारिणे ।। इति ।(११।३०-३१)

**इति वचनात् श्राद्धकर्त्तुः दक्षिणामुखत्वेन प्राचीत्वस्य[३१] दक्षिणस्यां दिशि कल्पितत्वात् ब्राह्मणस्य हस्तेऽर्घ्यदानविधानेन ब्राह्मणस्यापि संनिहितत्वाद् ब्राह्मणदक्षिणहस्तपार्श्वे कर्त्तुरुत्तरस्यां दिशि कर्त्तव्यम्। आख्यातात्[३२] कर्त्तुरुपस्थितेः कर्त्तुर्वामपार्श्व इति शूलपाणिः। तन्न। जंजभ्यमानवचनवत् क्रतुयुक्तपुरुषाप्रतीतेराख्यातस्य च कर्त्तुरवाचकत्वात्। अत एवोपविष्टब्राह्मणस्य उत्तरस्यां दिशीति कल्पतरुः[३३]। न च ब्राह्मणस्योदङ्मुखत्वेन[३४] ब्राह्मणवाम-पार्श्वस्यैवोत्तरत्वमिति शंक्यम्⁰। पितृकर्मणि⁰⁰ दक्षिणोत्तरव्यवस्थया दक्षिणस्याः प्राचीत्वावधिकत्वात्[३५], साकमेधे[३६] महापितृयज्ञे दक्षिणत**

---

३१। श्राद्धकर्त्ता दक्षिणां दिश मुखं कृत्वा उपविशेत्। पितृब्राह्मणाः उत्तरां दिशं मुखं कृत्वा उपविशेयुः। वैश्वदेवब्राह्मणः पूर्वां दिशं कृत्वा उपविशेत्। आगमशास्त्ररीत्या कर्त्तुः सम्मुखदिगेव प्राची। तत्रेदं श्रूयते तन्त्रे—

"पूज्यपूजकयो र्मध्ये दिशं प्राचीं प्रचक्षते"

इति। अतः "न्युब्जमुत्तरतो न्यसेत्" इत्यत्र कस्य उत्तरत इति जिज्ञासायां ब्राह्मणस्य दक्षिणहस्तपार्श्वे कर्त्तुः उत्तरस्यां दिशि नाम ब्राह्मणस्य पूर्वस्यां दिशि इति भावः। पूज्यपूजकभावसम्बन्धेन पूर्वदिक्कल्पनया उत्तरदिशि न्युब्जी-करणं शास्त्रीया परंपरा। किन्तु शूलपाणिप्रभृतिभिः कर्त्तुः वामपार्श्वे इति लिखितम्। कर्त्तृनियमेन दिक्कल्पनाया भ्रान्तत्वेन पूज्यपूजकभावकल्पनाया दिङ्नियम इति ग्रन्थकर्त्तुराशयः।

३२। मीमांसकत्वं प्रदर्श्यते अनेन विचारेण। मीमांसाशास्त्रे कर्त्ता आक्षेपलभ्यः इति सिद्धान्तितम्। व्याकरणस्मृत्यां कर्त्ता आख्यातवाच्यः। मीमांसारीत्या विचारस्य सत्त्वेन आख्यातवाचत्वाभावात् कर्त्तुः, तन्नियमेन दिक्कल्पना न भवतीति सिद्धान्तितम्। अनेन शूलपाणिमतं खण्डितम्।

३३। कृत्यकल्पतरुकृतसिद्धान्तोपन्यासेन स्वपक्षं द्रढ़यति।

३४। पितृब्राह्मणा उत्तरां दिशं मुखं कृत्वा उपविशन्ति। तदुपवेशन-दृष्ट्या तद्वामपार्श्वमुत्तरादिक्चेत् कल्प्येत तर्हिब्राह्मणस्य पश्चिमा दिक् भवेत् तन्न भ्रमेण गृहीतव्यमिति ग्रन्थकर्त्तुरभिप्रायः।

३५। द्रष्टव्या पादटिप्पणी—३१।

३६। चातुर्मास्येष्टेः चतुर्षु पर्वसु एकं पर्व साकमेधः। तस्मिन्नित्यर्थः।

---

⁰ वाच्यम् इति ख० पु० पाठः।

⁰⁰ पित्र्यकर्मणि तत्रैव।

आहवविहारे तथैव दक्षिणाग्न्युद्धरणे दर्शनात्। अतएव शम्भुकरवाजपेयिचरणैरपि ब्राह्मणस्य दक्षिणपार्श्वे लिखितम्। इदं च पितामह प्रपितामहपात्रेण समुच्चितेन पिधानं कर्त्तव्यम्।

प्रथमं पैतृकं पात्रं तस्मिन् पैतामहं न्यसेत्।
प्रपितामहं ततो न्यस्य नोद्धरेत् न विचालयेत्।

इति यमवचनात्⁰ एतेन पितामहप्रपितामहपात्रयोः पिधाने विकल्प इति शूलपाणिमतं परास्तम्। आनतिभेदे[३७] क्रमसमुच्चयवत् पिधाने समुच्चयस्य वचनबलसिद्धत्वेन एकार्थत्वाभावात्। एवं च पिधानस्य परप्रयुक्तोपजीवित्वेन एकोद्दिष्टे पिधानाभावेऽपि न्युब्जीकरणं भवत्येव। पितृरक्षणार्थत्वेन तत्र गन्धपुष्पादिदानेन च अतिदेशबाधानौचित्यात्। एवमेकोऽर्घ्य एकं पवित्रम् (श्राद्धसूत्रम्—४) इति पारस्करवचनादर्घ्यैकेन[३८] एव पवित्रैक्यप्राप्तेः पुनर्वचनं नीरूढलक्षणया[३९] श्राद्धे पवित्रपदप्रयोगे⁰⁰ एकदलपवित्रप्राप्त्यर्थमिति शूलपाणिः।

---

३७। आनतिः आनमनम्। नमस्कारः प्रणिपात इत्यर्थः। तस्य भेदे प्रातिस्विकक्रमस्य समुच्चयो नाम समष्टिरित्यर्थः।

३८। संपूर्णं सूत्रं यथा—अथैकोद्दिष्टमेकोऽर्घ्य एकं पवित्रमेकः पिण्डो नावाहनं नाग्नौकरणं नात्र विश्वेदेवाः स्वदितमिति तृप्तिप्रश्नः। सुस्वदितमितीतरे ब्रूयुरुपतिष्ठतामित्यक्षय्यस्थानेऽभिरम्यतामिति विसर्गोऽभिरताः स्म इतीतरे। —पारस्करश्राद्धसूत्रम्, कण्डिका-४

३९। शब्दस्य वृत्तिस्त्रिधा। अभिधा, लक्षणा, व्यंजना चेति। अभिधया वृत्त्या शब्दस्य वाच्यार्थः प्रकाश्यते। लक्षणयाऽऽरोपितार्थः अर्पितोऽर्थो वा। तल्लक्षणं यथा—सा० द०, २य परिच्छेदः

मुख्यार्थबाधे तद्युक्तो ययाऽन्योऽर्थः प्रतीयते।
रूढ़ेः प्रयोजनाद् वासौ लक्षणा शक्तिरर्पिता॥

सा द्विविधा। प्रयोजनमूला रूढ़िमूला चेति। तत्राद्यस्योदाहरणं यथा—गंगायां घोषः। रूढ़िमूला तु कलिंगाः साहसिका इति। अत्र रूढ़िमूला शूलपाणिवचने।

---

⁰ वचनैः इति ख० पु० पाठः।

⁰⁰ प्रयोगेण इति ख० पु० पाठः।

विज्ञानगिरिचरणा[४०] अप्येवमाहुः। अत्रेदमालोचनीयम्। पवित्रस्याग्निहोत्र[४१] उपरिष्ठात् समिदाहरणवत्[४२] आच्छादनार्थतवात् अयुग्मब्राह्मणवृद्धिपक्षे प्रथमब्राह्मणहस्ते प्रतिपादितत्वादितरब्राह्मणहस्ते प्रतिपादनाय अर्घ्याच्छादनाय च पवित्रान्तरापेक्षायामेकं पवित्रमिति वचनस्य प्रयोजनवत्त्वात्। अतः

अनन्तर्गर्भिणं साग्रं कौशं द्विदलमेव च।
प्रादेशमात्रं विज्ञेयं पवित्रं यत्र कुत्रचित्॥

इति परिशिष्टप्रकाशलिखितं[४३] वचनं न बाधितव्यम्। न वा दललक्षणा[४४] सति संभवे कल्प्या। यत्तु 'पवित्राख्यौ वैष्णव्यौ' इति वचनप्रयोगः, सोऽवयवद्वित्वनिमित्तकः पाशबहुवचनवत्। कर्त्तृत्वाश्रयैकदेशद्वित्वनिमित्तकक्षौमावसाना

---

४०। विज्ञानेश्वराचार्याः

यवैरन्ववकीर्याथ मार्जने सपवित्रके।
शं नो देव्या पयः यवोऽसीति यवास्तथा॥
या देव्या इति मन्त्रेण हस्तेष्वर्घ्यं विनिक्षिपेत्॥

इति या० स्मृ० (१।२३०-२३१) व्याख्याने मिताक्षरायामेतत्समर्थयन्त आहुः। तद्यथा—ततो वैश्वदेवार्थब्राह्मणसमीपे भूमिं प्रादक्षिण्येन यवैरन्ववकीर्य अनन्तरं तैजसादिभाजने सपवित्रके कुशयुग्मांतर्हिते "शं नो देविरभिष्टये" (ऋ १०।९।४) इत्यनयर्चापः क्षिप्त्वा यवोऽसि धान्यराजोऽसि इत्यादिना मन्त्रेण यवान् ततो गन्धपुष्पाणि च क्षिप्त्वाऽनन्तरम् अर्घ्यपात्रपवित्रान्तर्हिते ब्राह्मणहस्ते 'या दिव्या आपः पयसा' इत्यादिना मन्त्रेण 'विश्वेदेवा इदं वोऽर्घ्यम् इत्यर्घ्योदकं विनिक्षिपेत्।' इति।

४१। पवित्रम् अर्घोपकरणमिति हेमचन्द्रः श्राद्धतत्त्वेऽपि रघुनन्दनो यथा—पार्वणश्राद्धादाववघार्थं होमादावाज्यसंस्काराद्यर्थंच साग्रनिर्गमकुशान्तरवेष्ठितप्रादेशमात्रकुशपत्रद्वयम्। यथा—

अनन्तर्गर्भिणं साग्रं कौशं द्विदलमेव च।
प्रादेशमात्रं विज्ञेयं पवित्रं यत्र कुत्रचित्॥ इति।

४२। अग्न्याधानानन्तरं समिदाधानं क्रियते। अतः उभयोः कर्मणोः पौर्वापर्यभावः।

४३। परिशिष्टप्रकाशः हेमाद्रिसूरिकृतपरिशिष्टखण्डात्, मित्रमिश्रकृतवीरमित्रोदयान्तर्गत परिभाषाप्रकाशात् भिन्नो ग्रन्थः।

४४। पवित्रशब्दस्य दलार्थे लक्षणा न कल्पनीया।

विति वद्वा । अतो नैकदलस्य पवित्रवत्त्वम् । अन्यथा एकदलस्याप्यानर्थक्या-पत्तेः । शंभुकरवाजपेयिचरणैरपि एकोद्दिष्टे दलद्वयं पवित्रमित्येवोक्तम् । न चैकोद्दिष्ट एवमयुग्मब्राह्मणवृद्धि मैथिलनिबन्धालिखनान्नास्तीति वाच्यम् ।

"दैवे युग्मान् यथाशक्ति पित्र्ये युग्मान् तथैव च" इति (१।२२७) योगीश्वरेण[४५] पार्वणे प्रतिपादिताया अयुग्मवृद्धेरेकोद्दिष्टेऽप्यतिदेशात् ।

एकोद्दिष्टं[४६] तु यच्छ्राद्धं तन्नैमित्तिकमुच्यते ।
वैश्वदेवविहीनं तत् अयुग्मानाशयेद् द्विजान् ।।

इति कालादर्शमदनपारिजातलिखितवचने ब्राह्मणवृद्धिदर्शनाच्च इति । पात्राभि-मन्त्रणपूर्वको जपश्च सांवत्सरिकैकोद्दिष्टादौ कर्त्तव्यः ।

अत्र शूलपाणिः[४७] । हुतशेषं दत्वा पात्रमालभ्य जपतीति (पार० श्रा० सू०—३) क्त्वाश्रुतिदर्शनात्, अमृतेऽमृतं जुहोमीति (पार० श्रा० सू०—३) मन्त्रलिंगाच्च हुतशेषादानपात्रालंभयोरंगांगिभावधारणादुपनीया[४८]ऽध्यापये-दितिवत् अंगांगित्वमिति एकोद्दिष्टे पात्रालम्भनं न कर्त्तव्यम् । अग्नौकरणप्रति-षेधेन हुतशेषाभावात् । अमृतं हुतशेष इत्यर्थः ।

एवं प्रथमे पात्रे संस्रवान् समवनीय न्युब्जं पात्रं करोतीति पारस्करवचने संस्रवनिनयनाभावात्,

"प्रथमं पैतृकं पात्रं तस्मिन् पैत्रामहं न्यसेत्"

---

४५ । सम्पूर्णश्लोको यथा—या० स्मृ० १।२२७

"युग्मान् दैवे यथाशक्ति पित्र्ये युग्मांस्तथैव च ।
परिस्तृते शुचौ देशे दक्षिणाप्रवणे तथा ।।

दैवे युग्मान् इति विपरिणामेन युग्मान् दैवे इति मुद्रित या० स्मृ० पाठः ।

४६ । एकोद्दिष्टश्राद्धस्य एकोद्देश्येन क्रियमाणत्वात् निमित्तमाश्रित्य नैमित्तिकत्वात् एकस्य इत्युक्तौ विश्वेदेवास्तत्र न भवन्ति । ब्राह्मणा अपि अयुग्मसंख्यका गृह्यन्ते इति सारः ।

४७ । शूलपाणिवचनं पूर्वपक्षत्वेन उपन्यस्यति ग्रन्थकारः ।।

४८ । अष्टवर्षब्राह्मणमुपयत तमध्यापयीत इत्यत्र अध्यापननिमित्तमुप-नयनमंगम् । तद्वदत्र । किंच अमृतस्य हुतशेषत्वं मनुनाऽभाणि गृहस्थाचार-विमर्शे—"विघसाशी भवेन्नित्यमथवाऽमृतभोजन" इत्यनेन । विघसः पितृ-भोजनावशेषः, अमृतं पञ्चमहायज्ञावशेषः । यज्ञस्य होमनाम्ना व्यपदेशे कृते तत्र हुतावशेषोऽमृतमिति समन्वयार्थः ।

**इमि यमवचनेन पिधानाभावाच्च संस्रवग्रहणन्युब्जीकरणे न कर्त्तव्ये इत्याह[४९]। तदसंगतन्[५०]। क्त्वाश्रुतेः पूर्वकालतामात्रेण शक्तत्वात्। न च वैमृधवत्[५१]**

---

४९। शूलपाणिमतेन अग्नौकरणशिष्टमन्नं पितृब्राह्मणपात्रे दत्वा तत्र पात्रालंभनं विधाय जपः कर्त्तव्यः। अतः उभयोः मध्ये अंगांगि-सम्बंधः। अतः एकोद्दिष्टे अग्नौकरणाभावात् पात्रालंभनाभावः। किं च संस्रवनिनयानन्तरं न्युब्जीकरणाभावः अनयोरपि अङ्गागिभावः। इति।

५०। तदसङ्गतमित्यादिना शूलपाणिमतं खण्डयति ग्रन्थकारः। अत्रायमाशयो यत् "हुतशेषं दत्वा" पात्रमालभ्य जपतीत्यत्र दत्वापदेन क्त्वा प्रत्ययः। अयमानन्तर्यबोधकः। न तु अङ्गाङ्गिभावद्योतकः। अतः यत्र पूर्वं कर्म नास्ति तत्र परं कर्म भवति। संस्रवनिनयनाभावेऽपि न्युब्जीकरणं भवत्येव।

५१। पदान्तरसमभिव्याहरो वाक्यम्। पात्रालंभन्युब्जीकरणादीनां बाधार्थमपि स्वतन्त्रं पदान्तरसमभिव्याहारात्मकं वाक्यं नास्ति यथा वैमृधे वर्तते। वैमृधः पूर्णमासेष्टेः अङ्गम् इति जैमिनीयेषु "उभयार्थमितिचेत्। न शब्दैकत्वात्। प्रकरणादिति चेत्। नोत्पत्तिसंयोगात्" (४।३।३२-३५) इति सूत्रेषु विचारितम्।

तत्रेदं सिद्धान्तभाष्यं—"दर्शपूर्णमासयोरामनन्ति, संस्थाप्य पौर्णमासीं वैमृधमनुनिर्वपति इति। तत्र सन्देहः किमुभयांगं वैमृधः, कालार्थः पौर्णमासीसंयोग उतांगप्रयोजनसम्बन्धः इति। किं प्राप्तम्। एवं चेदुभयार्थो वैमृधः। कुतः। प्रकरण उभयोराम्मान सामर्थयात्। कालविधिसारूप्याच्च संस्थाप्येति। अनन्तरम्। एकः शब्दः, अनुनिर्वपतीति। एकस्मिन्नेव वाक्येन न द्वौ सम्बन्धौ शक्नोति सवधातुम्। वैमृधस्य दर्शपूर्णमासाभ्यां पूर्णमासीकालेन च। एकार्थत्वाद्ध्येकं वाक्यं समाधिगतम्। प्रकरणादिति यदुक्तं तत् परिहर्त्तव्यम्। नैतदेवम्, एतदेव वैमृधस्योत्पत्तिपाक्यम्। तद्दर्शपूर्णमासाभ्यं वा प्रकरणादेकवाक्यभावमियात्। प्रत्यक्षं वा पौर्णमास्या। तत्र प्रत्यक्षसंयोगः प्रकरणाद् बलवान्। प्रत्यक्षस्य पौर्णमास्या संयोगः, परोक्षः कालेन। तस्मात् पौर्णमास्यङ्गं वैमृध इति।

तन्त्रवार्त्तिके भट्टचरणा यथा—"संस्थाप्य पूर्णमासीं वैमृधमनुनिर्वपति" इत्यनेन वैमृध एव पौर्णमास्यंगत्वेन विधीयते। इति।

जैमिनीयन्यायमालायां माधवाचार्या अपि—

संस्थाप्य पौर्णमासीं तामनु वैमृध ईरितः।
द्वयोरंगमुतैकस्य द्वयोः स्यात् प्रक्रियावशात्॥

समभिव्याहारात्तदंगत्वम् । कृतार्थयोः[५२] सम्बन्धस्य कालार्थत्वात् ।

"हुतशेषं[५३] प्रदद्यात्तु भाजनेषु समाहितः"

इति योगीश्वर (१।२३६) वचने परप्रयुक्तद्रव्यत्वेन[५४] द्वितीयाश्रुत्या च प्रतिपत्तित्वावगतेः । दत्त्वान्नं पृथिवीपात्रमिति (या० स्मृ० १।२३८) पात्राभिमन्त्रणं कृत्वा "कृत्वेदं विष्णुरित्यन्ने द्विजांगुष्ठं निवेशयेत् इति" (१।२३८) योगीश्वरवचनात् अभिमन्त्रणाङ्गुष्ठावगाहनयो विनियोक्ष्यमाणान्न[५५]संस्कारत्वावगते-

---

उत्पत्तिवाक्यतः पूर्णमासं संयोगभासनात् ।

तस्यैवाङ्गं न दर्शस्य प्रक्रिया वाक्यबाधिता ।।

तत्र विस्तरो यथा—दर्शपूर्णमासप्रकरणे श्रूयते—'संस्थाप्य पौर्णमासीं वैमृधमनुनिर्वपति' इति । तत्र इयं वैमृधेष्टिः प्रकरणबलात् प्रयाजादिवत् दर्शपूर्णमासश्चोरुभयोरप्यंगम् इति चेत् न वाक्यस्य प्रबलत्वात् । न च संस्थाप्य इति पौर्णमास्याः समाप्त्यभिधानात्तदंगत्वमयुक्तम् इति वाच्यम् । दर्शसाधारणांगसमाप्त्यभिप्रायेण तदुपपत्तेः । तस्मात् उत्पत्तिवाक्यात् एककर्तृकत्ववाचिक्त्वाप्रत्ययाच्च गौणं पौर्णमासस्यांगम् । इति ।

तन्त्ररत्ने पार्थसारथिमिश्राः यथा—'संस्थाप्य पौर्णमासीं वैमृधमनुनिर्वपतीत्यनेन वैमृध एव पौर्णमास्यंगत्वेन विधीयते । अनेनैव हि वैमृधो विधीयते अतः पौर्णमास्यंगमिति । कुतः । न ह्यन्यद्वाक्यान्तरमस्ति दर्शपूर्णमासांगत्वावगमकं येन निर्ज्ञातांगभावस्यानेन वाक्येन कालसंयोगः क्रियते । असत्यपि वाक्यान्न प्रकरणादवगम्यते उभयांगत्वमिति चेत् न, वाक्येन पौर्णमासीसंयुक्तस्य न प्रकरणमीष्टे । वाक्यसंयोगस्य कालार्थत्वान्न प्रकरणविरोध इति चेत् न इतरेतराश्रयत्वात् । कालार्थे संयोगे प्रकरणविनियोगः । सति च तस्मिन् कालार्थतेति । यत्तु संस्थावचनान्नांगतेति तत्प्राकरणिकेऽप्यंगत्वे समानम् । तस्मात् वैमृधवर्जितांगयुक्तपौर्णमास्यभिप्रायमेतत् । इति ।

५२ । सोऽयं विषयः प्राक् परामृष्टः ।

५३ । संपूर्णश्लोको यथा—या० स्मृ० १।२३६

हुतशेषं प्रदद्यात्तु भोजनेषु समाहिता ।

यथालाभोपपन्नेषु रौप्येषु तु विशेषतः ।।

५४ । हुतशेषं नाम अग्नौकरणे कर्मणि हुते अन्ने तच्छेषं नाम अवशेषम् । परप्रयुक्तद्रव्यं नाम आदौ प्रयुक्तम् अग्नौहुतं, तस्मात् परं नाम अनन्तरम् ।

५५ । हुतशेषदान—पात्राभिमन्त्रणयोः अङ्गत्वेऽपि प्रक्रियया भेदमापा-

दर्शपूर्णमासाभ्यामिष्ट्वा[५६]ऽन्येन यजेतेतिवत् कालार्थसम्बन्ध एव । "प्रथमे पात्रे संस्रवान् समवनीय" इति द्वितीयाश्रुत्या प्रतिपत्तिकर्मत्वात्[५७] ।

"ततस्तदर्घ्यपात्रेषु सापिधानेषु वै पितॄन्"

इति ब्रह्मपुराणवचनान्न्युब्जीकरणार्थस्य कर्मत्वात् प्रतिपत्तिकर्मत्वेऽपि पात्रप्रतिपत्तित्वात् द्वयोः कृतार्थत्वात्[५८] अत्रापीयमेवरीतिः । किंच[५९] समभिव्याहररूपवाक्यापेक्षया द्वितीयाश्रुतेः बलवत्वप्रतीतेः संस्कारकत्वलक्षणसामर्थ्यस्य लिंगस्य च बलवत्त्वान्नालंभार्थत्वं हुतशेषस्य । एवं संस्रवप्रक्षेपेऽपि यत्तु "न पात्रमालभ्य जपति", "नाशिषः प्रतिगृह्णातो"ति प्रचेतोवचनं तत्प्रेतैकोद्दिष्ट अंगुष्ठावगाहनमात्रं भवति । इतरैकोद्दिष्टे[६०] त्रयमपि भवतीति

---

दयति ग्रन्थकारः । हुतशेषदानं नाम प्रतिपत्तिसंस्कारात्मकं कर्म । तच्च उपयुक्तस्य संस्कारविशेषः । उपयुक्तस्य नाम यागे वा श्राद्धे व्यवहृतस्य । पात्राभिमन्त्रणं द्विजांगुष्ठनिवेशनं विनियोक्ष्यमाणसंस्कारात्मकं कर्म, अर्थात् कर्मणि प्रयोगात् पूर्वं क्रियते यः संस्कारः । विनियोक्ष्यते कर्मणि इति विनियोक्ष्यमाणः तस्य संस्कारः । यतोहि पात्राभिमन्त्रणात् परं तत्रान्नं दीयते अतः अन्नाधारत्वेन विहितस्य पात्रस्य अङ्गत्वेन संस्कारोऽयम् । तद्वत् द्विजांगुष्ठस्यापि ।

५६ । दर्शपूर्णमासानुष्ठानात्परं अन्ययागः कर्त्तव्य इत्यर्थः । 'इष्ट्वा' इत्यत्र क्त्वा श्रुत्या आनन्तर्यप्रतीतिमात्रता इति ।

५७ । न्युब्जीकरणस्य हुतशेषदानस्य च प्रतिपत्तिकर्मत्वं सूचयितुं पारस्करब्रह्मपुराणवचने उपन्यस्येते ।

५८ । आकीर्णकरस्य द्रव्यस्य विहितदेशे प्रक्षेपरूपप्रतिपत्तित्वेन अनन्तरविहितस्य तथात्वेन कृतार्थत्वात् नाम अङ्गांगिनोः संपन्नत्वात् इत्यर्थः ।

५९ । स्वपक्षं द्रढयितुं ग्रन्थकारः किंच इत्यादिना प्रमाणान्तरं दर्शयति । पदान्तरसमभिव्याहरो वाक्यम् । निरपेक्षरवः श्रुतिः । वाक्यापेक्षया श्रुतिर्बलीयसी । विनियोगविधेः षट्प्रमाणानि श्रुतिलिंगवाक्यप्रकरणस्थानसमाख्यानि । एतेषु प्रमाणेषु परं परं दुर्बलं, पूर्वं पूर्वं प्रबलम् । तदुक्तं जैमिनिना—"श्रुतिलिंगवाक्यप्रकरणस्थानसमाख्यानां पारदौर्बल्यमर्थविप्रकर्षात्" (३।३।१४) इति । एतद्वत् अत्र हुतशेषमित्यादिद्वितीयाविभक्तिगतनिरपेक्षरवात्मिकायाः श्रुतेः प्राबल्यात् हुतशेषस्य न पात्रालंभनार्थता । इति ।

६० । इतरैकोद्दिष्टे प्रेतैकोद्दिष्टभिन्ने सांवत्सरिकाद्येकोद्दिष्टे त्रयं द्विजागुंष्ठावगाहन—पात्रालंभन—जपात्मकम् ।

ध्येयम्। एवं "प्रदक्षिणमनुव्रज्य[६१] भुंजीत पितृसेवितम्" (१।२४९) इति योगीश्वरवचने[६२] पुरोडाशकपालेन तुषानुपवपती (आप० श्रौ० सू० १।२०।९)तिवत् परप्रयुक्तद्रव्योपजीवित्वेनाप्रयोजकत्वात्। द्वितीयानिर्देशेन प्रतिपत्तित्वाच्च काकादिस्पर्शे शेषभक्षणलोपः। वैगुण्यसमाधानाय[६३] विष्णुस्मरणं

---

६१। संपूर्णश्लोको यथा—प्रदक्षिणमनुव्रज्य भुंजीत पितृसेवितम्।
ब्राह्मचारी भवेत्तां तु रजनीं ब्राह्मणैः सह ॥

ब्राह्मणैः नाम श्राद्धब्राह्मणैः।

६२। प्रतिपत्तेः प्रयोजकत्वं साधयति पुरोडाशपात्रस्थतुषन्यायेन। अप्रयोजक-लक्षणं भाष्यकृद्भिरुक्तम्—साधारणं भवेतन्त्रं परार्थे त्वप्रयोजकः।
एवमेव प्रसंगः स्याद् विद्यमाने स्वके विधौ ॥ इति।

यदनेकदेशेनानुष्ठीयते तत्तन्त्रम् इति आलोकान्तरे विचारितम्। यदन्यार्थ-मनुष्ठितं स्वसाधनत्वेन गृह्णाति सोऽप्रयोजकः। यथा पुरोडाशकपालेन तुषानु-पवपति (आ० श्रौ० सू० १-२०-९) इति। पुरोडाशार्थं संपादितं कपालं स्व-साधनत्वेन तुषोपवापो गृह्णाति। एतत् स्पष्टं तन्त्रसिद्धान्तरत्नावल्यां चिन्न-स्वामि शास्त्रिचरणैः (पृ० ११३-११४)—विहिततुषोपवापो न कपालप्रयोजकः, 'कपालेषु श्रपयति' इति विधिना कपालानां पुरोडाशश्रपणार्थत्वेन विधानात् पुरोडाशश्रपणस्यैव तत्प्रयोजकत्वात्। पुरोडाशकपालेनेति तत्प्रयुक्तस्येव कपालस्य तुषोपवापार्थत्वेन वितियोगात्। अतो न तुषोपवापः कपालस्य प्रयोजकः। इति।

अत एतद्वत् हुतशेषभक्षणस्य प्रतिपत्तित्वेन अप्रयोजकत्वात् काकादिस्पर्शशेष-भक्षणं न भवतीति हृदयम्।

६३। वैगुण्यं पापम्, तस्य समाधानं नाम पापनाशः, तदर्थं विष्णुस्मरणं नाम प्रायश्चित्तम्। तत्स्वरूपं विष्णुपुराणे (२-६-२७)

प्रायश्चित्तान्यशेषाणि तपः कर्मात्मकानि वै।
याति तेषामशेषाणां कृष्णानुस्मरणं परम् ॥

सोऽयं विषयो वैदिकभागात् आगतः। यागे विनियोगविधौ प्राप्तानां कर्मणामनुष्ठाने यदि वा कस्यचन कर्मणोऽनुष्ठाने विलम्ब उपजायेन, अथवा कण्डुयनादिचोदनाविरहितकर्मजातानि आपतन्ति। तत्र यागे वैगुण्यमुद्भवति। तद्वैगुण्यसमाधानाय 'इदं विष्णु विचक्रम' इति मन्त्रभागं पठित्वा प्रायश्चित्तं क्रियते। अनेन विष्णुपदसत्वात् विष्णुस्मरणं भवति। प्रायश्चित्तस्यांगभूत-कर्मत्वेन नखकेशादिनिकृन्तनादीनां प्राप्तौ विष्णुस्मरणरूपे प्रायश्चित्ते कर्माणि

कर्त्तव्यम् । तेन° चामावास्याष्टकादौ श्राद्धशेषस्य° मांसाष्टकायां[६४] च मांसस्य अवश्यं देयत्वात् शेषमांसमाहिताग्निना निरग्निकेन चावश्यं भक्षणीयम् । निषेधस्य पुरुषार्थप्राप्तविषयत्वात् विधेश्च क्रत्वर्थत्वात् दीक्षितहोमाकरणवत्[६५] प्रतिषेधस्य विहितेतरविषयत्वात् क्रत्वर्थहिंसावन्न दोषः ।

---

तथाभावादपि खले बाली यूपविधिन्यायेन प्रायश्चित्तं सिद्ध्यति । खदिरपालाशादिवृक्षजकाष्ठैः यागे विधिश्रुत्या यूपो भवति । प्रत्येकं यूपोऽष्टकोणविशिष्टः । कोणशब्दस्यार्थः 'अस्र' पदेन गृह्यते । अतः उच्यते यूपस्य अष्टास्रीकरणमवश्यं भवति सेयं प्रक्रिया खले, शस्याचयननिमित्तं क्रियमाणे बलीवर्दसाधनकर्षकर्मविशेषेऽतिदिश्यते । तत्र बलीवर्दानामितस्ततो भ्रमतां वारणनिमित्तं कश्चन दण्डविशेषः खले निखन्यते । तेन तेषां बन्धनं संपाद्यते । सोऽयं दण्डविशेषो यूपधर्मान् गृह्णाति । किन्तु यूपगताष्टास्रीकरणं कर्म तत्र न भवत्यपि यूपसंज्ञां स बिभर्त्ति यथा, तथा नखकेशादिनिकृन्तनाभावेऽपि विष्णुस्मरणस्य प्रायश्चित्तस्वरूपत्वं सिद्ध्यति । खले बालीयूपविधिरित्यत्र बालीशब्दस्य पाठान्तरत्वेन वारी वाडी इत्यपि स्तः । वारणाय बलीवर्दानां स्वीकृतो दण्डः बाली, वारी, वाडी वा । रलडेषु अभेदात् अर्थाभेदः । वडी उत्कलभाषायामस्मिन्नेव अर्थे प्रयुक्तः । खले वाली यूपन्यायः आश्वलायनेन प्रकाशितः खले बाली यूपो भवति (६-३) शाण्डिल्लभक्ति सूत्रेऽपि तत्स्थानत्वादन्यधर्मं खले बालीवत् २-२२ । मीमांसायामपि "कर्म च द्रव्यसंयोगार्थमर्थाभावान्निवर्त्तेत तादर्थ्यं श्रुतिसंयोगात्" (१०-१-६) इति जैमिनीयसूत्रेऽयं विषयो विचारितः ।

६४ । मांसाष्टका मध्यमाष्टका ।

६५ । यागे दीक्षितो नित्याग्निहोत्रादिदानानि न कुर्यात् । दानादीनां पुरुषार्थत्वेन कत्वर्थताभावात् दीक्षितेन पुरुषेण क्रत्वंगत्वात् क्रत्वानुकूल्येन सर्वं कर्त्तव्यम् । किन्तु क्रतुगतं दानादिकं कुर्यादेव । इतराणि दानादीनि कर्माणि न कुर्यात् यथा तथा प्रकृतौ श्राद्धीयमांसभक्षणं विना इतराणि मांसभक्षणानि निषिद्धानि । श्राद्धीयमांसभक्षणस्य क्रत्वर्थत्वात् । तदकरणे क्रतोर्हानिः वैगुण्यं च । फलहानिश्च इति निष्कर्षः ।

सोऽयं दीक्षितविषयो जैमिनीयेषु "दीक्षितस्य दानहोमपाकप्रतिषेधो विशेषात् सर्वदानहोमपाकप्रतिषेधः स्यात् । अक्रतुयुक्तानां धर्मः स्यात् क्रतोः प्रत्यक्षशिष्ट-

---

° तेन चेत्यायंशः श्राद्धदीपकारेणोद्धृतः, पृ० १३२

° श्राद्धशेषमाहिताग्निना च निषेधस्य इति श्राद्धदीपपाठः, पृ० १३२

शूलपाणिस्तु[६६] प्रतिपत्तेः[०] प्रतिपाद्ये प्रयोजकत्वाभावेन तथा श्राद्धे देयं यथा शेषो न तिष्ठति। ततोऽमावास्यादौ न मांसं भक्षणीयमित्याह। तत्तुच्छम्।

---

त्वात्। तस्य वाऽप्यानुमानिकमविशेषात्। अपि तु वाक्यशेषत्वादितरपर्युदासः स्यात् प्रतिषेधे विकल्पः स्यात्। (१०।८।१२-१५) इति सूत्रेषु विचारितः।

अत्राहुः भाष्यकारः—ज्योतिष्टोमे श्रूयते, दीक्षितो न ददाति न जुहोति, न पचतीति। अत्रैषोऽर्थः सांशयिकः। किं सर्वदानहोमपाकानां प्रतिषेधः, उताक्रतुयुक्तानाम्, अथवा क्रतुयुक्तानामपि चोदकप्राप्तानां प्रतिषेधः, अथवा पर्युदास इति। किं प्राप्तम्। सर्वदानहोमपाकानां प्रतिषेधः। कुतः। अविशेषात्। नास्ति विशेषवचनः शब्द। तस्मात् सर्वेषां प्रतिषेध इति। वा शब्दः पक्षं व्यावर्त्तयति। न सर्वेषां प्रतिषेधः। केषां तर्हि अक्रतुयुक्तानां धर्मः स्यात्। कुतः। क्रतोः प्रत्यक्षशिष्टत्वात्। प्रत्यक्षं हि क्रतोर्दानांशासनमस्ति। तस्मात् प्रत्यक्षं वर्जयित्वा प्रतिषेधः स्यात् इति।

अत्राहुः सिद्धान्ते पार्थसारथिमिश्राः तन्त्ररत्ने—"सत्यं प्रतिषेधः। स तु प्रकरणात् क्रत्वर्थः अपशब्दमांसभक्षणादिप्रतिषेधवत्। इति।

जैमिनीयन्यायमालायां माधवाचार्या अपि—

दीक्षितो न ददातीति प्राप्तं सर्वं निषिध्यते।
अतिदिष्टपुमर्थे वा पुमर्थे वोक्तितोऽग्रिमः॥
उपदेशार्थवत्ताय मध्यकोऽन्त्यस्तु संनिधेः।
एकवाक्यत्वलोभश्चेत् पुमर्थं पर्युदस्यताम्॥ इति।

अत्र सिद्धान्तविस्तरो यथा—नित्याग्निहोत्रदानादिकं पुरुषार्थत्वेन यत्प्रत्यक्षश्रुतावुपदिष्टं ज्योतिष्टोमकालेऽपि प्राप्तम्, यच्चातिदिष्टं दानादिकं तयोरुभयोर्मध्ये प्रत्यक्षोपदिष्टनिषेधस्योपदिष्टमेव संनिहितमिति पुमर्थस्यैवात्र निषेध। इति।

प्रकृतौ तु विहितेतरविषयो नाम अविहितकर्मविषयः। तदुक्तं या-स्मृ—"विहितस्याननुष्ठानात् निन्दितस्य च सेवनात्। अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छति" इति।

६६। शुलपाणिवचनं पूर्वपक्षत्वेन उपन्यस्य सारमाकलयति यत् श्राद्धे निःशेषं मांसं देयं, शेषाभावेन मांसभक्षणाभावः सिद्ध्यति इति।

---

० श्राद्धदीपकारेण उद्धृतम्—पृ० १३२

**प्रतिपत्तेः[६७] प्रतिपाद्यं प्रति प्रयोजकत्वाभावेऽपि धारणप्रयोजकत्वमेव। अतः श्राद्धशेषमांसस्य प्रतिप्रत्त्यर्थमवश्यं भक्षणम्। अत एव प्रयोजकशेषस्यानुष्ठानवैलक्षण्याभावे न प्रतिपत्तित्वप्रतिपादकाधिकरणमनर्थकमित्याशंक्य यद्यपि प्रतिपत्तिः प्रतिपाद्यं न प्रयोजयति धारणं प्रयोजयत्येव। अत एव सत्रे संभावित-**

---

६७। अग्निहोत्रं कर्म नित्यम्। तत्तु यावच्जीवमग्निहोत्रं जुहूयात् इति वाक्येन प्राप्तम्। अन्त्येष्टिकर्म अस्य प्रतिपत्तिः। तस्य परिभाषिकी संज्ञा परिधानीयं कर्म इति मयूखमालिकायां सोमनाथ भट्टाः (११-३-१३) आहुः। प्रतिपाद्यं कर्म प्रतिपादनयोग्यतावत्वेन सिद्ध्यति। तत्प्रयोजकरूपेण प्रतिपत्तिरवस्थातुं नार्हति इति। "प्रतिपत्तीनां प्रतिपाद्योत्पत्तिप्रयोजकत्वाभावः सिद्ध्यति" (बालमीमांसाप्रकाशः पृ० १०९) इति ग्रन्थे शंकरभट्टेन साधितम्। अन्त्येष्ट्यां मृतस्य अग्निहोत्रिणः शरीरस्य पुरोडाशत्वे तेन धारयितव्यमेव अग्निहोत्रोपकरणम्। तत्प्रयोजकत्वेनैव प्रतिपत्तेरवसरः। तद्वत् प्रयोजकत्वाभावेऽपि श्राद्धशेषमांसं भक्षितव्यमिति शूलपाणिग्रन्थः परास्तः। सोऽयं विषयो यज्ञपात्राणां यावज्जीवं धारणाधिकरणम्" इति जैमिनीयाधिकरणे "यज्ञायुधानि धार्येरन् प्रतिपत्तिविधानादृजीषवत्" (११-३-३४) इति सूत्रे विचारितः।

अत्राहुर्भाष्यकाराः—यज्ञपात्राणि त्वन्ताद्धारयितव्यानि। कुतः। प्रतिपत्तिविधानात्। प्रतिपत्तिस्तेषां परिधानीये कर्मणि विधीयते, अहिताग्निमग्निभिर्दहन्ति यज्ञपात्रैश्चेति तदर्थः। ऋजीषवत्। तद्यथा, अहर्गणे सर्वेषामह्लामृजीषोऽवभृथे प्रतिपादनार्थं धार्यते। ऋजीषमप्सु प्रहरतीति श्रुयते। इति।

तन्त्ररत्ने विषयोऽयं बहुधा तर्कवितर्कपुरःसरं विचारितः पार्थसारथिमिश्रैः।" तत्र प्रकृतौ पात्राणां प्रथमप्राप्तिरिति तत आरभ्य धारणमन्वाधारणस्योत्तरं पवमानेष्टिषु तु पात्राणां चोदक प्राप्तेः तासां च प्राक् पौर्णमासात् प्रयोगात् ततः प्रभृति धारणम्। अन्यथा प्रागेव प्रकृतितो मरणसंभवादाहिताग्निः सन्नेतै र्दह्यते। तस्मात्ततः प्रभृति धारणमिति। प्रासंगिकं समाप्य मूलाधिकरणशेषमुच्यते नैतदस्ति गुणभूतानि पात्राणीति। प्रतिपत्तिस्तेषां नानाकर्मसूपयुक्तानामपेक्षितप्रतिपत्तित्वात्। "दक्षिणे पाणौ जुहूमासादयति" इत्यादि दितीयासंयोगाच्च दहने तु कामं तृतीया संयोगात् पदार्थानामपि तेषां सत्यं पुरोडाशकपालवद् भवन्तु गुणभावः सादने तु प्रतिपत्तिरेव। अतश्चावश्यं धारणम्।

जैमिनीयन्यायमालायां माधवाचार्या अपि—

मा भूदन्यत्वनियमः पात्रे तन्त्रं किमैच्छिकम्।
नियतं वाऽग्रिमो देशवन्मैव प्रतिपत्तितः॥ इति।

परिधानीय[६८]कर्मणि पात्रप्रतिपत्तिलोपसंभावनया साधारणपात्रोत्पादनं[६९] सत्रिणाम् । तस्य च[७०] सन्निहितसवनीयपशुवपाद्यभिघारणेनैव प्रतिपत्तिसिद्धे

अत्र सिद्धान्तविस्तरो यथा—आमरणं पात्राणां धारणीयत्वात् । आहिताग्नि-मग्निभिर्दहन्ति यज्ञपात्रैश्च इति प्रतिपत्तिविधानेनामरणं धारणमेवावगम्यते । इति ।

६८ । द्रष्टव्यं पादटिप्पणी—६९

६९ । यैरग्न्याधानं न कृतं तेषां परिधानीये कर्मणि नाम अन्त्येष्टिक्रियायां प्रतिपत्तिसंस्कारार्थं पात्राभावात्, प्रतिपत्तिलोपो मा भूरिति कृत्वा तात्कालिकं पात्रं किंचित् साधारणतो गृह्यते । अद्याप्युत्कलेषु परंपरेयमस्ति ।

७० । सन्निहितसवनीयादिप्रसङ्गः जैमिनीयेषु "अभिघारणे विप्रकर्षाद-नुयाजवत् पात्रभेदः स्यात् । न वा पात्रत्वादपात्रत्वं त्वेकदेशत्वात् । हेतुत्वाच्च सहप्रयोगस्य । अभावदर्शनाच्च । सति सव्यवचनम् । न तस्येति चेत् । स्यात्तस्य मुख्यात् (४।१।३३-३९ इति) सूत्रेषु विचारितः ।

अत्र प्रकृतौ श्रूयते—प्रयाजशेषेण हवींषि अभिघारयति । विकृतौ अति-देशोऽस्य भवति । तत्र वाजपेयगताः पशवो भवन्ति । ते द्विविधाः । क्रतुपशवः प्राजापत्यपशवश्चेति । आग्नेयं पशुमालभते इति क्रतुपशुगतवाक्यम् । सप्त दशप्राजापत्यान् पशूनालभत इति प्राजापत्यगतवाक्यम् । एते उभयविधाः पशवः सहैव प्राप्ताः सवने आलभ्यन्ते । ततः सर्वेषामर्थे सकृदेव प्रयाजा अनुष्ठीयन्ते । तत्र क्रतुपशूनां प्राप्तः सवन एवाऽऽलब्धव्यत्वात्तदीयहविषां प्रयाजशेषेणाभिघारणं निर्विघ्नमेव सिद्ध्यति । प्राजापत्यपशूनां पर्यग्निकरण-पर्यन्तमेव तदानीमनुष्ठानम् । आलंभस्तु माध्यंदिने सवने, तत्कालविशेषस्य 'ब्रह्मसाम्न्यालभते' इति विधानात् । तेषां च प्राजापत्यादीनां हविषामभि-घारणार्थं प्रातःकालेनः प्रयाजशेषो धारयितव्यः । न चात्र जुह्वा तद्धारणं संभवति । क्रतुष्वनुष्ठाने जुह्वाया व्यापृतत्वात् । अतः पात्रान्तरं सत्राय तस्मिन्नयं शेषो धारयितव्यः । अन्यथा प्राजापत्यहविषां प्रयाजशेषेणाभि-घारणात् सिद्धिः । तस्मात् शेषधारणतत्पात्रे संपादनीये इति प्राप्ते ब्रूमः । ते उभे न कर्तव्ये । कुतः अभिघारणस्य शेषप्रतिपत्तिरूपत्वेन हविः संस्कार-कत्वाभावात् । इति जैमिनीयन्यायमालाविस्तरे स्पष्टम् ।

अत्र सिद्धान्ते भाष्यकारा यथा—यत्प्रयाजशेषेणाभिधारणं तस्य वा भादेत-दुपपद्यते, सत्यपि श्रप्यमाणाया अभिघारण उद्वासितायाश्च । यत्तावच्छ्राप्य-माणायास्तदग्नेरर्चींषि दहन्ति, यदुद्वासितायास्तदग्न्यवयवा ऊष्मावयवाश्च

र्न प्राजापत्यवपाभिघारणार्थं रक्षणं तदर्थं जुह्वा[७१] व्यापृतत्वेन प्रयाजशेषधारणार्थं पात्रोत्पादनमित्यवश्यं प्रतिपत्तिवत् प्रतिपादकमधिकरणं सफलमित्युक्तम् पार्थसारथिमिश्रैः[७२] ।

एवं पक्षश्राद्धादौ "निरामिषं सकृत् भुक्त्वा" इति विहितनिरामिषभोजनस्य कर्तृसंस्कारार्थस्य उपयोक्ष्यमाणसंस्कारस्य[७३] श्राद्धशेषभक्षणस्य उपयुक्त संस्कारस्य[७४] विरोधे "उपयुक्तस्य[७५] संस्कारादुपयोक्तव्य[७६]संस्क्रिया ।
गरीयसी प्रशास्तुश्च तेन दृष्टं प्रयोजनम्[७७] ॥"

---

नाशयन्ति । सैषा ऋक्षैवा इदं तु प्रयाजशेषेण शीतायाः क्रियते । तत् स्नेहयति । तदिदं स्नेहयाभिघारणस्याभावात् सव्यतावचनमुपपद्यत इत्युक्तम् । तस्मान्न प्रयाजशेषोऽघार्यते । इति ।

७१। जुह्वा जुह्वोति इति वाक्यम् । पञ्चसु प्रयाजेषु तृतीयः प्रयाजः इडो यजति । अत्रायं विषयो यत् दर्शपूर्णमासयोः श्रूयते अतिहायेडो बर्हिः प्रतिसमानयति जुह्वामौपभृतम् । इति । अत्रायमर्थः—पंचानां प्रयोजानां मध्ये तृतीयः प्रयाज इट् शब्देन बहुवचनांतेनाभिधीयते । तं तृतीयं प्रयाजमतिक्रम्य बर्हिर्नामकं चतुर्थं प्रयाजं होतुमुपभृत्संज्ञकायां स्रुचि स्थितं घृतं जुह्वामानेतव्यम् इति ।

जौह्वं केवलप्रयाजार्थम् । औपभृतं तु प्रयाजानुयाजार्थमिति प्रयाजेषु जौहवनोपभृतं विकल्पते । इति पूर्वपक्षः । अत्रायं सिद्धान्तो यत्—यज्जौह्वं तत्प्रयाजत्रितयार्थम्, यत्वौपभृतं तदवशिष्टप्रयाजद्वयार्थमनुयाजार्थं च । इत्येवं वाक्यद्वयस्य व्यवस्थायां संभवन्त्यामष्टदोषग्रस्तो विकल्पो नानेतुं शक्यः । इति सोऽयं विषयः—जैमिनीयेषु समानयनं तु मुख्यं स्यात् लिङ्गदर्शनात् । वचने हि हेत्वसामर्थ्यं (४।१।४०-४१) इति सूत्रेषु विचारितः ।

७२। द्रष्टव्यं तन्त्ररत्नम्—भा०-१

७३। उपयोक्ष्यमाणः संस्कारः नाम यागे व्यवहरिष्यतः पदार्थस्य संस्कारः, अथवा उपयोजयितव्यता अस्ति यस्य पदार्थस्य तस्य संस्कारः ।

७४। उपयुक्तसंस्कारो नाम—प्रतिपत्तिसंस्कारः ।

७५। द्रष्टव्या पादटिप्पणी—७८

७६। उपयोक्तव्यसंस्क्रिया नाम—उपयोक्ष्यमाणसंस्कारः ।

७७। प्रतिपत्तिसंस्कारापेक्षया उपयोक्ष्यमाणसंस्कारस्य गुरुत्वात् पक्षश्राद्धे

**इति मैत्रावरुणदण्डाधिकरणन्यायेन[७८] निरामिषभोजनमेव कर्त्तव्यम्। यदा तु निमन्त्रणांगमेव निरामिषभोजनं मैथिलनिबन्धलिखनादिति तदांगगुण[७९]-विरोधे च तादर्थ्यादिति (जै० सू० १२।२।२५) न्यायेनांगित्वादामिषभोजनं कर्त्तव्य-मिति केचिदाहुः। तन्न। निमन्त्रणसमभिव्याहरलक्षणवाक्यात् श्राद्धकर्त्तुः**

---

निरामिषभोजनस्य अर्थकर्मत्वेन उपयोक्ष्यमाणसंस्कारत्वात् श्राद्धशेष-मांसभक्षणस्य प्रतिपत्तित्वेन ततो लघुतया निरामिषभोजनं कर्त्तव्यमिति ग्रन्थकृदभिप्रायः।

७८। तमिमं विषयं मीमांसाधिकरणेन संयोज्य पुष्णाति ग्रन्थकारः। तत्र प्रसरति मैत्रावरुणदण्डाधिकरणन्यायः इति। सोऽयं विषयः जैमिनीये "अप्राकृतत्वात् मैत्रावरुणस्य भक्षत्वम् स्याद् वा होत्रध्वर्युविकारत्वात्तयोः कर्माभिसंबन्धात् (१०।७।१८-१९) इति सूत्रद्वये विचारितः।

तत्राहुः भाष्यकाराः—अस्ति ज्योतिष्टोमे पशुरग्नीषोमीयः, यो दीक्षितो यदग्नीषोमीयं पशुमालभत इति। अस्ति तत्र मैत्रावरुण ऋत्विक्। तं प्रति सन्देहः। किं तस्य चोदकप्राप्तः शेषभक्षोऽस्ति, नेति। किं प्राप्तम्। अप्राकृतोऽसौ, न तस्य भक्षे क्रियमाणे प्रकृतिवत् कृतं भवति। तस्मादप्राकृत-त्वान्मैत्रावरुणस्याभक्षत्वम्। स्याद्वा मैत्रावरुणस्य भक्षः। प्रैषेषु ह्यसावध्वर्यु-विकारः। अनुवचनेषु होतुः। तस्मान् मैत्रावरुणः प्रष्यति चानु चा ह इति। अतस्तस्य तयोः कर्माभिसम्बन्धादर्थापत्त्या भक्षं लभते। तस्मात् स भक्षः स्यादिति।

तन्त्ररत्ने पार्थसारथिमिश्रा अपि—भवत्येवास्य भक्षः। प्राकृतकार्यकरणात्। प्रकृतौ हि द्रव्यार्थतया श्रुतस्य भक्षस्याध्वर्य्वादयः प्रकृताः कर्त्तृत्वेन सम्बन्ध्यन्ते कर्मकराः। तत्रैवं शास्त्रार्थः प्रकृतैः कर्त्तृभिः भक्षणेन द्रव्यं प्रतिपादनीयमिति, तत्र प्राकृतकर्त्तृनियम-प्रयोजनापेक्षायां कर्त्तृप्रतीतिरेव प्रयोजनं भवतीति। तेन नियमांशे पुरुषसंस्कारर्थताप्यस्त्येव। तस्य चालोपार्थं सर्वे प्रकृता भक्षयन्ति। इतरथा हि प्रकृतापि न सर्वे भक्षयेयुः। तेन मैत्रावरुणोऽपि तत्कर्मकृतत्वात् तत्संस्कारसिद्ध्यर्थं भक्षयेदिति। इति।

अनेन न्यायेन पक्षश्राद्धे एकस्मिन्नेव दिवसे भाविदिवसश्राद्धार्थं निरामिष-सकृद्भोजने तथा तद्दिवसीयश्राद्धशेषमांसभक्षणे च युगपत् प्राप्ते निरामिषभोजन-मेव कर्त्तव्यमिति निष्कर्षः।

७९। अंगागिनो विरोधे अंगिनो धर्माः बलवत्तरा भवन्ति। तच्च अंगगुणविरोधे च तादर्थ्यात् (१२।२५) इति जैमिनीयसूत्रे विचारितम्।

**कर्मजननसामर्थ्य[0]लिंगस्य बलवत्त्वात् श्राद्धांगतया[८०]एवोचितत्वात्। एतेन पक्षश्राद्धस्याभ्यसितत्य एकत्वात् पूर्वदिन[८१]एव निरामिषभोजनमित्यपास्तम्। यावज्जीवाधिकरण[८२]न्यायेन "दिने दिने[८३]" इत्यस्य निमित्तपरत्वादन्यथाऽ-**

---

अत्राहुर्भाष्यकाराः—ज्योतिष्टोमे दीक्षणीया आग्नावेष्णावमेकादशकपालं निर्वपेद् दीक्षिष्यामाण इति। तत्रैव सौत्यमहः। तयोः पर्वकालः य इष्ट्या पशुना सोमेन वा यजेत सोऽमावास्यां पौर्णमास्यां वा यजेतेति वचनात्। यदा एका दीक्षा, तिस्रः उपसद इत्येवमादयः कल्पास्तदा विरोधः। तत्र चिन्ता। किं दीक्षा पर्वणि कर्त्तव्या, अपर्वणि सुत्या, उत विपर्यय इति। मुख्यत्वादीक्षा कार्येति प्राप्ते, उच्यते। अंगगुणा न प्रधानगुणस्य। विरोध एतस्मिन् अंगगुणो बाध्येत। कुतः। तादर्थ्यात्। अंग गुणवत् क्रियते प्रधानं सगुणं स्यादिति। तच्चेदंगे गुणवति क्रियमाणे विगुणमापद्यते, कोऽर्थोऽगेन गुणवता कृतेन। तस्मात् पर्वणि सुत्या कर्त्तव्या। अपर्वणिदीक्षा। इति।

तन्त्ररत्ने पार्थसारथिमिश्रा यथा—प्रधानविधिर्हि साक्षात्तावत् प्रधाने प्रयुंक्ते। पश्चादंगेष्ववतरति। ततोऽपि पश्चादगांगेषु तत्र प्रथमं प्रधानस्यांगे प्रयुंक्ते पश्चादंगेष्ववतरति इति।

जैमिनीयन्यायमालायां माधवाचार्या यथा—

य इष्ट्या पशुनेत्यादौ दीक्षाकालोऽथ सोमकः।
आद्यः प्राथम्यतो मैवं प्रधानस्य बलित्वतः॥
दीक्षा पर्वणि वा सुत्या दीक्षा स्यात् प्रथमत्वतः,
सुत्या प्राधान्यतोऽन्या तु शेषत्वादपकृष्यते॥

अत्र सिद्धान्तविस्तरो यथा—प्रधानत्वात् सुत्यैव दर्शेऽनुष्ठेया। तदनुसारेण शेषभूता दीक्षा दिनान्तरेऽपकृष्यते। इति प्रकृतौ पूर्वपक्षवचनानुसारं पिण्डे आमिषभोजतस्य अंगित्वेन प्रधानत्वात् बलवत्तरत्वमिति भावः।

८०। मैथिलव्याख्यानं खण्डयित्वा पिण्डभोजनस्य श्राद्धांगत्वेन संस्थाप्य तच्च वाक्यप्रमाणापेक्षया सामर्थ्यवता लिंगेन प्रस्तौति ग्रन्थकारः।

८१। येषां मते पक्षश्राद्धं पक्षविहितमेकं कर्म। अत एव पक्षारंभ-पूर्वदिवसे एव निरामिषसकृद्भोजनरूपमुपयोक्ष्यमाणसंस्कारं सकृदेव कुर्यादिति तदपास्तमिति।

८२। यावज्जीवाधिकरणं पूर्वं ब्रूतम्।

---

[0] लक्षण इति ख० पु० अधिकपाठः।

ऽभ्यासलक्षणापत्तेः । अतो व्रतोपानीयाशनवत्[८४] प्रतिप्रयोगमावर्त्तत एव निरामिषभोजनमिति । यत्तु दाक्षिणात्यनिबन्धे

अक्षतान् गोपशूंश्चैव श्राद्धे मांसं तथा मधु ।
देवराच्च सुतोत्पत्तिं कलौ पंच विवर्जयेत् ।।

इति निगमवचनस्य ब्राह्मणस्य श्राद्धविषयत्वम ।

मुन्यन्नं[८५] ब्राह्मणस्योक्तं मांसं क्षत्रियवैश्ययोः ।
मधुप्रधानं शूद्रस्य........................

---

८३ । दिने दिने इति वीप्साश्रुतिः नित्यत्वबोधिकाः । तदुक्तं कालमाधवे पृ०—१४९ । नित्यं सदा यावदायु र्न कदाचिदतिक्रमेत् ।
कालाश्रुते र्वीप्सया च तन्नित्यमिति कीर्त्तितम् । इति ।

८४ । यमनियमसत्यब्रह्मचर्यादिव्रतानि सोमयागे कर्त्तुः कृते उपदिष्टानि सोमयागसमाप्तिपर्यन्तमेतानि कर्त्त्रा संपादनीयानि दीक्षाकाले एतानि श्रुतानि । दीक्षणीयादिषु अग्ने व्रतपते व्रतं चरिष्यामि इति श्रुतम् अपि न प्राप्यते पूर्वश्रुतेन प्रसंगसिद्धत्वात् । प्रकृतौ निमन्त्रितब्राह्मणस्य निरमिषभोजनं तद्गतत्वेन प्राप्तत्वात् प्रतिप्रयोगं नाम प्रतिश्राद्धं वा प्रतिनिमन्त्रणं प्रसंगतः आयाति, न तदर्थं किमपि श्रुतिरस्ति प्रसंगसिद्धत्वात् ।

सोऽयं विषयः जैमिनीयेषु "तथा व्रतमुपेतत्वात् । विप्रतिषेधाच्च । सत्यवदिति चेत् । न संयोगपृथक्त्वात्" (१२।१।२०-२३) इति सूत्रेषु विचारितः ।

अत्राहुः सिद्धान्ते भाष्यकाराः—तत्र पुरुषसंयोगः कर्मसंयोगश्च । पुरुषार्थमुपेतं कामार्थं पुनरुपेयते । नन्विहापि संयोगपृथक्त्वात् सोमार्थमुपेतमैष्टिकार्थं पुनरुपेयत इति । नेह पुनरुपगमनेनार्थः । यत् सोमार्थं तदेवेतरत्र प्रसङ्गात् कार्यं साधयति ।

तन्त्ररत्ने पार्थसारथिमिश्रा अपि—कर्मांगभूता यमनियमा व्रतम् । तदुपगमनार्थोऽयं मन्त्रो लिंगाद् विज्ञायमानो नादृष्टार्थः शक्यः कल्पयितुम् । प्रयोगाङ्गभूताश्च यमनियमाः कतृद्वारेण प्रयोगश्च साङ्गस्येति दीक्षाकाले एतेनैव सौमिकेन व्रतेन सिद्धार्थत्वात् प्राकृतं व्रतं निवर्त्तत इति ।

जैमिनीयन्यायमालायां माधवाचार्या अपि—

व्रतोपानयनमेष्वस्ति न वा, चोदकोऽस्ति तत् ।
उपेतस्यापरित्यागे विरोधान्नास्ति तत्पुनः ।।

इति पुलस्त्यवचनेन[०] एकवाक्यत्वादित्युक्तम्। तच्चिन्त्यम्। कलिनिषेधानां तु[००] वैकल्पिकत्वात् [८६]अतिप्रसंगनिराकरणार्थत्वाद् वा। अन्यथाऽग्निहोत्रसंन्यासाद्यकरणापत्तेश्च। यत्तु मुन्यन्नं[८७] ब्राह्मणस्येति तद्वानप्रस्थब्राह्मणपरम्। प्रधानपदब्राह्मणसमभिव्याहारेण ब्राह्मणस्य मुन्यन्नप्रधानपरं वा अन्यथा मांसाष्टकायामगतेः। यथा वायुपुराणे—

आद्याऽपूपैः[८८] सदा कार्या मांसैरन्या भवेत्तथा।
शाकैः कार्या तृतीया स्यादेष द्रव्यगतो विधिः॥

इति मांसद्रव्यनियमात्। [८९]ऋतवर्थेष्टाक्षेपप्राप्तिसंभावनायां विधे र्नियमार्थत्वात्।

---

अत्र सिद्धान्तविस्तरो यथा—अग्ने व्रतपते व्रतं चरिष्यामि। इत्ययमुपायनमन्त्रः। न हि चर्यमाणे व्रते 'चरिष्यामि' इति प्रयोगः संभवति। तस्मात् प्रसङ्गसिद्धं व्रतम्॥ इति।

८५। संपूर्णश्लोको मिताक्षरायां (१।२६१) यथा—

मुन्यन्नं ब्राह्मणस्योक्तं मांसं क्षत्रियवैश्ययोः
मधुप्रदानं शूद्रस्य सर्वेषां चाविरोधि यत्। इति।

अत्र प्रधानपदस्य क्षत्रियवैश्यपदाभ्यामपि अन्वयो विधेयः।

८६। अति प्रसङ्गोऽत्र अत्यन्ताग्रहः। तद्वारणाय गवालंभादे र्निषेधायेति।

८७। अफालकृष्टपदार्थैः निखिलकर्मणां निर्वाहो विहितो वानप्रस्थानाम्। तदुक्तं योगीश्वरेण—३।४६

अफालकृष्टेनाग्नींश्च पितॄन् देवातिथीनपि।
भृत्यांश्च तर्पयेत् श्मश्रुजटालोमभृदात्मवान्॥

इति स्वत उत्पन्नत्वेनाफालकृष्टानां मुन्यन्नत्वम्। तद्द्वारा पञ्चमहायज्ञादिनिर्वाहो भवति॥ मनुरेतत् स्फुटमुक्तवान्। ६।११

वासन्तशारदै र्मध्यैर्मुन्यन्नैः स्वयमाहृतैः।
पुरोडाशांश्चरूंश्चैव विधिवन्निर्वपेत् पृथक्॥ इति।

एतेन श्राद्धमपि तेनैव कर्त्तव्यमिति।

८८। आद्यतृतीययोरन्या अन्याष्टका मध्यमाष्टका सैव मांसैः कार्या।

---

० वचनैकवाक्य इति ख० पु० अधिकपाठः।
०० ख० पु० नास्ति।

अत एव विज्ञानगिरिचरणाः[९०]—अत्र यद्यपि मुन्यन्नमांसमध्वादीनि सर्ववर्णसाधारणानि दर्शितानि तथापि पुलस्त्यवचनं मुन्यन्नं [०]ब्राह्मणस्य प्रधानं समग्रफलदम् ।[००] अन्यथा

लोहामिषं कालशाकं मांसं वार्धिणसस्य च ।
यद्ददाति गयास्थश्च सर्वमानन्त्यमश्नुते ॥

इति ( १।२६०-२६१ ) योगीश्वरवचनस्यागतेरित्याहुः । एतच्च शेषभक्षणं नवश्राद्धे[९१] न कर्त्तव्यम् ।

नवश्राद्धेषु यच्छिष्टं गृहे पर्युषितं च यत् ।
दंपत्योर्भुक्तिशिष्टं च न भुंजीत कदाचन ॥

इति विज्ञान[९२]गिरिलिखनात् ।

---

८९ । क्रत्वर्थं पूरयितुं विधिसंक्रमो घटते । स च नियमविधिना सिद्ध्यति । मध्यमाष्टकायां मांसविधानं नियमार्थमिति भावः ।

९० । लोहामिषादि (१।२६०) योगीश्वरवचनव्याख्याने मिताक्षरायामिदमुक्तं विज्ञानेश्वरचरणैः । मुद्रितमिताक्षरायामेवं पाठो यथा—"यद्यपि मुन्यन्नमांसमध्वादीनि सर्ववर्णानां सामान्येन श्राद्धे योग्यानि, दर्शितानि, तथापि पुलस्त्योक्ता व्यवस्थाऽऽदरणीया ।"

मुन्यन्नं ब्राह्मणस्योक्तं मांसं क्षत्रियवैश्ययोः ।
मधुप्रधानं शूद्रस्य सर्वेषां चाविरोधि यत् ॥ इति ।

अस्यार्थः—मुन्यन्नं निवारादि यच्छ्राद्धयोग्यमुक्तं तद्ब्राह्मणस्य प्रधानं समग्रकल्पम्, यच्च मांसमुक्तं तत् क्षत्रियवैश्ययोः प्रधानम् । यत्क्षौद्रमुक्तं तच्छूद्रस्य । एतत्त्रितयव्यतिरिक्तपदविरोधियदप्रतिषिद्धं वास्तुकादि, यच्च विहितं हविष्यं कालशाकादि, तत्सर्वेषां समग्रफलदमिति ।

९१ । नव श्राद्धानि यथा मिताक्षरायां (१।२५२)—
प्रथमेऽह्नि तृतीयेऽह्नि पञ्चमे सप्तमे तथा ।
नवमैकादशे चैव तन्नव श्राद्धमुच्यते ॥

९२ । द्रष्टव्या या० स्मृ० मिताक्षरा (१।२५२)

---

० 'क' पु० नास्ति ।

०० यच्च विरोधिकालशाकादि तत्सर्ववर्णानाम् इति ख० पु० अधिकपाठः ।

एवम् उपवासो यदा नित्यः° श्राद्धं नैमित्तिकं भवेत् ।
उपवासं तदा कुर्यादाघ्राय पितृसेवितम् ।।

इति वचनात्°°वाजिनशेष[९३]वदाघ्राणमात्रं प्रतिपत्तिः एवं यावज्जीव°°°निरामिषव्रत ब्राह्मणनिमन्त्रणे.........

हविष्यान्नेन वै मांसं पायसेन तु वत्सरम् ।[९४]

इति (१।२५८) योगीश्वरवचनात् [९५]कांस्यभोजिन्यायेन निरामिषभोजनमेव कर्त्तव्यम् । ब्रह्मचारियत्या°°°°मन्त्रणे तु

---

९३ । तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनमिति श्रुत्या दधिसंयोगेन पयसा आमिक्षा संपाद्यते । सा विश्वेदेवानां कृते भवति । तच्छिष्टं जलं वाजिनाख्यं वाजिदैवतोद्देश्येन नाम अश्विनीकुमारार्थं दीयते । आमिक्षायाः कृते पयसि दधिसंयोगात् आमिक्षाया उत्पत्तिशिष्टत्वं, तच्छिष्टस्य वाजिनस्य अप्रयोजनतया संपादितत्वात् प्रतिपत्तित्वेन उत्पत्तिशिष्टत्वम् । तद्वत् उपवासदिने एकादशीव्रतादौ प्रतिपत्तित्वेन पितृशिष्टस्य स्वीकारेण निर्वाहितव्यं श्राद्धकर्म इति भावः ।

९४ । संपूर्णश्लोको यथा—

हविष्यान्नेन वै मांसं पायसेन तु वत्सरम् ।
मात्स्यहारिणकौरभ्रशाकुनच्छागपार्षतैः ।। या० स्मृ० १।२५८

९५ । कांस्यभोजिन्यायो मीमांसाकोषे विवृतः भा०—३, पृ०—१४३१ "यथा मया नित्यं गुरूच्छिष्टं भोक्तव्यं कांस्यपात्रे च भोक्तव्यमिति नियमवतो विनेयस्य नियमाभंगाय गुरुर्नित्यं कांस्यपात्रे भुंक्ते इति ।

विधिविवेकटीकायां न्यायकणिकायां (पृ० २९६-३२०) वाचस्पतिमिश्रा एवमाहुर्यत्—उपाध्यायः प्रधानो नित्यं तत्तत् पात्रभोजी, शिष्यस्तु अप्रधानः कांस्यपात्रे एव भुंक्ते । तत्र प्रवृत्तिलाघवात् एकस्मिन् पात्रे उपादातव्ये यदि प्रधानोपाध्यायानुरोधात् यत् किंचित् पात्रमुपादीयेत शिष्यस्य भोजनं न संपद्यते, कांस्यपात्रे तु उपादीयमानेनानियतपात्रभोजिन उपाध्यायस्य भोजनविरोधः ।

---

° नित्यम् इति ख० पु० पाठः ।

°° एकादश्यादौ इति ख० पु० अधिकपाठः ।

°°° यावज्जीवंकृतामिषवर्जनसंकल्प—इति श्राद्धदीपोद्धृतपाठः पृ०—१२५ ।

°°°° ब्रह्मचारित्रिदण्डिसन्न्यास्यामन्त्रणे इति तत्रैव ।

ब्राह्मणः काममश्नीयाच्छ्राद्धे व्रतमपीडयन्[९६] ।

इति (१।०७) योगीश्वरवचनात् तेन न भक्षणीयं मधु मांसं च ।

यथाविधिनियुक्तस्तु यो मांसं नात्ति मानवः ।

स प्रेत्य पशुतां याति संभवान् एकविंशतिम् ।।

इति मनुना[९७] (५।३५) दोषश्रवणात् अन्येन पुनरवश्यं भक्षणीयमिति । विद्याकर-वाजपेयिचरणास्तु भक्ष्यमांसानां भक्षणं त्रेधा । विहितम् । अविहितप्रतिषिद्धम् । प्रतिषिद्धं च । विहितमपि चतुर्विधम् । विहितनिमित्तकं श्रौतं, विहितनिमित्तकं स्मार्तम्, ऐच्छिकनिमित्तकं स्मार्तं च । आद्यं पशुयागशेषभक्षणं यजमानस्य, द्वितीयं श्राद्धविनियुक्तशेषभक्षणं यजमानस्य, तृतीयम् ऋत्विजां शेषभक्षणं, चतुर्थं निमन्त्रितानां कव्यस्य, पंचममतिथे र्दातृप्रार्थनया भक्षणम् । रोगार्त्तस्य चिकित्सार्थकम् । निषिद्धेतरदिने गृहस्थस्य देवता°र्चनपूर्वकभक्षणं च । नित्य-श्राद्धस्य[९८] गृहमेधीयन्यायेनापूर्वत्वात् शेषभक्षणस्याविहितत्वात् । षष्ठं "मत्स्यांश्च कामतो जग्ध्वा" इत्यनेन निषिद्धम् । एवमभावस्येष्टहेतुत्वायोगात्" सर्वान् कामानवाप्नोतीत्यादौ मांसवर्जनसंकल्प एव फलार्थः । तत्र संकल्पे कृते कृतपशुयागेन तत्संकल्पं बाधित्वा भक्षणं प्रायश्चित्तं च कर्त्तव्यम् । अथवा तदनधिकारिण एवान्धादे र्यावजीवनिरामिषसंकल्पाधिकारः । गृहस्थ-मात्रस्य संकल्पा°°धिकारात् तथाविधसंकल्प एव न कार्यः । कृतसंकल्पेन

---

तेनाविरोधेन प्रधानमपि गुणानुरोधात् नियम्यते एव इति तदनुरोधेन अङ्गविध्य-विरोधे अङ्गिविधिवृत्तिः । इति ।

प्रकृतौ ब्राह्मणस्य निरामिषभोजित्वेन यजमानकर्त्तृकश्राद्धीयमांसद्रव्य दानस्य अनियतत्वेन ब्राह्मणभोजनस्य अङ्गत्वेन गुणत्वात् तदनुरोधेन अङ्गविध्यविरोधे नाम मांसाभक्षणव्रतविध्यविरोधे अङ्गविधिवृत्ति र्नाम यजमानकर्त्तृकश्राद्धगत-निरामिषविधिवृत्तिरिति समन्वयः ।

९६ । संपूर्णवचनं यथा—या० स्मृ० १।१०

"ब्रह्मचर्ये स्थितो नैकान्नमद्यादनापदि ।

ब्राह्मणः काममश्नीयाच्छ्राद्धे व्रतमपीडयन् ।।

९७ । मुद्रितमनुस्मृतौ तु "नियुक्तस्तु यथान्यायं यो मांसं नात्ति मानवः ।

स प्रेत्य पशुतां याति संभवानेकविंशतिम् ।। ५।३५ ।।

---

° देवपित्र्यर्चन इति ख० पु० पाठः ।

°° श्राद्धाधिकारादिति ।

श्राद्धकर्त्रा पुनः

"पुरुषार्थसमासत्तेः काम्यं नित्यस्य बाधकम्"

इति न्यायेन पर्वादिषु न भक्षणीयम् । एवं कृतसङ्कल्पेनामन्त्रितेनापि प्रतिषेधस्य विहितगोचरत्वे विकल्पापत्तेः[९९] । तथा कृतसङ्कल्पस्याष्टम्यादिनियुक्तस्याभक्षण-निषेधभक्षणनिषेधयोः[१००] कः प्रकार उच्यते गुर्वोर्विवादे साक्षिकृतस्य सत्यानृतान्य-तराभिधानेऽपीष्टानिष्टप्राप्तिवत् उभयसम्भवात् । न चैवमग्नीषोमीयहिंसाया-मपि[१०१] तथात्वापत्तिः । अनिष्टसंसृष्टेष्टसाधनत्व[०]संबंध्यनिषेधगोचरत्वात् ।

---

९८ । तद्धि नित्यस्य नित्यत्वं यत्र करणेऽलाभः, अकरणे प्रत्यवायः, अतः केवलमपूर्वमात्रमस्ति । गृहमेधीयेष्टिवत्तद् भवति, यतो हि गृहमेधीये वचनात् स्विष्टकृदादेरनुष्ठानं संभवति, किन्तु अपूर्वमात्रवत्त्वात् प्राशित्रप्राशनं न भवति । सोऽयं विषयः जैमिनीयेषु "स्विष्टकृति भक्षप्रतिषेधः स्यात्तुल्यकारणत्वात् । अप्रतिषेधो वा दर्शनादिढायां स्यात् । प्रतिषेधो वा विधिपूर्वस्य दर्शनात् (१०।७।३५-३७) इति सूत्रेषु विचारितः ।

तत्राहुः सिद्धान्ते शबरस्वामिनः—प्रतिषेधो वा । तुल्यकारणेन हि प्रत्यक्ष-श्रुतेनानुमानिकं बाध्यते । अथ यद्दर्शनमुक्तं तद् विधिपूर्वस्य भक्ष्यस्य भविष्यति । एवं ह्याम्नायते । अथेडामेवावद्यति, न प्राशित्रमुपहूय प्राश्नातीति, तस्य दर्शनम् इति । जैमिनीयन्यायमालायां माधवाचार्या अपि—

तत्रैव परिसंख्यात्वे प्राशित्राद्यस्ति वा न वा ।
अस्तीडादर्शनान्येव तदुक्त्यात्रास्ति नेतरत् ।। इति ।

अत्र सिद्धान्ते विस्तरो यथा—अत्र गृहमेधीये तदिडाभक्षणं वचनबलेनास्तु । स्विष्टकृद्वाक्यप्राशित्रस्य परिसंख्यातस्य वचनेन निवारितत्वादितरत् प्राशित्रादि-भक्षणं परिसंख्यातत्वान्नास्ति । इति ।

९९ । तुल्यबलयोर्विरोधे विकल्प उपपद्यते । मांसभक्षणस्य सपक्षे विपक्षे च वचनस्य उपलभ्यमानत्वात् प्रसङ्गस्यास्यावसर इति एतद्वाक्यस्यार्थः ।

१०० । अष्टम्यादि नाम अष्टकादि । मध्यमाष्टकायां मांसस्यावश्यं देयत्वात् विषयोऽयं मांसभक्षणगत इति ।

१०१ । "अग्नीषोमीयं पशुमालभेत" (तै० सं० ६।१।११।६) इति वाक्यात् ।

---

० साधनत्वस्य विध्यर्थेन निषेधागोचरत्वात् इति ख पुस्तकपाठः ।

न च प्रकृतेऽपि तथा। एकनिषेधस्य क्रत्वर्थत्वात् इतरस्य पुरुषार्थत्वात्। एवं च

वर्णिनां[१०२] हि वधो यत्र तत्र साक्ष्यनृतं वदेत्।
तत्पावनाय निर्वाप्यश्चरुः सारस्वतो द्विजैः ॥

इति वदष्टम्यादौ[१०३] नियुक्तेन भक्षणं प्रायश्चित्तं च द्वयमपि कर्त्तव्यम्। ऐच्छिकनिमित्तकत्वात् स्मार्त्तत्वाविशेषात् दर्शे पशुशेषभक्षणवदष्टम्यादौ[१०४] कर्त्तव्यमेव श्राद्धशेषमांसभक्षणमित्याहुः। यत्तु अष्टम्यादिनिषेधस्य सामान्यशास्त्रस्य देवान् पितॄनिति विशेषशास्त्रेण तद्व्यतिरिक्तविषयत्वम्। एवं च पर्वसु देवपित्रर्चनपूर्वकभक्षणे न दोष इति भवदेवभट्टेनोक्तम्। तन्न। षष्ठ्यष्टमीचतुर्दशीपञ्चदश्यमावास्यासंक्रान्त्यादिष्वन्यत्र[१०५] गृहस्थस्य कामचारे प्राप्ते तद्वर्जनसङ्कल्पः पुरुषं निःश्रेयसेनयोजयति। यथाहमनुः (५।५६)।

न[१०६] मांसभक्षणे दोषो न मद्य न च मैथुने।
प्रवृत्तिरेषा भूतानां निवृत्तिस्तु महाफला ॥

इति विरोधाधिकरणवार्त्तिकविरोधादिति[१०७]।

---

अग्नीषोमदैवतोद्देश्येन आलभ्यमानस्य पशोः यागत्वात् न हिंसा। तस्याः श्रौतेन प्राप्तेः धर्मार्थत्वम्।

१०२। या० स्मृ० २।८३

१०३। तोलयन्तु गौतमवचनं—नानृतवचने दोषो जीवनं चेत्तदधीनम्, न तु वाल्पीयसो जीवनम्। इति।

१०४। दर्शे मत्स्यमांसादीनां भक्षणं निषिद्धमपि दर्शयागकर्त्ता दर्शांगभूतपशुमांसभक्षणं विधायानन्तरं प्रायश्चित्तं कर्त्तव्यमिति श्रुतिनिर्देशात् धर्मशास्त्रव्यवस्थातः फलति। तद्वत् श्राद्धे मांसभक्षणस्य।

१०५। पञ्चदशी नाम पूर्णिमा।

१०६। एतद्वाक्यस्य परिसंख्यात्वेन गृहीतत्वात्, परिसंख्यायाश्च निवृत्त्यात्मत्वेन मांसाभक्षणरूपसंकल्पस्यात्रार्थवत्त्वमिति भावः।

१०७। अपि वा कर्त्तृसामान्यात् प्रमाणमनुमानं स्यात् (जै० सू० १।२।२) इति सूत्रवार्त्तिकविरोधादित्यर्थः। तदित्थम्—

येन यत्नेन मन्वाद्यैरात्मवाक्यं प्रपाठितम्।
कस्मात्तेनैव तन्मूलं चोदना न समर्पिता ॥ इति।

इत्येवं मांसमीमांसा यथाप्रज्ञं मया कृता[१०८] ।
यदत्राशुद्धलिखनं तद्बुधाः परिशोध्यताम् ॥

अथ तृप्तिकराणि । अक्षय्यतृप्तिकराणि खड्गमांसादीनि अनारभ्याधीतगुणकामत्वात्[१०९] सर्वसाधारणानि न तु (तेषां) प्रकृतिगामित्वं, येन सप्तमाधिकरणन्यायेन[११०] विकृतिष्वतिदेशो न स्यात् । न चात्र कथमाश्रयलाभः । निविद्भिः[१११] सामिधेनी[११२]प्रकरणविच्छेदेऽपि प्रतिष्ठाकामैकविंशस्येव[११३] नैमित्तिकसाप्तदशस्येव[११४] वाऽनुवचनसामान्येन धर्मप्राप्तिवत् श्राद्धकल्पाम्नातत्वेन समाख्याबलेन[११५] श्राद्धीयत्वात् आश्रयप्राप्तेः। अनुवचनवत् क्रतुमध्यनिवेशोऽपि ।

---

१०८ । इत्येवमिति श्लोकः ग्रन्थकर्त्तुः स्वाहंकारपरिहारार्थकः मांसभक्षणमीमांसाप्रकरणसमाप्तिसूचकश्च ।

१०९ । "अनारभ्य विधिः, सामान्यविधिः मित्रविन्दादिप्रकरणस्थस्तु विशेषविधिः । अनारभ्यविहितपदार्थाश्रितगुणा यत्र सन्ति तत्र गुणकामानां विकृतिषु न प्रवृत्तिः । यस्य अनारभ्यवादस्यातिदेशिकपदार्थाऽनपेक्षित्वं, तत्र प्रकृतिविकृतिसाधारण्यमेव । यथा—आश्रावयेति चतुरक्षरम् इत्यादौ तत्र विकृतिरूपयज्ञातिदेशकत्वाभावात् इति मयूखमालिकायां (३।६।१) सोमनाथः ।

११० । सप्तमे अध्याये सामान्यतोऽतिदेशलक्षणमुक्तम् । इति शबरस्वामिनः (८।१।१) । सोऽयं न्यायोऽत्र प्रसरति ।

१११ । दर्शपूर्णमासयोरङ्गं सामिधेनी । सामिधेन्युत्तरं निवित् ऋक् पठ्यते । अतः निविद्भिः सामिधेनी प्रकरणविच्छेद इति उच्यते ।

११२ । सम्यगिध्यते अग्निः याभिऋग्भिः प्रदत्ताभिः समिद्भिस्ता ऋचः सामिधेन्यः, तासां चाग्न्यंगत्वम् । इति (जै० न्या० वि० ३।१।११) माधवाचार्याः ।

११३ । एकविंशतिमनुब्रूयात् प्रतिष्ठाकामस्य इति वाक्यं दर्शपूर्णमासप्रयोगान्तर्गतम् ।

११४ । सप्तदश सामिधेनीरनुब्रूयात् इति अनारभ्य आम्नायते । इति ।

११५ । समाख्यानं च तद्वत् (३।७।१७) इति जैमिनीयसूत्रस्य वृत्तौ केवलानन्दसरस्वती ब्रूते यत्—"ज्योतिष्टोमे 'उत यत् सुन्वन्ति सामिधेनीस्तदन्वाहुः', इत्यनेन यथा सामिधेन्यनुवचनार्थं दक्षिणहविर्धानशकटसमीपदेशः 'दक्षिणस्य हविर्धानस्य नीडे राजानमासायति' इति वचनानुसारेण लक्षितः तद्वत् समाख्यानं सोमरूपं हविः धीयते स्थाप्यते यस्मिन् तत् शकटं हविर्धानम् इति समाख्यापि

किंच— [116]आत्मनो ह्यक्रियारूपै गुणैराश्रीयते क्रिया ।
… … … … क्रियायाः किं प्रयोजनम् ।

इति द्रव्यस्यावश्यक्रियापेक्षणादप्याश्रयलाभः । न च गोदोहनेन [117] चमसबाधः प्रकृतद्रव्यबाधेनैव एतन्निवेशः स्यादिति वाच्यम् । नैकव्यंजनभक्षवदिति वचनेन नानाविधद्रव्यसम्भवात् "प्रतिरूपाः[118] स्त्रिय" इत्यादि तु नापरपक्षश्राद्धे गुणफलसम्बन्धः । किन्तु फलं चाकर्मसंनिधाविति न्यायेन कर्मान्तरमेव । श्राद्धपिण्डस्य (१।२४२)

'उच्छिष्टसंनिधौ[119] पिण्डान् प्रदद्यात् पितृयज्ञवत्'

इति योगीश्वरवचनात् पितृयज्ञविकृतित्वेन कात्यायनोक्तकाममध्यमपिण्डप्राशनं[120] सप्तमाधिकरणन्यायेन न प्राप्नोति । तथापि श्राद्धप्रकरणे मनुना[121] पुनर्गुणकाममध्यमपिण्डभक्षणविधानात् उपदेशत एव तत्प्राप्तिरिति ।

---

शकटसमीपदेशमेव लक्षयति इति सिद्धान्तः । तदवत् प्रकृतौ खड्गादिमांसभक्षणं समाख्याबलेन श्राद्धीयमांसमिति आख्या भवति ।

११६ । द्रव्यं क्रियया सह अन्वितं सत् फलं ददाति । क्रियायास्तदेव प्रयोजनं, येन तस्या माध्यमत्वेन द्रव्यस्य उपपत्तिः फलनिमित्तं भवति । अक्रियारूपावस्थायां विद्यमानानां गुणानामाश्रयत्वेन क्रिया स्वीक्रियते ।

११७ । "नैमित्तिकं तु प्रकृतौ, तद्विचारः संयोगविशेषात्" इति जैमिनीयसूत्रे (३।६।१०) विषयोऽयं विचारितः । तत्रायं भाष्यकृत्सिद्धान्तो यत् चमसेन अपः प्रणयेत् गोदोहनेन पशुकामस्य । इति । तत्र प्रकृतेश्चमसेनावरुद्धत्वाद् गोदोहनं विकृतौ इति पूर्वपक्षः । कामनानिमित्तकेन गोदोहनेन नित्यस्य चमसस्य निष्कामविषयतया सङ्कोचनीयत्वात् प्रकृतावेव गोदोहनमिति सिद्धान्तः ।

११८ । अथ काम्यानि भवन्ति स्त्रियः प्रतिरूपाः प्रतिपदि द्वितीयायां स्त्रीजन्माश्वस्तृतीयायां चतुर्थ्यां क्षुद्रपशवः पुत्राः पंचम्यां व्यूतर्द्धिः, षष्ठ्यां कृषिः सप्तम्यां वाणिज्यमष्टम्यामेकशफं नवम्यां दशम्यां गावः परिचारिका एकादश्यां धनधान्यानि द्वादश्यां कुप्यं हिरण्यं ज्ञातिश्रैष्ठ्यं च त्रयोदश्यां युवानस्त्र म्रियन्ते शस्त्रहतस्य चतुर्दश्याममावास्यायां सर्वमित्यमावास्यायां सर्वमिति । पार० श्रा० सू०—६ ।

११९ । संपूर्णश्लोको यथा—सर्वमन्नमुपादाय सतिलं दक्षिणामुखः । उच्छिष्टसंनिधौ पिण्डान् दद्यात् वै पितृयज्ञवत् ।। इति योगीश्वरवचनम् ।

## अथापरपक्षश्राद्धविचारः

तत्र पारस्करः अपरपक्षे[१२२] श्राद्धं कुर्वीत शाकेनापि नापरपक्षमतिक्रामेत् । मासि मासि वोऽशनमिति श्रुतेः । (श्राद्धसूत्रम्—१म कण्डिका) । इदं चानाहिताग्निना पक्षमध्य एकस्मिन्नहनि कर्त्तव्यम् । साग्निकेन तु

न[१२३] दर्शेन विना श्राद्धमाहिताग्नेर्द्विजन्मनः ।

इति (३।१८२) मनुवचनादमावास्यायामेवेति तन्त्ररत्नेऽभिहितम्[१२४] । एवममावास्याश्राद्धमनाहितावसथ्येनापि कर्त्तव्यम् । कर्काचार्यास्तु[१२५]अग्निसाध्याग्नौकरणहोमरूपाङ्गोपसंहाराभावात् विप्रपाण्यादिपक्षस्य उत्सन्नस्मार्त्ताग्नि-

---

१२० । आधत्तेति मध्यमं पिण्डं पत्नी प्राश्नाति पुत्रकामा (४।१।२२) इति कात्यायनश्रौतसूत्रम् । आधत्त पितरो गर्भमिति (शु० य० वे०) श्रुतिरप्यस्ति ।

१२१ । पतिव्रता धर्मपत्नी पितृपूजनतत्परा ।
मध्यमं तु ततः पिण्डमद्यात् सम्यक् सुतार्थिनी ।। मनु (३-२६२)

१२२ । सम्पूर्णसूत्रं यथा—अपरपक्षे श्राद्धं कुर्वीतोर्द्ध्वं वा चतुर्थ्यां तदहः सम्पद्येत तदहर्ब्राह्मणानामन्त्र्य पूर्वेद्युर्वा स्नातकानेके यतीन् गृहस्थान् साधून् वा श्रोत्रियान् वृद्धाननवद्यांस्वकर्मस्थानभावेऽपि शिष्यानस्वाचारान् द्विर्नग्नशुक्लविकिलधश्यावदन्त बिद्धप्रजननव्याधितव्यंगिश्वित्रिकुष्ठिकुनखिवर्जमनिन्द्येनामन्त्रितो नापक्रामेदामन्त्रितो वाऽन्यदन्नं न प्रतिगृह्णीयात् स्नातांच्छुचीनाचान्तान्प्रांमुखानुपवेश्य दैवे युग्मानयुग्मान् यथाशक्ति पित्र्ये एकैकस्योदंमुखान् द्वौ वा दैवे त्रीन् पित्र्य एकैकमुभयत्र वा मातामहानां चैव तन्त्रं वा वैश्वदेविकम् । श्रद्धान्वितः श्राद्धं कुर्वीत शाकेनापि नापरपक्षमतिक्रामेत् मासि मासि वोशनमिति श्रुतेस्तदहः शुचिरक्रोधनोऽत्वरितोऽप्रमत्तः सत्यवादी स्यादध्वमैथुनश्रमस्वाध्यान् वर्जयेदावाहनादि वाग्यत आपस्पर्शनादामन्त्रिताश्चैवम् इति ।

१२३ । न पैतृयज्ञियो होमो लौकिकेऽग्नौ विधीयते ।
न दर्शेन विना श्राद्धमाहिताग्ने र्द्विजन्मनः ।

१२४ । प्रथमालोके विषयोऽयं विचारितः । तन्त्ररत्नगतोदाहरणानि तत्रैव मृग्यानि ।

१२५ । तोलयन्तु पारस्करश्राद्धसूत्रप्रथमकण्डिकाकर्कभाष्यं—"अपरपक्ष इति कृष्णपक्ष इत्युच्यते । समाचारात् समाचरन्ति हि कृष्णपक्षे श्राद्धमिति । लिंगाच्च योऽपक्षीयते स पितर इति । पितृसंबन्धिकर्मार्हे अपरपक्ष उपचारवृत्त्या

विषत्वादावसथ्याधानाङ्गभूताभ्युदयिकविषयत्वात् °वाऽनाहितावसथ्यस्य दर्श-श्राद्धानधिकारादनारब्धप्रकृतेश्च°° विकृत्यनधिकारेण अष्टकाश्राद्धेष्वप्यनधिकार इत्याहुः। वस्तुतस्तु पिण्डपितृयज्ञस्यानङ्गत्वसिद्ध्यर्थं पिण्डान्वाहार्यकश्राद्धपरत्वेन दर्शश्राद्धस्य तन्त्ररत्ने[१२६] व्याख्यानात् कात्यायनमते°°° पूर्वेद्युः पितृभ्यो निष्क्रिय उत्तरेद्यु र्ददाति इति श्रुतेरंगं वा समभिव्याहरादिति न्यायात् पिण्डपितृयज्ञस्याङ्ग-त्वात् मनुवचनस्याङ्गाङ्गिसंबन्धपरेऽप्यविरोधात् साग्निकस्य दर्शान्यदिनेऽप्यपरपक्ष-श्राद्धाधिकारोऽस्त्येव कन्यापरपक्षवत्।

यच्च विवाहकाल[१२७] एवावसथ्याधानात् अनाहितावस्थ्यः पुरुषो नास्ति इति कर्कवचनं, तदपि अभ्रातृकस्य दारकाले, सभ्रातृकस्य दायाद्यकाले इत्याव-सथ्याधानाय वासुदेवभाष्यविरुद्धमित्यनाहितावथ्योऽपि पुरुषोऽस्ति। अतएव

कृतदारो गृहे ज्येष्ठो यो नादध्यादुपासनम्।
वर्षे वर्षे चरेत् कृच्छ्रं चान्द्रायणमथापि वा॥

इति ज्येष्ठस्यैव प्रायश्चित्तमुक्तम्।

---

पितृशब्देनाभिधीयते। कुर्वीतेति कर्त्तव्यतावचनं तच्चाग्निमाननग्निमांश्च करोति प्रसिद्धेः स्मृत्यन्तराभिप्रायाच्च।

अग्न्यभावे तु विप्रस्य पाणावेवोपपादयेत्।
यो ह्यग्निः स द्विजो विप्रैर्मन्त्रदर्शिभिरुच्यते॥ इति।

तन्न। अग्निमाननेन करोति सर्वांगोपसंहारसामर्थ्यात्। कथम् इतरस्य न होमा-संभवात्। सर्वांगोपसंहारसामर्थ्यात्। कुत इति चेत् स्मृत्यन्तरात्।

न पैतृयज्ञियो होमो लौकिकेऽग्नौ विधीयते। इति स च पिण्डपितृयज्ञवद्धुत्वे-त्यभिधीयते। अपि च दारसंग्रहपूर्वकमावसथ्याधानं तत् पूर्विका च कर्मान्तिरेषु प्रवृत्तिरिति। अतोऽपि नानग्निमतोधिकारः। यदुक्तमग्न्यभावे तु विप्रस्येति तत्कृतावसथ्याधानाभ्युदयिकविषयम्।

१२६। द्रष्टव्यः प्रथमालोकः

१२७। आवसथ्याधानं दारकाले। दायाद्यकाल एकेषाम् (१।२।१-२) इति पारस्करगृह्यसूत्रव्याख्याने अग्न्याधानविषये कर्काचार्या एवमाहुः-गृह्यस्थाली-पाकानां कर्म प्रकान्तमतो गृहस्यैवोत्पत्त्यर्थमिदमाह 'आवसथ्याधानं दारकाले' इति

---

° ख० पु० नास्ति

°° पिण्डपितृयज्ञस्यांगत्वात् मनुवचनस्य अंगांगिवदनारब्ध इति ख० पु० अधिकपाठः।

°°° 'स' इति ख० पु० अधिकपाठः।

एव सह वसेयुर्वा पृथग्वा धर्मकारणात् ।[१२८]
पृथग् विवर्धते धर्मस्तस्माद्धर्म्या पृथक् क्रिया ।।

इति मनु वचनात् (९-१११) विभागात् पूर्वमपि श्राद्धानुष्ठानं शास्त्रेष्वस्ति° । अतः शास्त्रप्रवृत्तिवेलायामप्यनाहितावसथ्यः पुरुषोऽस्तीति नास्मार्त्ताग्निमत एव पार्वणाधिकार इनि कर्कवचनमुपेक्षणीयम् । तथा चोशनाः ३-१२३—

कुर्यादहरहः श्राद्धं प्रमीतपितृको द्विजः ।
साग्निकोऽनग्निको वापि दर्शे दर्शे[१२९] विशेषतः ।।

---

आवसथ्यो गृह्यः शालाग्निरित्यनर्थान्तरं तस्याधानं स्थापनमात्मसात् करणमिति यावत् तद्दारकाले भवति । दारशब्देन पाणिग्रहणादिसंस्कारसंस्कृतं स्त्रीद्रव्यमभिधीयते । तस्याहरणकालो दारकालस्तत्र । केचित्तु पाणिग्रहणात्प्रागिच्छन्ति गृह्यकारान्तरवचनात् । एवं हि तेनोक्तम् जायायाः पाणिजिघ्रुक्षन्नादधीतेति तत्पुनर्नातीव युक्तरूपम् । येनाद्याप्यसंस्कृतमेव स्त्रीद्रव्यम्, न चा संस्कृत तत्सहायतां प्रतिपद्यते, स सहायस्य च कर्मस्वधिकारः । मध्यमं हि दंपत्योर्द्रव्यन्नैकः शक्नोति परित्यक्तुम् । पत्न्यपि च तेन विना नधिकृतैव, तस्मात् ससहायस्यकर्मस्वधिकारः । तथाच लिंगम् । असर्वो हि तावत् भवति यावज्जायान्न विन्दत इति, अतः संस्काराभिनिवृत्त्युपरकालं दारकालः । अपि च स्मरन्ति तमेव दारकालं प्रकृत्य धर्मे चार्थे च कामे च तथा सह नातिचरितव्यमिति । पूर्वं च क्रियमाणे आधाने एकाकिनाऽग्निराहितो भवति, तथा सत्परिचारः स्यादिति । तस्माच्चतुर्थ्युत्तरकालं दारकाल इति संप्रदायः । यत्पुनरुक्तम् ।

वैवाहिकाग्नौ कुर्वीत गाहर्च कर्म यथाविधि ।
पञ्चयज्ञविधानञ्च पंक्ति चान्वाहिकीं गृही ।। इति ।

तद् विवाहसंबन्धादुत्तरकालमपि क्रियमाणो वैवाहिको भवत्येव । दायाद्यकाल एकेषाम् । एकेषामाचार्याणां मते दायाद्यकाले कर्त्तव्यम् । दायादकालश्च भ्रातॄणां धनविभागकालः, तस्मिन्हिकाले स्वेन द्रव्येण कर्मानुष्ठानसमर्थो भवति । साधारणद्रव्यस्य हि परित्यागसामर्थ्यादनधिकार एव, अतोऽयं व्यवस्थितविकल्पः । अभ्रातृकस्य दारकाले भ्रातृमतो दायाद्यकाल इति ।

१२८ । मुद्रितमनुस्मृतौ तु 'धर्मकारणात्' इति स्थाने धर्मकाम्यया इति पाठः ।

---

° प्यस्ति इति ख० पु० पाठः ।

एवं पतौ प्रवासस्थे लघुहारीतः—

अमावास्यादि नियतं प्रोषिते धर्मचारिणी ।
पतौ तु कारयेन्नित्यमन्येनाप्यृत्विगादिना ।।

द्रव्यासंपत्तौ पिण्डदानमात्रम् । तथा च यमः—

पिण्डमात्रं प्रदातव्यमभावे द्रव्यविप्रयोः ।
श्राद्धाहनि तु संप्राप्ते भवेन्निरशनोऽपि वा ।।

अयं च केवलपिण्डदानपक्षः साग्न्यनग्निसाधारणो विशेषोपादानादिति । सर्वश्राद्धकरणाशक्तौ देवलः—

अनेन विधिना श्राद्धं कुर्यात् संवत्सरं सकृत् ।
त्रिः सकृद् वा यथा श्राद्धं मासे मासे दिने दिने ।।

दिने दिने[१३०] इति नित्यश्राद्धम् । तथा हेमाद्रौ स्कन्दपुराणे—

आषाढ्या पञ्चमे पक्षे कन्यासंस्थे दिवाकरे ।
एकस्मिन्नप्यहोरात्रे तत्र श्राद्धं करोति यः ।।
तस्य संवत्सरं यावत् तृप्ताः स्युः पितरो ध्रुवम् ।।

---

१२९ । मुद्रित औशनसे दर्शे दर्शे इति स्थाने तीर्थे वेति इति पाठः । मुद्राप्रमादात् । किन्तु तीर्थेष्वेव इति पाठः समीचीनः ।

१३० । अनेन विधिनेति अपरपक्षोक्तविधिना । संवत्सरं सकृत् इति संवस्सरमध्ये एकस्मिन् अपरपक्षे । आश्विनकृष्णपक्षे एव "आषाढ़्या पंचमे पक्षे" इत्यादिवचनात् । वैशिष्ट्यं च तस्य

यत् किंचिन्मधुना मिश्रं प्रदद्यात्तु त्रयोदशीम् ।
तदप्यक्षय्यमेव स्याद् वर्षासु च मघासु च ।। मनुः ३।२७३

इत्यादि स्मृतेः । त्रिरिति—संवत्सरमध्ये अपरपक्षत्रये । सकृदिति आश्विनकृष्णपक्षे एकस्मिन् दिवसे । साग्नेरनावास्यायां, निरग्नेरमावास्यायामन्यस्मिन् वा दिवसे मासे मासे इति प्रतिमासममावास्यायाम्, दिने दिने इति प्रत्यहं पञ्चमहायज्ञांगभूतपितृयज्ञात्मकं श्राद्धं कुर्यादित्यन्वयः । अत्र मासे मासे दिने दिने इत्युभयत्र वीप्सायोगात् अमावास्याश्राद्धपितृयज्ञयो र्नित्यत्वं सिद्धम् ।

नित्यं सदा यावदायु र्न कदाचिदतिक्रामेत् ।
इत्युक्त्याऽतिक्रमे दोषश्रुतेरत्यागचोदनात् ।।
फलाश्रुतेर्वीप्सया च तन्नित्यमिति कीर्त्तितम् ।।

(कालमाधवे एकादशीप्रकरणे पृ० १८६) इति वचनात् ।।

मनुरपि (३।२८१)—अनेन विधिना श्राद्धं त्रिरब्दस्येह निर्वपेत् ।
हेमन्तग्रीष्मवर्षासु पञ्चयज्ञियमन्वहम् ॥[१३१]

मत्स्यपुराणेऽपि—अनेन विधिना श्राद्धं त्रिरब्दस्येह निर्वपेत् ।
कन्याकुम्भवृषस्थेऽर्के कृष्णपक्षेषु सर्वदा ॥

अत्र [१३२]सामान्यविधिररुपष्टः संह्रियेत विशेषतः ।

---

१३१ । मुद्रितमनुस्मृतौ तु पञ्चयज्ञियम् इति स्थाने पञ्चयज्ञिकम् इति पाठः ।

१३२ । सामान्यविधिरस्पष्टः संह्रियेत विशेषतः ।
स्यष्टस्य तु विधेर्नान्यैरुपसंहारसंभवः ॥ तन्त्रवार्त्तिकम् ३-४-४१

सेयं कारिका जैमिनीयस्य प्रकरणविशेषात्तु विकृतौ विरोधि स्यात् ३-६-९ इति सूत्रस्य तन्त्रवार्त्तिके कुमारिलश्रीचरणैरुट्टङ्किता । तत्रायं विषयो यत् प्रकृतौ 'पञ्चदश सामिधेनीरनुब्रूयात्' इति श्रुतमसित । अतिदेशेन प्रकृतिगता धर्मा विकृतिषु अतिदिश्यन्ते । अतः पञ्चदशसामिधेनीनां प्राप्तिस्तत्र भवति । किन्तु विकृतौ श्रुतमस्ति सप्तदशसामिधेनीरनुब्रूयात् इति । अत्रायं सिद्धान्तः यत् पन्दशवाक्यं प्रकृतौ सामान्यं साधारणं वा। सप्तदशवाक्यं विकृतौ विशेषम्। सामान्यधर्माणां संभूयानुष्ठातुमशक्यत्वात् विशेषेणानुष्ठानसंभवाच्च उपसंहारो भवति । अतः सप्तदशवाक्यानामुपसंहारो भवति, विधिः पञ्चदशवाक्ये अस्पष्टं सामान्यात् । तद्वत् प्रकरणेऽस्मिन् हेमन्तग्रीष्मवर्षासु प्राप्तानां श्राद्धानां कन्याकुम्भवृषवाक्ये विशेषेण उपस्थानपम् । सोऽयं विचारो जैमिनीयसूत्रस्य भाष्ये उक्तो यथा अनारभ्य किंचित् सामधेनीनां परिमाणमाम्नातं, सप्तदशसामधेनीरनुब्रूयात्, इति । तत्र सन्देहः । किमेतत् प्रकृतावुत विकृताविति । किं प्राप्तम् । पूर्वेण न्यायेन प्रकृताविति प्राप्तम् । प्रकृतौ च पाञ्चदश्यमाम्नातं, तेन विकल्प इति । एवं प्राप्ते ब्रूमः । विकृतावेवं जातीयको विधिः स्यात् । कस्मात् । प्रकृतेः पाञ्चदश्येन निराकांक्षत्वात् । ननु विकल्पो भविष्यतीत्युक्तम् । प्रकरणविशेषात् पाञ्चदश्येन न विकल्पः । विषमशासनात् । विकृतौ त्वानुमानिकं पाञ्चदश्यं बाधित्वाऽनारभ्यविधिवाक्येन प्रत्यक्षेण साप्तदश्यं निवेक्ष्यते । तद् चैतत्प्रयोगवचनमुपसंहरिष्यति । इति ।

जैमिनीयन्यायमालायां माधवाचार्या आहुर्यथा—

सामिधेनीः सप्तदश प्रकृतौ विकृतावुत ।
पूर्ववत् प्रकृतौ पाञ्चदश्येनैतद् विकल्प्यते ॥

इति[१३३]न्यायादाग्नेयं चतुर्धा करोति(आप श्रौ०सू० ३-३-२) इति वदुपसंहारात् कन्याकुम्भवृषस्थेऽर्के (मत्स्य पु०) श्राद्धं कर्त्तव्यम्। न तु केवलहेमन्तग्रीष्म-वर्षास्विति। एकश्राद्धकरणपक्षे पुनः कन्यासंस्थेऽर्केऽश्वयुक्कृष्णपक्षे कर्त्तव्यम्। एतेनाशक्तविषयं कन्यापरपक्षश्राद्धप्रकारचतुष्टयात्[१३४] पृथगेवेदं देवलस्कन्द-पुराणोक्तश्राद्धम्। एवम्

अश्वयुक् कृष्णपक्षे तु श्राद्धं कुर्याद्दिने दिने।
त्रिभागहीनं पक्षं वा त्रिभागं त्वर्धमेव वा॥

दिने दिने इति वीप्सया[१३५] पक्षश्राद्धमेकः पक्षः' त्रिभागहीनपक्षमिति पंचम्यादिपक्षः त्रिभागमिति दशम्यादिपक्षः, अर्द्धमित्यष्टम्यादिपक्षः, इति [१३७]कल्पतरुशम्भुकर-

---

विकृतौ साप्तदश्यं स्यात् प्रकृतौ प्रक्रियाबलात्।
पाञ्चदश्यावरु द्धत्वादाकांक्षाया निवृत्तितः॥ इति।

अत्र सिद्धान्तविस्तरो यथा—विकृतावेव साप्तदश्यं निविशते। प्रकृतौ पाञ्चदश्ये-नावरुद्धानां सामिधेनीनां सांख्यकांक्षाया अभावात्। न च पाञ्चदश्यसाप्तदश्य-वाक्ययोः समानबलत्वादविरोधाभाव इति शंकनीयम्। पाञ्चदश्ये प्रकरणानु-ग्रहस्याधिकत्वात्। तस्मात् मित्रविन्दाध्वरकल्पादि विकृतौ साप्तदश्यमवतिष्ठते। न चात्रपूर्वन्यायोऽस्ति। साप्तदशस्य चोदकप्राप्त्यभावेन पुनर्विधाने दोषाभावात्।

१३३। उपसंहारस्य उदाहरणं ददाति ग्रन्थकारः "आग्नेयं चतुर्धा करोति" (आप० श्रौ० सू० ३-३-२) इति। तत्र सामान्यविधि र्यथा "पुरोडाशं चतुर्धा करोति" (श० ब्रा० १।८।१।४०)। अत्राहुः चिन्नस्वामिशास्त्रिचरणाः' (त० सि० र०)—यथा उपसंहारो नाम सामान्यप्राप्तस्य विशेषेऽवस्थापनम्। यथा "पुरोडाशं चतुर्धा करोतीति पुरोडाशसामान्ये विहितस्य चतुर्धाकरणस्य' आग्नेयं चतुर्धा करोतीत्यनेनाऽऽग्नेये पुरोडाशमात्र एव नियमनं क्रियते। इति। एतद्वत् प्रकृतो श्राद्धेऽपि कन्या-कुम्भ-वृषस्थे रवौ श्राद्धं कर्त्तव्यम्।

१३४। श्राद्धस्य चतुष्प्रकारत्वमग्रे वक्ष्यते।

१३५। वीप्सा नित्यत्वं बोधयति।

१३६। द्रष्टव्यः श्राद्धकल्पतरुः पृ० १६-१७। दिने दिने प्रतिदिनं, सकल एव पक्ष इत्यर्थः। "त्रिभागहीनं" पञ्चमीमारभ्येत्यर्थः। त्रिभागं दशमी-मारभ्य। अर्धं पक्षस्याष्टमीमारभ्येत्यर्थः। तथा—

यावच्च कन्यातुलयोः क्रमादास्ते दिवाकरः।
तावच्छ्राद्धस्य कालः स्याच्छून्यं प्रेतपुरं तदा॥

**वाजपेयिचरणादिसम्मतिः। शूलपाणिमिश्रास्तु[१३७] (पृ० २१३-२१५) कृष्ण-पक्षस्य[१३८] पञ्चदशतिथ्यात्मकस्य विभज्यत्वात् दिने दिने इति विप्सया पक्षश्राद्धपक्षः। ततः पञ्चश्राद्धानि। एवं ह्रासवृद्धावेकस्मिन् दिने श्राद्ध-योग्यतिथिद्वयलाभे श्राद्धद्वयम्।**

---

"तावच्छ्राद्धस्य काल" इति, यस्य कस्माच्चिन्निमित्तात् कन्यागतापरपक्षे श्राद्धं न निष्पन्नम् तं प्रति यावत्तुलास्थः सविता तावन् श्राद्धकालो विहित इत्यर्थः।

१३७। मुद्रितशूलपाणौ (श्रा० वि० २१३-२१५) त्वयं पाठो यथा—"तथा च एकस्मिन् दिने श्राद्धयोग्यतिथिलाभे श्राद्धयम्। अहोरात्रवृद्धौ च न श्राद्धवृद्धिः। तथा च विष्णुधर्मोत्तरे प्रथमकाण्डम्—

तिथिनैकेन दिवसश्चान्द्रमासे प्रकीर्त्तितः।
अहोरात्रेण चैकेन सावनो दिवसः स्मृतः॥

त्रिभागहीनं पक्षं वेति षष्ठ्यादिकल्प उक्तः। त्रिभागमित्येकादश्यादिकल्प उक्तः। अर्धमेवेति त्रयोदश्यादिकल्प उक्तः। न त्वर्धमिति पक्षार्धव्याख्यानं कल्पतरोर्युक्तम् उत्तरोत्तरलघुकालोपदेशात् सन्निधानाच्च त्रिभागार्धप्रतीतेः त्रिभागहीन—त्रिभाग-पदयोरपि पञ्चम्यादिदशम्यादिविवेचनं कल्पतरुवत् युक्तमेव। पक्षापेक्षया पञ्चम्यादेस्त्रिभागहीनादिपदार्थत्वानुपपत्तेरमुख्यत्वात् गौनमोक्तपञ्चम्यादि-कल्पस्य सामान्योपक्रमस्य नाश्वयुक्परत्वम्। अतएव विष्णुधर्मोत्तरप्रथम काण्डम्—

उत्तरादयनाच्छ्राद्धे श्रेष्ठं स्याद्दक्षिणायनम्।
चातुर्मास्यां च तत्रापि प्रसुप्ते केशवे हितम्॥
प्रौष्ठपद्याः परः पक्षस्तत्रापि च विशेषतः।
पञ्चम्यूर्ध्वं च तत्रापि दशम्यूर्ध्वमतोऽप्यति॥
मघायुक्ता च तत्रापि शस्ता राजंस्त्रयोदशी।
तत्राक्षयं भवेच्छ्राद्धं मधुना पायसेन च॥
सर्वस्वेनापि कर्त्तव्यं श्राद्धमत्र नराधिप।
परान्नभोजी त्वपचः श्राद्धमत्र तु कारयेत्॥

पञ्चम्यूर्ध्वं दशम्यूर्ध्वमतोप्यतीत्यनेन षष्ठ्या एकादश्यादिकल्पावुक्तौ। इति।

१३८। शुलपाणिमते कन्यापरपक्षे पञ्चदशदिनान्यभिव्याप्य श्राद्धानि भवन्ति। अयं भवति मुख्यपक्षः। एतदशक्तौ षष्ठ्यादिपक्षः एकादश्यादि-पक्षश्च घटते, तदशक्तौ त्रयोदश्यादिपक्षश्च अमुख्यत्वेन। कृत्यकल्पतरुकार-

तिथिनैकेन दिवसश्चान्द्रमाने प्रकीर्त्तितः[१३९]

इति (१।७२।१६) विष्णुधर्मोत्तरवचनात् त्रिभागहीनादिवचनैः षष्ठ्याद्येकादश्यादिकल्पौ[०] उत्तरोत्तर लघुकल्पोपदेशात्,[००] सन्निधानाच्च त्रिभागार्धप्रतीतेः। लक्ष्मीधरव्याख्यानं तु पक्षत्रिभागहीनत्वाभावात् अमुख्यार्थत्वात् अनुपपन्नम्। अतएव विष्णुधर्मोत्तरे (१।१४२।२०)

पंचम्यूर्ध्वं[१४०] च तत्रापि दशम्यूर्ध्वमथापि[०००] च।

दिपक्षौ उक्तौ। आश्विने एकस्मिन् दिने श्राद्धमिति पक्ष एव नास्ति वचनाइति षष्ठ्येकादशाभावादित्याहुः। तदसंगतम्[१४१]। न तावत्[१४२] पंचदशश्राद्धानि।

---

लक्षीधरमतानुसारेण पञ्चम्यादिपक्षः दशम्यादिपक्षश्च खण्डितः। अर्धमिति कल्पतर्वादयः पक्षस्यार्धमामनन्ति। शूलपाणिस्तु त्रिभागस्यार्धमित्यनयो र्व्याख्याविरोधः।

१३९। सर्वर्क्षपरिवर्त्तैश्च नाक्षत्रो मास उच्यते।
तिथिनैकेन दिवसश्चान्द्रमाने प्रकीर्त्तितः।। १।७२।१६

१४०। प्रौष्ठपद्यपरं पक्षं तथापि च विशेषवत्।
पंचम्यूर्ध्वं च तत्रापि दशम्यूर्ध्वं ततोऽपि च।। तत्रैव—१।१४२।२०

१४१। तदसंगतमित्यादिना शूलपाणिमतं निरस्यति ग्रन्थकारः।

१४२। ग्रन्थकारः कल्पतरुकार-शम्भुकरादिमतं स्वसिद्धान्तत्वेन संस्थापयितुकामः परपक्षस्य शूलपाणिमतेन पञ्चदशश्राद्धपरिगणनां खण्डयति। कन्यापरपक्षस्य महालयश्राद्धत्वेन विहितत्वेऽपि तत्र चतुर्दश्यां न भवति तत्तिथेः शस्त्रहतपुरुषाणां कृते व्यवस्थापितत्वात्। प्रतिपत् इति योगीश्वरवचनेन निवारितस्य चतुर्दशीश्राद्धस्य अकर्त्तव्यत्वं मनुरपि प्राह।

कृष्णपक्षे दशम्यादौ वर्जयित्वा चतुर्दशीम्।
श्राद्धे प्रशस्तास्तिथयो यथैता न तथेपराः।। ३।२७६

अतश्चतुर्दशश्राद्धानि परिगणनया सिद्ध्यन्ति। तेषां त्रिभागकरणे दिनद्वयं शिष्यते। तेन च प्रतिभागं चत्वारि श्राद्धानि इति मन्तव्यं, किन्तु पञ्चम्यादि-

---

[०] त्रयोदश्यादिकल्पा इति ख पुस्तकपाठः।

[००] कालोप इति ख पुस्तकपाठः।

[०००] मतोऽपीति इति ख पुस्तकपाठः।

प्रतिपत् प्रभृतिष्वेकां वर्जयित्वा चतुर्दशीम् ।
शस्त्रेण नु हता ये वै तेभ्यस्तत्र प्रदीयते ।।

इति योगीश्वरवचनात्—(१।२६४)

युवानस्तु गृहे यस्य मृतास्तेषां प्रदापयेत् ।
चतुर्दश्यां क्रियाः कार्या अन्येषां तु विगर्हिता[१४३] ।।

इति स्मृत्यन्तराच्च। कन्यापरपक्षसाधारण्येन चतुर्दश्या निषिद्धत्वाच्चतुर्दश-श्राद्धव्यवस्थापनात् तस्य च भागत्रयकरणे भागाधिकदिनद्वयस्यान्तिमभागयोरेव ऐकादशिकान्[१४४] प्रायणीयोदयनीययोरालभ्येतेतिवन्निवेशात् कुतः षष्ठ्यादिपक्ष-प्राप्तिः।

---

दशम्यादि-अष्टम्यादिपक्षाणां सिद्धिर्भवत्येव। शिष्टं दिनद्वयमन्तिमभागे निविशते। अनेन शूलपाणिमतं निरस्तम्।

१४३। मार्कण्डेयवचनमेतादृशमेकं प्राप्यते—

युवानः पितरो यस्य मृताः शस्त्रेण वै हताः ।
तेन कार्यं चतुर्दश्यां तेषामृद्धिमभीप्सता ।।

१४४। चतुर्दशश्राद्धानां त्रिधाभागकरणेन शिष्टस्य दिनद्वयस्य अन्तिम-भागे निवेशो भवति यथा प्रायणीय—उदयनीययोः एकादशपशूनां विभागकरणेन शिष्टपशुरन्तिमदिने उदयनीये आलभ्यते। द्वादशाहे सत्रे श्रूयते—एकादशिकान् प्रायणीयोदयनीययोरतिरात्रयोरालभेरन् इति। सोऽयं विषयो जैमिनीयेषु तत्प्रकृतित्वात्। विहारप्रतिषेधाच्च। श्रुतितो वा लोकवद् विभागः स्यात्। विहारप्रकृतित्वाच्च। विशये च तदासत्तेः। त्रयस्तथेति चेत्। न समत्वात्, प्रयाजवत्।" (१०।६।६-१२) इति सूत्रेषु विचारितः।

तत्राहुर्भाष्यकाराः—इदमाम्नायते, एकादशिकान् प्रायणीयोदयनीययोरति-रात्रयोरालभेतेति। तत्र संशयः। किमेकादशप्रायणीये, पुनस्त एवैकादशोदय-नीये, आहोस्वित् केचित् पशवः प्रायणीये केचिदुदनीय इति, समानत्वान्निर्देशस्य, संशयः। तत्र सिद्धान्तभाष्यं यदा प्रायणीयोदयनीययोरितरेतरापेक्षयोरैका-दशिना विधीयंते, न सर्वेऽन्यतरस्मिन् केवले कर्त्तव्याः, तदपेक्षया कात्स्न्र्यं बाधितं भवति। तत्र यावद्भिरन्यतरत्र भवद्भिरवश्यं बाधितव्यं तावद्भिरनुज्ञातो बाधः। अतएव साम्येनैव विभागः प्रयाजानिव। यथा षडागन्तुकः प्रयाजाः प्रथमोत्तमयोर्विकारभूताः साम्येन विभज्य, अभ्यधिक उदयनीय आलप्स्यते, प्रत्यासत्तिमुखेनानुग्रहीष्यत इति।

**समत्वमागतस्यापि[१४५] पितुः शस्त्रहतस्य च ।**
**एकोद्दिष्टं सुतैः कार्यं चतुर्दश्यां महालये ।।**

**समत्वमागतस्य सपिण्डीकृतस्य । महालये भाद्रकृष्णचतुर्दश्याम् । शस्त्रहतस्यैव नान्यस्येवेति नियम्यते । न पुनः शस्त्रहतस्य चतुर्दश्यामेवेति । अतश्च क्षयाहादौ शस्त्रहतस्यापि यथाप्राप्तमेव श्राद्धम् । कन्यापरपक्षे शस्त्रहतस्यापि चतुर्दश्यामेकोद्दिष्टमेव । एवं विज्ञानगिरिलिखनात्[१४६] चतुर्दश्यां कुतः श्राद्धप्राप्तिः । यदि च पराशरमाधवीयव्याख्यानादरेण[१४७] पंचदशश्राद्धानि पक्षश्राद्धपदे तत्रापि त्रिभागहानादिपक्षे° तन्मध्येऽपि°° चतुर्दशीप्राप्ति र्नास्ति । यच्चैकस्मिन् दिने**

---

जैमिनीयन्यायमालायां माधवाचार्या यथा—

स्युरेकादशिनाः किं प्रायणीयोदयनीयोः ।
प्रत्येकमखिलाः किंवा विभज्याः स्युस्तयोरपि ।।
उद्देश्ययोः प्रधानत्वात् प्रत्येकं पशवोऽखिलाः ।
नोद्देश्यौ शतवद्भागः शिष्टस्त्वासत्तितोऽन्तिमे ।।

अत्र सिद्धान्ते विस्तरो यथा—वचनान्तरेण विहितानामेकादशानां प्रकरणेन द्वादशाहांगत्वे सिद्धे देशाकांक्षायां तान् पशूनुद्दिश्य प्रायणीयोदयनीयौ देशत्वेन विधीयेते । तत्र कुत उद्देश्यत्वम् कुतस्तरां प्राधान्यम्, कुतस्तमां पशवावृत्तिः । एवं साति यथा 'शतं देवदत्तयज्ञदत्तयोर्विधीयताम्' इत्यत्र देवदत्ते पंचाशद्-विधीयेते यज्ञदत्ते पंचाशत्' इति विभागः, तथा प्रायणीये पंच पशवः, उदयनीये पंच" इति विभागो युक्तः । इत्यवशिष्ट एकः पशुरन्तिमः स प्रत्यासन्नत्वादन्तिमे ह्युदयनीये कर्त्तव्य इति ।

१४५ । मुद्रितमिताक्षरायां च स्थाने वै इति पाठः, श्लोकान्ते इति स्मरणात् इति अधिकपाठः ।

१४६ । "प्रतिपत् प्रभृतिष्वेकां वर्जयित्वा" (१।२६४) इति योगीश्वर-वचनव्याख्याने मिताक्षरायां विज्ञानेश्वराचार्यैरेवमुक्तम् । विज्ञानेश्वराणां तु अयमाशयो यत् कृष्णचतुर्दश्यां श्राद्धं शस्त्रहतस्य भवति, अन्यस्य न भवति इति नियमः । न तु केवलं चतुर्दश्यां शस्त्रहतस्य, एवं सति मृताहश्राद्धं बाध्येत । अतः समेषां श्राद्धं चतुर्दश्यां भवतीति पक्षो नास्तीति मतं विज्ञानेश्वराभिप्राय-मुल्लिख्य सिद्धान्तितं ग्रन्थकृता । अत्र शस्त्रहतपदमुपलक्षकमिति अपरार्कः ।

---

° हीनादि इति ख पुस्तकपाठः ।

°° तन्मतेऽपि इति ख पुस्तकपाठः ।

श्राद्धद्वयमुक्तं तन्नैकः श्राद्धद्वयं कुर्यात् इति समानजातीयं प्रतिषिद्धमेव। यत्तु विष्णुधर्मोत्तरवचनं तत्स्कन्दपुराणीयवचनस्य

"एकस्मिन्नप्यहोरात्रे तत्र श्राद्धं करोति यः"

इत्यस्य प्रतिमासपार्वणकन्यापरपक्षविहितकल्पचतुष्टयाशक्तविषयस्य प्ररोचनार्थत्वात्[१४८] न पंचम्यादिविधानापरम्। दक्षिणायनादिति [१४९]उपांशुयाजवाक्या-

---

१४७। द्रष्टव्यः पराशरमाधवः अ० आ० क० पृ०—६६३-६६६। नभस्यकृष्णपक्षप्रतिपत्प्रभृतिदशपंचदिनानि कृत्स्नोऽपरपक्षः कन्यागते सति महालय इति प्रोक्तः। तत्र पार्वणेनैव विधिना श्राद्धं कुर्यात्.........तदाह कार्ष्णाजिनिः—

नभस्यस्यापरे पक्षे श्राद्धं कुर्याद् दिने दिने।
नैव नन्दादिवर्ज्यं स्यान्नैव वर्ज्या चतुर्दशी। इति।

नन्वेतत् "प्रतिपत्प्रभृतिष्वेकां वर्जयित्वा चतुर्दशीम्"

इति (१।२६४) योगीश्वरवचनेन विरुध्येत इति चेत्। न। तस्य वचनस्य पंचम्यादिपक्षविषयत्वेनोपपत्तेः। अन्यथा, कार्ष्णाजिनिवचनस्यानर्थक्यं प्रसज्येत। अतएव कात्यायनः अपरपक्षे श्राद्धं कुर्वीत ऊर्द्ध्वं चतुर्थ्या यदहः संपद्यते सप्तम्या ऊर्द्ध्वं यदहः संपद्यते ऋते चतुर्दशीं, शाकेनाप्यपरपक्षं नातिक्रामेत्। इति।

मनुरपि— कृष्णपक्षे दशम्यादौ वर्जयित्वा चतुर्दशीम्।
श्राद्धे प्रशस्तास्तिथयो यथैता न तथेतराः॥ इति ३।२७६

१४८। अशक्तावस्थायामपि कर्त्तव्यद्योतनाय पक्षोऽयमुपदिष्टः। प्ररोचनार्थत्वान्नाम विधित्वेनार्थवत्त्वात् इत्यर्थः। प्ररोचनां प्रेरणां विधिर्ददाति। तस्य फलद्योतनताभावेन अर्थवादस्तेन सह एकवाक्यतां वहन् कर्त्तारं प्रेरयति। उपांशुयागो दर्शपूर्णमासयोरंगयागः। तस्य किमपि फलं श्रुतं नास्ति। कर्त्तुः तदनुष्ठानाय प्रवृत्ति र्न भवेदिति मत्वा प्रवृत्तिप्रदानाय प्रशंसार्थवादेन प्रस्तुतमेकमधिकरणम्। तत्र उपांशुयागे देवतात्रयं श्रुतम्—विष्णुरुपांशु यष्टव्योऽजामित्वाय, प्रजापतिरुपांशु यष्टव्योऽजामित्वाय, अग्नीषोमावुपांशु यष्टव्यावजामित्वाय' इति। अनेन उपांशुयागोऽवश्यकर्त्तव्यत्वेन बोधितः। तद्वत् यस्यां कस्यां चित् अवस्थायां वर्त्तमानत्वेऽपि अपरपक्षश्राद्धं पूर्वोक्तभागमाश्रित्य कथंचित् कर्त्तव्यमिति सारः।

सोऽयमुपांशुयागगतार्थवादविषयो मीमांसायां (१०।८।१७) अधिकरणे स्पष्टः।

१४९। द्रष्टव्या पा० टी० १४८

दर्थवादोपक्रमात् । तत्र° एव चतुर्थ्या[१५०] ऊर्ध्वं यदहरिति (श्रा० सू० क०= पारस्करसूत्रम् )। अतएव तिथिह्रासात् त्रयोदशदिनपक्षे द्वादशश्राद्धान्येव दाक्षिणात्याः कुर्वन्ति । अतः कल्पतरुव्याख्यानस्य नामुख्यार्थत्वम् । यद्वा°° उत्तरोत्तरलघुकालोपदेशात् सन्निधानाच्च त्रयोदश्यादिपक्ष इति तदुपपन्नम् । वेदोपक्रमेण[१५१]उच्चैरुचाक्रियत इतिवत्°°° पक्षोपक्रमात् पक्षस्यैव विभज्यत्वात् अर्द्धभागोऽपि पक्षस्यैव । तत्रोपक्रमस्य श्रुत्यनुरोधेनासञ्जातबाधत्वेन[१५२] उपसंहारस्थश्रुतिबाध इह तु क्रममात्रस्य[१५३] पाठसादेश्यस्य दुर्बलस्य बाध इति ।

---

१५० । अपरपक्षे श्राद्धकुर्वीतोद्ध्वं वा चतुर्थ्या यदहः संपद्यते । इति पारस्करश्राद्धसूत्रस्य प्रथमकण्डिकाया सूत्रमेतत् पूर्वं सम्यक् प्रपंचितम् । ऊद्ध्वं वा चतुर्थ्या इति पंचम्यादिपक्षः सूत्रित इति भावः ।

१५१ । वेदोपक्रमो नाम वेदपाठारम्भः प्रतिवेदमुपक्रमो भिन्नः । स च वेदिभेदेन व्यवस्थापितः । ऋग्वेदस्य ऊच्चैरुचारितव्यत्वात् यजुर्वेदस्य च उपांशु पठितव्यत्वात् इतरयोरपि तन्मात्रविधाने विधातव्यत्वेन प्रतिवेदं पाठप्रक्रिया भिद्यते । समेषां कृते पृथक्तया एकः एकः पक्षो यथा प्रकृतौ अपरपक्षश्राद्धे पंचम्यादिपक्षाणां घटनासंम्भवः । . इति । वेदोपक्रमे यथा वेदभेदेन उपक्रमो भिन्नः, तथा अत्र पक्षस्य एव विभागो भवति ।

१५२ । असंजातविरोधित्वन्यायः (मी० को० भा० २, पृ० ७५३) लौकिकन्यायसाहस्रीधृतवचने स्पष्टः । यथा—न संजातः विरोधी यस्य, सोऽसंजातविरोधी, तस्य भावः प्राक्तनविरोधिशून्यत्वं, तस्य न्यायः रीतिः प्रबलत्वम् । यः किल आदौ पठ्यते, तस्य नाद्यापि कश्चित् विरोधी पदार्थोऽस्ति । पश्चात् पठितस्य तु पूर्वपठितो विरोधी स्यान्नाम । अतः पूर्वं पठितः पश्चात् पठितात् प्रबलो भवति । पृ० ८४६ ।

सोऽयं विषयः जैमिनीये "वेदो वा प्रायदर्शनात्" (६-३-२) इति सूत्रे विचारितः । अत्राहु र्भाष्यकाराः "उच्चैर्ऋचा क्रियते, उच्चैःसाम्ना, उपांशु यजुषा इति । ......... । वेदं वाऽधिकृत्येदमुच्यते । कुतः । प्रायदर्शनात् । किमिदं प्रायदर्शनादिति । वेदप्राये वाक्ये वेदोपक्रमे निगम्यमाना इमे शब्दाः श्रूयन्ते ।

---

° तत इति ख पुस्तकपाठः ।

°° यच्च इति ख पुस्तकपाठः ।

°°° "प्रजापति र्वरुणायमश्वमनयदित्युपक्रमात् दातुरिष्टिरितिवत्" इति ख०पु० अधिकः

प्रजापति र्वा इदमेक आसीत् । स तपोऽतप्यत । तस्मात्तपस्तेपानाश्रयो देवा असृज्यन्त । अग्नि र्वायुरादित्यश्च । ते तपोऽतप्यन्त । तेभ्यस्तेपानेभ्यस्त्रयो वेदा अस्रृज्यन्त । अग्नेर्ऋग्वेदो वायो र्यजुवेद आदित्यात् सामवेद इत्येवमुपक्रम्य निगमन इदं श्रूयते—उच्चैर्ऋचा क्रियते, उच्चैः साम्ना, यजुषा इति । एतस्मात् कारणादेभिः प्रकृतैरुपांश्वादि कर्त्तव्यं, न जात्या ऋगादिभिरित्युच्यते । कुत एतदवगम्यते । वाक्योपसंहारे श्रुतत्वात् । यस्मादित एते वेदा जातास्तस्मा-देतैरुपांश्वादि कर्त्तव्यमिति । ऋगादिभिरपि वेदवचनै रेवोपसंहारेण भवितव्यम् । इतरथा वाक्येनेव नावकल्पेत । तत्रानर्थका एव भवेयुः । इति ।

अत्राहुः कुमारिलक्षीचरणाः—"वेदप्राये वेदोपक्रमे वेदबुद्धिजनितसंस्कारव्याप्ते मनसि इमे शब्दाः श्रूयन्ते । तद्दर्शयतिप्रजापति र्वा इदमेक आसीत् । यत्तु विध्युद्देशबलीयस्त्वादर्थवादपदस्थो वेदशब्दोऽवयवविषयो भविष्यतीति । तत्र ब्रूमः—

विध्यर्थवादसंबद्धमन्यदेव बलाबलम् ।
मुख्यपश्चात्तनत्वेन ज्ञानानामन्यदेव तत् ।।

ये हि विध्युद्देशात् परस्तादर्थवादाः श्रूयन्ते तेषामस्ति दौर्बल्यम् । ये पुरस्तात् श्रूयन्ते ते मुख्यत्वाद् बलीयांसो भवन्ति । इति ।

जमिनीयन्यायमालायां माधवाचार्या अपि—

कर्त्तव्यमुच्चै सामर्ग्भ्यामुपांशु यजुषेत्यमी ।
मन्त्राणां वाथ वेदानां धर्मा मन्त्रगता मताः ।।
विध्युद्देशे मन्त्रवाचिशब्दाः प्रोक्ता ऋगादयः ।
ऋग्वेदोऽग्नेः समुत्पन्नः इत्युपक्रमवेदगीः ।।
असंजातविरोधातस्तदवंशादुपसंहृतैः ।
नयने सति वाक्येन धर्माणां वेदगामिना ।।

अत्र सिद्धान्तविस्तरो यथा—लब्धात्मनो हि विध्युद्देशस्य प्राबल्यम् । इह तु प्रथमतो बुद्ध्युत्पादक उपक्रमः । तदानीमलब्धात्मत्वान्न तस्य बाधकत्वम् । पश्चात्तु वाक्यैकत्वाय तदविरोधेनैवात्मानं लप्स्यते । तदेवमुपक्रमोपसंहारैक-वाक्यताबलेन निर्णयाद् वाक्यविनियोगः । इति ।

१५३ । अर्धशब्दस्य त्रिभागशब्देन सहान्वयः पाठक्रमस्य विषयः । किन्तु अर्थशब्दस्य पक्षशब्देन सह अन्वयः अर्थक्रमस्य विषयः । अनयोर्विरोधे "पाठक्रमा-दर्थक्रमो बलीयान्" इति पक्षस्यार्द्धम् अष्टम्यादिपक्षः सिद्ध्यति न तु पाठक्रमा-श्रितस्त्रयोदश्यादिपक्ष इति सारः । सिद्धान्तोऽयं वाक्यविनियोगस्य । द्रष्टव्यं मीमांसाधिकरणम्—३-३-१

न च एका[१५४] देया, षड् देयाः, द्वादश देयाः, चतुर्विंशति देयाः, शतं देयं, सहस्रं देयम्, अपरिमितं देयम् ।

आपेक्षिको हि बह्वर्थः सहस्रापेक्षया भवेत् ।
तस्यानन्तरनिर्देशात् सहस्रादधिकस्ततः ।।

इति न्यायादनन्तरनिर्दिष्टभागस्यैवार्धप्राप्तिरिति वाच्यम् । सर्वत्र पक्षपदानुषङ्गं विनाऽनन्वयात् पक्षस्यैवानन्तरनिर्दिष्टत्वात्[१५५] बहुत्वस्य संख्यात्वेन संनिहित-संख्यापेक्षया संख्यान्तरबाधत्वौचित्यात् । न चैकादिसंख्यानां वृद्धिपरिवृत्तिरस्ति । अर्धत्वे पुनः पक्षस्य त्रिभागस्य च अर्धत्वान्वयौचित्यादुपक्रमानुरोधात् विभागा-

---

१५४। वाक्यमिदमाधाने श्रूयते। स्फुटसंख्यादृष्ट्या एकसंख्यामारभ्य सहस्रसंख्यापर्यन्तं भवति परिगणना। अपरिमितशब्दस्य अस्फुटसंख्यात्वेनोक्तात् कस्यापेक्षायामिति जिज्ञासायां सर्वाधिकसंख्यायाः अपेक्षा तत्रागच्छति। सहस्र-संख्यायाः प्राक्प्रदर्शितसर्वाधिकावृत्तौ वर्त्तमानत्वात् तदनन्तरं नाम सहस्रेभ्योऽ-नन्तरमपरिमितशब्देन अवगम्यते। तदर्थेयम् 'आपेक्षिको ·· ततः' इति कारिका निष्पत्तिं दर्शयति। सैयं कारिका शास्त्रदीपिकायां (६-६-११) पार्थसारथिमिश्रेण उट्टंकिता। प्रकृतौ तु अर्धपदस्य तद्वत् पक्षस्येति निश्चीयते। (द्र० पा० टी० १५५)। तदिदमधिकरणं जैमिनीयस्य अनियमो विशेषात्। अधिकं वा स्याद् बह्वर्थत्वादितरेषां संनिधानात्। अर्थवादश्च तद्वत्' (६-७-३३।२५) इति सूत्रत्रितयस्य गोचरम्। तत्रादुर्भाष्यकाराः—बह्वर्थत्वादपरिमितशब्दस्य। बहुषु हीमं शब्दमुपभरन्तीत्येतदुक्तम्। बहुत्वं चाऽपेक्षिकं, किंचिदपेक्ष्यं ततोऽधिकं बह्वीत्युच्यते। असत्यामपेक्षायामपरिपूर्णमेतत्। यथा पुत्र इति किंचिदपेक्ष्य भवति नान्यथा। तत्र प्रकृतं संनिहितं, चापेक्ष्य निर्णयः सहस्रंच संनिहितम्। तस्मात्ततोऽधिकमपरिमितमिति। जैमिनीयन्यायमालायां माधवाचार्या अपि—

अर्वागपि बहुत्वं तत् सहस्रादूर्ध्वमेव वा ।
संभवादग्रिमोऽन्त्यः स्यात् सहस्रानन्तरोक्तितः ।।

अत्र सिद्धान्तविस्तरो यथा—एकादिपक्षेषुत्तरोत्तराभिवृद्धिदर्शनेनात्रापि सहस्रपक्ष-मुपन्यस्य पश्चादभिधीयमानं बहुत्वं सहस्रादूर्ध्वं पर्यवस्यति।

१५५। त्रिभागस्य अनन्तरनिर्दिष्टत्वेन अर्धपदस्य तेनैव सहान्वयो विधेय इति पूर्वपक्षो न बलीयान्। पक्षशब्दस्यापि अनन्तरनिर्दिष्टत्वात्। पक्षस्य त्रिभागमिति पक्षशब्देन सह त्रिभागशब्दस्यान्वये क्रियमाणे त्रिभागशब्दवत् पक्ष-शब्दोऽपि अर्थपदस्य अनन्तरनिर्दिष्टं सुतरां भवतीति मन्तव्यम्।

न्वयेऽपि मासादिव्यवच्छेदाय पक्षत्रिभागान्वयेन पक्षोपस्थितेः पक्षस्यैव सन्निधानमिति विशेषः। किं चार्धशब्दस्यात्र संख्याशब्दत्वेन त्रिभागशेषसामानाधिकरण्यानुपपत्ते स्त्रिभागस्येति विभक्तिविपरिणामो वाच्यः। स च पूर्ववाक्यद्वये पक्षे पक्षमिति पक्षशब्दस्यैव दृष्टत्वेन तस्यैवार्धमत्रापि परिणामेन अन्वय उचितः। न तु त्रिभागशब्दार्थस्य परिणामः उचितः। यथा तरसमया[१५६]धिकरणे प्रकृतौ लाक्षणिकस्यैव पुरोडाशशब्दस्य तरसमयाः पुरोडाशा भवन्ति अत्र लक्षणाददृष्टत्वात्। न तु सवनीयैशब्दस्य अत्र दीक्षाक्रमविधानके वाक्येऽर्धतृतीयपादसंख्यानामर्हत्विग्दक्षिणापक्षीयैर्वार्धित्वं[१५७] पादित्वं तत्त्वधर्पिक्षया सन्निधानात्तृतीयित्वं तृतीयत्वापेक्षया वा पादित्वमिति।

आभ्युदयिकविचारः[१५८]

[१५९]स्वपितृभ्यः पिता दद्यात् सुतसंस्कारकर्मसु।
पिण्डानोद्वहनात्तेषां तस्याभावेऽपि तत्क्रमात्॥

अत्र कन्या[१६०]पुत्रविवाहेषु प्रवेशे नववेश्मनः। इति (३।१३।५) विष्णुपुराणवचनात् आङो[१६१]ऽभिविध्यर्थता। सुतसंस्कारकर्मस्विति वचनात् संस्काररूप-

---

१५६। तरसमयाधिकरणं पूर्वमुक्तं तत्र द्रष्टव्यम्।

१५७। सर्वेषामर्धिनो मुख्यास्तदर्धे नार्धिनोऽपरे।
तृतीयिनस्तृतीयांशाश्चतुर्थांशाश्च पादिनः॥ मनुः ८।२१०

अत्र यथा अर्धिपदेन सह अर्धतृतीयांशचतुर्थांशपदानामनन्तरोक्तानामन्वयः, न पुनः क्रमशः अर्धिपदेन अर्धपदस्य ततः द्वितीयार्धपदेन तृतीयांशपदस्य तेन च सह चतुर्थांशपदस्य अन्वयो भवति। तद्वदत्र प्रथमपठितेन पक्षपदेन सह त्रिभागहीनत्रिभागार्धपदानामनन्तरोक्तानामन्वयः समीचीन इति सदृष्टान्तं समाधानम्।

१५८। अभ्युदय उन्नति वृद्धि र्वा।

१५९। कात्यायनः १८।२९

१६०। कन्यापुत्रविवाहेषु प्रवेशे नववेश्मनः।
नामकर्मणि बालानां चूडाकर्मादिके तथा॥
सीमन्तोन्नयने चैव पुत्रादिमुखदर्शने।
नान्दीमुखं पितृगणं पूजयेत् प्रयतो गृही॥ विष्णु० पु० ३।१३।५-६

१६१। कात्यायनवचने आ उद्वाहनात् विवाहपर्यन्तमिति श्राद्धकल्पतरौ (पृ०—३१) लक्ष्मीधरः। उद्वाहः पुत्रगतसंस्कारः। कन्यागतः संस्कारः

प्रथमविवाह एव पुत्रस्य पिता कुर्यात् । द्वितीयादिविवाहे तु जीवत्यपि पितरि पुत्रः स्वपितृभ्यो दद्यादित्यनन्तभट्टाः । तथा विष्णुपुराणे (३।१०।४)—

जातस्य जातकर्मादिक्रियाकाण्डमशेषतः ।
पुत्रस्य कुर्वीत पिता श्राद्धं चाभ्युदयात्मकम् ।।

स्वशब्दः सुतमातामहादिव्यवच्छेदार्थः । तस्य पितुरभावे तत्क्रमात् संस्कार्यपुत्रदुहित्रादिक्रमात् । संस्कार्यस्य पितृमातामहादिभ्य दद्यादित्यर्थः । अतएव

भ्राता वा भ्रातृपुत्रो वा सपिण्डः शिष्य एव वा ।
सहपिण्डक्रियां[१६२] कृत्वा कुर्यादाभ्युदयं ततः ।

इति वचनात् भ्रातुः कन्या[१६३]प्रदत्वे सावित्रीप्रदत्वे वा विवाहोपनयनाद्यर्थं संस्कार्यं कन्यापुत्रादिपितृमातृसपिण्डीकरणं कृत्वा संस्कार्यपित्रादिभ्यो दद्यादाभ्युदयिकश्राद्धमिति लभ्यते ।

इदं च पुत्रजननादिनिमित्ते रात्रावपि कर्त्तव्यं [१६४]नैमित्तिकत्वात् । एवं च ग्रहणनिमित्तकर्मणि । यथा विष्णुः (७७।८)—

---

विवाहः । उद्वाहनात् नाम पुत्रोद्वाहपर्यन्तम् । अत्र उदुपसर्गपूर्वकवहधातोः आङ् । आंमर्यादाभिविध्योः (२।१।१३) इति पाणिनिसूत्रात् । "एतयोराङ्पंचम्यन्तेन वा समस्यतेऽसौ ऽव्ययीभावः" इति वृत्तेश्च पंचम्यन्तपदेन आङ् संपर्कः । स च प्रकृतौ उद्वाहनात् इति पदेन घटितः । फणीश्वरोऽप्येवमाह—मर्यादाभिविधिग्रहणं शक्यमकर्त्तुम् । कथम् । पंचम्यन्तेनेति आङा च कर्मप्रवचनीययुक्ते पंचमी विधीयते तयोश्चैवार्थयोराङकर्मप्रवचनीयसंज्ञो भवति नान्यत्र । इति मर्यादाभिविध्योरयं भेदो यत् तद्रहिता मर्यादा तत्सहितोऽभिविधिः । प्रकृतौ अभिविधिर्विवक्षितः । सच तत्सहिततावच्छेदेन उद्वाहनं गृहीत्वेत्यर्थः ।

१६२ । सहपिण्डक्रियां नाम सपिण्डीकरणक्रियाम् इत्यर्थः ।

१६३ । कन्याप्रदत्वेन भ्रातरं जग्राह योगीश्वरः (१।६३)
पिता पितामहो भ्राता सकुल्यो जननी तथा ।
कन्याप्रदः पूर्वनाशे प्रकृतिस्थः परः परः ।। इति ।

१६४ । एतस्य श्राद्धस्य नैमित्तिकत्वमुक्तं मार्कण्डेयपुराणे—
नैमित्तिकमतो वक्ष्ये श्राद्धमभ्युदयात्मकम् ।
पुत्रजंन्मनि तत्कार्यं जातकर्मसमं नरैः ।।

[१६५]सन्ध्यारात्र्योर्न कर्त्तव्यं श्राद्धं खलु विचक्षणैः ।
तयोरपि हि कर्त्तव्यं यदि स्याद्राहुदर्शनम् ॥

यमः— स्नानं दानं तपः श्राद्धमनन्तं राहुदर्शने ।
आसुरी रात्रिरन्यत्र तस्मात्तां परिवर्जयेत् ॥ इति ।

भविष्यपुराणे सुमन्तुः—
रात्रौ स्नानं न कुर्वीत दानं चैव विशेषतः ।
नैमित्तिकं तु कर्त्तव्य स्नानं दानं च रात्रिषु ॥
यज्ञे विवाहे यात्रायां तथा पुस्तकवाचने ।
दानान्येतानि शस्तानि निशि देवालये तथा ॥
ग्रहणोद्वाहनसंक्रान्तियात्रार्त्तिप्रसवेषु च ।
श्रवणे चेतिहासस्य रात्रौ दानं प्रशस्यते ॥

केवलं[१६६] जातकर्मणि बालानां चूडाकर्मादिके तथा ॥ इति विधानात् ।
न[१६७]सोष्यन्ती जातकर्म प्रोषितागमकर्मसु ।

इति प्रतिषेधाच्च विधेः सहिरण्यतिलश्राद्धपरत्वान्निषेधस्य [१६८]पक्वान्नश्राद्धपरत्वात् पक्वान्नेन न कार्यम् । अतएव ब्रह्मपुराणम्—
जातश्राद्धे न दद्यात्तु पक्वान्नं ब्राह्मणेष्वपि ॥

---

अत्र व्याख्याने नीलकण्ठ आह श्राद्धमयूखे (पृ०—१४६)—नैमित्तिकजातकर्मपदाभ्यां पुत्रजन्मनिमित्तकमेव श्राद्धं न तु जातकर्मांगमित्युच्यते । इति ।

१६५। सन्ध्यायां रात्रौ वा यदि सूर्याचन्द्रमसोर्ग्रहणं भवति तन्निमित्तं श्राद्धं भवत्येव । राहुदर्शनं पुत्रजन्मनोऽप्युपलक्षणम् । इति केशववैजयन्त्यां नन्दपण्डितः विष्णुस्मृतौ (७७।८) ।

१६६। केवलमित्यादिना बाधितरात्रिकालिककर्मणां जातकर्मणि प्रतिप्रसवः । प्रतिप्रसवो नाम त्यक्तस्य पुनरभ्यनुज्ञानमिति ।

१६७। संपूर्णश्लोको यथा—
नाष्टकासु भवेच्छ्राद्धं न श्राद्धे श्राद्धमिष्यते ।
न सोष्यन्तीजातकर्मप्रोषितागतकर्मसु ॥
इति कर्मप्रदीपस्थवचनमिति श्राद्धमयूखपाठः (पृ०—१४६) । सुखप्रसवार्थं सोष्यन्तीकर्म । प्रोषितागते च पुत्रे पितुः कर्म छन्दोगसूत्रे प्रसिद्धम् इति तत्रैव ।

१६८। तण्डुलस्य यवस्य वा विक्लित्यादिना पक्वधर्मताप्राप्तौ अन्नत्वम् । तद्वदत्र उच्यते इत्यर्थः, तथाहि—

इति निषेध इति। हारीतस्तु तिलपात्रात्मकं दानं श्राद्धं विदधातीति राहुदर्शनेऽपि भोजननिषेधादामश्राद्धं हिरण्यश्राद्धं वा। एवं रात्रौ विवाहे संक्रान्तौ च रात्रौ श्राद्धं कर्त्तव्यमिति शूलपाणिः[१६९]। तदसङ्गतम्[१७०]। भविष्यत्युद्वाहसंक्रान्त्युपलक्षितदिवसस्य च निमित्तत्वात् रात्रिप्रसङ्गाभावात् "प्रातः[१७१]र्वृद्धिनिमित्तकम्" इति कालविधानात्। पार्वणस्य च (वायु० पु०)

[१७२]आरम्य[१७३] कुतपे श्राद्धं [१७४]रोहिणं तु न लंघयेत्।

---

सस्यं क्षेत्रगतं प्राहुः सतुषं धान्यमुच्यते।
आमान्नं वितुषं ज्ञेयं पक्वमन्नमुदाहृतम्॥

इति रुद्रधरीय—श्राद्धविवेकटिप्पण्याम् (पृ०—७)। कालसारे तु वितुषमाममित्याहुरिति भेदः।

१६९। द्रष्टव्यः शूलपाणिकृतश्राद्धविवेकः पृ०—२५७-२५८

जातश्राद्धे न दद्यात्तु पक्वान्नं ब्राह्मणेष्वपीति।

अत्रापि तदहरिति संबन्धात् पक्वान्ननिषेधानुपपत्तेश्च। तथा विष्णुधर्मोत्तरे—

अच्छिन्ननाड्यां कर्त्तव्यं श्राद्धं वै पुत्रजन्मनि।
अशौचापगमे कार्यमथवापि नराधिप॥

न चास्य पूर्वपक्षोत्तरभावेन व्यवस्था पूर्वार्धवैयर्थ्यापत्तेः। सार्थकत्वे संभवति वैयर्थ्यस्यान्याय्यत्वात्। तस्माद् विकल्प एव शक्ताशक्तभेदेन युक्तः। तावत्कालं स्तन्यादाने पुत्रनाशप्रङ्गात् सांगवृद्धिश्राद्धं कर्त्तुं न शक्यते इति चेत् न, किञ्चिदङ्गविकल्पमेव भविष्यति। नित्ये हि किञ्चिदङ्गहानि न काम्ये अभ्युदयश्राद्धे युक्ता इति चेन्न विशेषवचनाद् भविष्यति, को विरोधः। अतः सिद्धं रात्रौ वृद्धिश्राद्धमिति।" अत्र विशेषवचनादिति अच्छिन्ननाड्यां कर्त्तव्यमिति विशेषवचनादित्यर्थः। नाडीछेदात् प्राक् साङ्गप्रधानाचरणे तावत् पर्यन्तं स्तन्यादाने पुत्रनाशप्रसङ्गादेव तथाकल्पादिति भावः। अतः इति पुत्रोत्पत्त्यादिनिमित्तं श्राद्धं रात्रावपि सिद्धमित्यर्थः। इति तट्टीकायां श्रीकृष्णतर्कालंकारः।

१७०। तदसङ्गतमिति शूलपाणिमतं दूषयति ग्रन्थकारः।

१७१। पूर्वाह्णे मातृकं श्राद्धमपराह्णे तु पैतृकम्।
एकोद्दिष्टं तु मध्याह्ने प्रातर्वृद्धिनिमित्तकम्। ब्रह्मपुराणम्

१७२। तोलयन्तु वायुपुराणवचनेन सह—
शुक्लपक्षस्य पूर्वार्द्धे श्राद्धं कुर्याद् विचक्षणः।
कृष्णपक्षापराह्णे तु रौहिणं तु लङ्घयेत्॥

इत्यपराह्णकालत्वात्[१७५]। अत एवावृत्तिमुखयो र्वा" इति सूत्रे आवृत्ति मुखं प्रथममहरिति कार्काकार्याः। वस्तुतस्तु

अहः संक्रमणे पुण्यमहः कृत्स्नं प्रकीर्त्तितम्।
रात्रौ संक्रमणे पुण्यं दिनार्धं स्नानदानयोः॥

इति वचनात्[१७६] श्राद्धस्य दानस्य च पूर्वं निर्णीतत्वात् दानवद्दिवसे एव श्राद्धं कर्त्तव्यम्। एवं मृताहाज्ञाने प्रचेताः—

"अविज्ञाते मृतेऽमावास्यायां श्रवणदिवसे वा"।

मृतशब्दोऽत्र मृताहपरः। श्रवणदिनमवधारणदिनोपलक्ष[०]कम्। स्मृतिः

गतस्य[००] न भवेद् वार्त्ता यस्य द्वादशवार्षिकी।
प्रेतावधारणं तस्य कर्त्तव्यं सुतबान्धवैः॥

---

१७३। कुतपलक्षणं यथा—मत्स्यपुराणे रुद्रधरकृतश्राद्धविवेकधृतवचनात्

अह्नो मूहूर्त्ता विख्याता दश पञ्च च सर्वदा।
तत्राष्टमो मूहूर्त्तो यः स कालः कुतपः स्मृतः॥

१७४। पञ्चदशधाविभक्तस्य दिवसस्य नवमो मुहूर्त्तः रोहिणीनामकः। तदुक्तं शङ्खेन—(कालमाधवः पृ०—८८)

रौद्रश्चैत्रश्च मैत्रश्च तथा शालकटः स्मृतः।
सावित्रश्च जयन्तश्च गान्धर्वः कुतपस्तथा॥
रोहिणश्च विरिञ्चश्च विजयो नैरृतस्तथा।
महेन्द्रो वरुणश्चैव भेदाः पञ्चदश स्मृताः॥

१७५। अपराह्णलक्षणं यथा—

प्रातः कालो मुहूर्त्तांस्त्रीन् सङ्गवस्तावदेव तु।
मध्याह्नस्त्रिमुहूर्त्तः स्यादपराह्णस्ततः परम्॥ इति श्रा० वि०

रुद्रधर घृतमत्स्य पु० वचनम्।

१७६। निर्णयसिन्धौ वृद्धवसिष्ठवचनत्वेनास्य पाठोऽस्ति। तद्यथा—

अह्नि संक्रमणे कृत्स्नमहः पुण्यं प्रकीर्त्तितम्।
रात्रौ संक्रमणे भानोर्दिनार्धं स्नानदानयोः॥
अर्धरात्रादधस्तस्मिन् मध्याह्नस्योपरि क्रिया।
ऊर्ध्वं संक्रमणे चोर्ध्वमुदयात् प्रहरद्वयम्॥

---

० लक्षितम् इति ख० पु०।
०० मृतस्य इति ख० पु०।

तत्र मृताहो गमनदिवस एव । लघुहारीतः—

श्राद्धविघ्ने समुत्पन्नें मृताहेऽविदिते तथा ।
एकादश्यां प्रकुर्वीत कृष्णपक्षे विशेषतः ।।

अत्र द्रव्याद्यसंपत्तिकृते विघ्ने एकोद्दिष्टे सपिण्डीकरणे च एकादश्यामेव मृताहसन्निधानादिति शूलपाणिः[१७७] । तदसंगतम्[१७८] । गालवबचनविरोधात् ।

सपिण्डीकरणश्राद्धमुक्तकाले न चेत् कृतम् ।
रौद्रहस्ते च रोहिण्यां मैत्रभे वा समाचरेत् ।।
अशौचान्ते भवेद्राज्ञां वैश्यानां च सपिण्डनम् ।
शूद्राणां द्वादशेऽह्न्येव कर्त्ता तत्कालतः शुचिः ।।

इति । अतो मृताहाज्ञाने मृताहैकोद्दिष्टश्राद्धविघ्ने च कृष्णपक्षैकादश्यामिति योज्यम् । अशौचकृतविघ्ने विशेषमाह ऋष्यशृंगः ।

देये पितॄणां श्राद्धे तु अशौचं जायते यदि ।
तदाशौचे व्यतीते तु तेषां श्राद्धं प्रदीयते ।।
शुचीभूतेन दातव्यं या तिथिः प्रतिपद्यते ।
सा तिथिस्तस्य कर्त्तव्या न त्वन्या वै कदाचन ।।

देये अवश्य देये मासिकवार्षिकादौ । अशौचविघ्ने शौचान्ततिथावेव देयम् । न तु द्रव्यासंपत्तिविघ्न इव[0] कृष्णैकादश्यामिति "न त्वन्या वै कदाचने"ति वचनात् इति श्राद्धप्रदीपे बाधाश्युच्चयालोकः ।

—०—

---

पूर्णे चेदर्धरात्रे तु यदा संक्रमते रविः ।
प्राहुर्दिनद्वयं पुण्यं मुक्त्वा मकरकर्कटौ ।। इति ।

१७७ । अत्र शूलपाणेरयमाशयो यत् मृताहाज्ञाने कृष्णपक्षैकादश्यां श्राद्धं भवत्येव । तत्र नास्ति सन्देहः । "श्राद्धविघ्ने समुत्पन्ने" इति हारीतवचनेन यस्य कस्यचन विघ्नोत्पादकस्य सत्त्वेन अनिवृत्तश्राद्धस्य एकादश्यामेव करणीयमिति । अधिकन्तु द्रष्टव्यः शूलपाणिकृतः श्राद्धविवेकः ।

१७८ । तदसङ्गतमित्यादिना शूलपाणिमतं दूषयति ग्रन्थकारः ।

१७९ । अत्रायमाशयो ग्रन्थकर्त्तुर्यत्—न हि लघुहारीतवचनेन सर्वानाचरित । श्राद्धानां कर्त्तव्यकालः कृष्णपक्षैकादशी । यतो गालववचनेन सपिण्डी-

[0] एव इति क० पु० पुस्तकपाठः ।

करणस्य विघ्ने रौद्रहस्तादिशुभनक्षत्रे तत्संपादनं स्फुटं प्रतीतम्, अशौचान्ते राजविट्शूद्राणां वर्णानां क्रमेण विशेषतया व्यवस्थासत्त्वाच्च लघुहारीतवचनं सामान्येन ग्रहीतुं न शक्यते। अत्रेदमनुमीयते लघुहारीतवचनं सामान्यं, गालवचनं विशेषः। अतः केवलं मृताहाज्ञानजनितानाचरितश्राद्धसंपादनकालः कृष्णपक्षैकादश्येव। अशौचजनितश्राद्धविघ्नतया तत्संपाद्यकालस्य ऋष्यशृङ्ग-वचनेन प्रबलप्रमाणोपष्टम्भकतयोपन्यस्तत्वात् शूलपाणिमतं दूषितम्। इति

इति विप्रमिश्रकृतश्राद्धप्रदीपे बाधाभ्युच्चयालोके श्रीव्रजकिशोरस्वाईकृता रश्मि-टिप्पणी समाप्ता ॥

—०—

# तन्त्रालोकः

यथा गुरूपदेशेन कर्मसंशयमुलभित् ।
क्रियते श्राद्धदीपस्य [1]तन्त्रालोकः सुनिर्मलः ।।

तत्रानेकोद्देश्येन एकमनुष्ठानं तन्त्रमित्यं[2]गतन्त्रतालक्षणम् । एकोद्देश्येनैक-

---

१ । पूर्वस्मिन् आलोके बाधाभ्युच्चयं विविच्य एतस्मिन्नालोके तन्त्रविषयं विविनक्ति ग्रन्थकारः । प्रयोगविधौ अङ्गप्रधानयोरनुष्ठानविषये सोऽयं विषय आगच्छति । मीमांसादर्शनस्य एकादशाध्याये तन्त्रशब्दस्य व्याख्या यथा—तन्यते विस्तार्यते बहूनामुपकारो येन सकृत्प्रवर्त्तनेन, तदिदम् (जै० न्या० वि० ११।१।११) । तन्त्ररत्ने (१२।२।७।२४) यथा—तन्त्रं तत्र, यत्र सकृत् कृतं सवेषामुपकरोति । यत्र तु अन्यार्थेन अङ्गेन अन्यस्योपकारः तत्र प्रसङ्गः इति । जैमिनीयस्य प्रयोजनाभिसंबन्धात् पृथक्सतां ततः स्यादेककर्म्यमेक-शब्दाभिसंयोगात्" (१२।१।१) इति सूत्रस्य भाष्ये शबरस्वामिभिरुक्तम्—

साधारणं भवेत्तन्त्रं परार्थे त्वप्रयोजकः ।
एवमेव प्रसङ्गः स्याद् विद्यमाने स्वके विधौ । इति ।

एतस्य व्याख्यानमपि तैरेव कृतं यथा—"साधारणं भवेत्तन्त्रमित्युक्तार्थम् । परार्थे त्वप्रयोजक इति । यः परार्थमुत्पन्नस्तदर्थमेव चानुष्ठीयमानः परस्योप-करोति, स परस्तस्याप्रयोजकः ।

कुमारिलश्रीचरणास्तु स्वमतं प्रकाशयन्ति इत्थम् । (१२।१।१)-यथा—दशमे चोदकप्राप्तानां प्रत्यक्षविहितानां च पदार्थानामियत्ता चिन्तिता । इह त्वेकादशे, इयत्ताविशेषश्चिन्त्यते । यत्र त्रयो यागाः श्रूयन्ते तत्र, सेयमियत्ता किं तन्त्रेणोतावृत्त्येति ।............ यदि समुदितानामेकं फलं ततस्तन्त्रावापचिन्ता घटते । अथैकैकस्य फलं ततस्तन्त्रं नास्त्येव । इति । एतावता सिद्धं यत् देशकालकर्त्त्रैक्ये बहूनां कर्मणां सकृत् अनुष्ठानं तन्त्रमिति ।

२ । विनियोगविधौ प्रकृतिगतानां विकृतौ अतिदिष्टानां धर्माणाम् अथवा स्वयं प्राकृतिकानामंगानां यदाऽनेकमुद्दिश्य लक्ष्यीकृत्य अनुष्ठानं क्रियते तदा अङ्गानां तन्त्रतासिद्धौ अङ्गतन्त्रता सिद्ध्यतीति ग्रन्थकृदाशयः । त्रिविधतन्त्रतासु इयं ग्रन्थकृत्प्रक्रमेण प्रथमा तन्त्रता । उदाहरणमग्रे वक्ष्यते ।

मनुष्ठानं तन्त्रमिति प्रधानतन्त्रफलतालक्षणम्[३]। अनेकोद्देश्येन एकधानुष्ठानं तन्त्रमि[४]त्यनुष्ठानतन्त्रतालक्षणम्। साधारणं भवेत्तन्त्रमिति सामान्यलक्षणम्[५]। फले प्रधानतन्त्रतायामेकोद्देश्येनानुष्ठानमनेकेषामिति[६]। अतएव[७] प्रधानयोर-

---

३। यत्र उद्देश्यमेकम्। अनुष्ठानं च एकम्। तत्र प्रधानतन्त्रता।

४। यत्र अनेकानि उद्देश्यानि, किन्तु एकवारमनुष्ठानं भवति, तत्र अनुष्ठानतन्त्रता। अत्र त्रितयतन्त्रतासु अङ्गानां बाहुल्ये अङ्गगतानुष्ठानस्य अनुष्ठानविधावपि तदपेक्षयाऽङ्गानां प्राधान्यात् अङ्गतन्त्रता सिद्ध्यति। किन्तु अङ्गानां प्रधानानां समेषां क्रियया अनुष्ठानमुखेन च संबन्धावगमात् यत्र यत्र येषां प्राधान्येन तन्त्रता सिद्ध्यति, तत्र तत्र तद्गता तन्त्रताऽवगन्तव्या। अङ्ग-तन्त्रतायामनेकोद्देश्येन एकमनुष्ठानम्, अनुष्ठानतन्त्रतायां तु अनेकोद्देश्यतायां सत्यामपि एकधाऽनुष्ठानात् सकृत्त्वमवगम्यते। धाप्रत्ययेन तदेव सूच्यते। द्रष्टव्यम्—सङ्ख्याया विधार्थे धा (पा० सू० ५।३।४३)।

५। सामान्यलक्षणं नाम साधारणलक्षणम्—

साधारणं भवेत्तन्त्रं परार्थे त्वप्रयोजकः।
एवमेव प्रसङ्गः स्यात् विद्यमाने स्वके विधौ। इति।

६। सकृत्प्रधानतन्त्रतालक्षणं समैराद्रियते इति अनेकेषामिति पदेन विशेषयति ग्रन्थकारः, अथवा समेषामेतादृशं मतं, तेनांगीकृतमिति वा। अथवा अनेकद्रव्याणामेकोद्देश्येनानुष्ठानात्तन्त्रतेति ॥

७। प्रधानतन्त्रताया उदाहरणं ददाति ग्रन्थकारः प्रधानयोरित्यादिना। दर्शपूर्णमासेष्टिः एकमाससाध्या सर्वेष्टिप्रकृतिभूता द्विप्रधानात्मिका। तत्र दधिद्रव्यकपयोद्रव्यकं च यागविधानमुभयोः श्रूयते। अतः दधिपयसोः द्वयोः प्रधानत्वेन श्रुतत्वात् एकोद्देश्येन नाम स्वर्गमुद्दिश्य अनुष्ठातव्यतया विधानात्। उभयोः प्रधानयोः एकमनुष्ठानमिति सिद्ध्यति। सेयं प्रधानतन्त्रता। अस्मिन् विषये प्रधानानां तन्त्रताधिकरणे जैमिनीययोः "एकदेशकालकर्तृत्वं मुखाना-मेकशब्दोपदेशात्। अविधिश्चेत् कर्मणामभिसंबन्धः प्रतीयेत लक्षणार्थाभि-संयोगाद् विधित्वाच्चेतरेषां प्रतिप्रधानभावः स्यात्।" (११।२।१-२) इति सूत्रयो विचारः कृतः।

तत्राहु र्भाष्यकाराः सिद्धान्ते—"एकदेशकालकर्तृत्वं मुख्यानां तन्त्रमित्येषा प्रतिज्ञा। तत एवं तावद् वर्णयन्ति—प्रयोगाङ्गं देशादय इति। कुतः। न

प्यैन्द्रदधिपयोयागयोस्तन्त्रताप्रसंगसत्त्वात् एकोद्देश्ये८नानेकानुष्ठानस्यानुष्ठानतन्त्र-

तावदृते देशकालकर्त्तृभ्यः प्रयोगो भवति । यच्च येन विना न भवति तत्तदङ्ग-मित्यवगम्यते । तस्मात्प्रयोगाङ्गं देशादयः । यदा प्रयोगाङ्गं तदा तन्त्रभावः । कस्मात् । एकशब्दोपदेशादेकं फलम् । एकफलत्वात्सहप्रयोगः । तत्र न गृह्यते विशेषो देशादीनामैदमर्थ्यं प्रति । अगृह्यमाणे विशेषे तन्त्रभावो युक्तः । इति ।

प्रकृतौ देशकालकर्त्तृणामेकत्वमस्ति । समे यजेत इति देशः । अभावावस्थायां दधिपयसो र्याग इति कालगतम् एकत्वम् । एकेन कर्त्रा स्वर्गकामिना संपाद्यत्वात् तत्रापि एकत्वम् । अतः तन्त्रताऽस्ति एव ।

कुमारिलश्रीचरणा यथा—समे दर्शपूर्णमासाभ्यां यजेत इत्यनेन षड्यागा-इतरेतरयुक्ताः सेतिकर्त्तव्यताका देशं प्रति विधीयन्ते । तत्र षण्णामपि यागानां तन्त्रेणेतिकर्त्तव्यता प्राप्नोति, साहित्यस्य विवक्षितत्वात् । इति तत्रैव ।

जैमिनीयन्यायमालायां माधवाचार्या अपि—

आग्नेयादिप्रधानस्य देशकाले च कर्त्तरि ।
भेदः स्यादथवा तन्त्रमंगत्वाद् द्रव्यदेववत् ।।
उत्पत्तिविधिशेषत्वाद् भेदः स्यादेकशब्दतः ।
विधेः प्रयोगशेषत्वादभेदे तु हि तन्त्रता ।। इति ।

अत्र सिद्धान्तविस्तरो यथा—दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत । इत्येकेन शब्देनाऽऽग्नेयादीनां पृथगुत्पन्नानामपि परस्परसहितानामेकफलसाधनत्वेन विधानादेकः प्रयोगो गम्यते । तमेकप्रयोगापादमेकं दर्शपूर्णमासशब्दमुपजीव्य देशादिविधानाद्देशादयोऽपि प्रयोगदेशा एव न तूत्पत्तिशेषाः । तस्मात् एकस्मिन् प्रयोगे देशादीनां तन्त्रेण संबन्धः । इति ।

पार्थसारथिमिश्रास्तन्त्ररत्ने एवमाहुर्यत्—"देशं प्रति करणीभूता उपात्ताः सेतिकर्त्तव्यताका एव कर्त्तव्या भवन्ति । तच्च कालैक्ये सिद्ध्यति नान्यथेति सिद्धमंगानामपि तत् कालत्वम् । तस्मादवाच्यमनर्थकमिदं वाक्यमिति । अत्राभिधीयते—नैतदेवम् । समे दर्शपूर्णमासाभ्यां यजेत इत्यनेन षडितियागाः सेतिकर्त्तव्यताका इतरेतरयुक्ता देशं प्रतिविधीयन्ते । तत्र षण्णामपि यागानां तन्त्रेणेति कर्त्तव्यता प्राप्नोति, साहित्यस्य विवक्षितत्वात् । इति ।

८ । अनुष्ठानतन्त्रता पूर्वं विचारिता—द्रष्टव्या पा० टी०—४

**त्वात् [९]अन्योद्देश्येनानुष्ठितस्यान्यत्रोपकारसंपादनं प्रसंगः । इदं[१०] च तन्त्रमध्यविधाने सत्येव । यथा[११]पश्वर्थकेनानुष्ठितप्रयाजादीनां पुरोडाशेऽप्युपकारसंपादनम् ।**

---

९ । तन्त्रलक्षणं विमृश्य इदानीं प्रसंगलक्षणं विमृशति । अन्यस्य नाम इतरस्य कस्यचन एकस्य उद्देश्येन क्रियमाणं कर्म यदि अन्यत्र नाम अपरस्य स्वभावात् उपकरोति तत्र प्रसंगो भवति । भाष्यकारा तदेवाहुः ।

साधारणं भवेत्तन्त्रं परार्थे त्वप्रयोजकः ।
एवमेव प्रसंगः स्याद् विद्यमाने स्वके विधौ । इति ।

अन्यत्र कृतस्य अन्यत्रापि प्रसक्तिः प्रसंगः । यथा पदीपस्य प्रासादे कृतस्य राजमार्गेऽप्यालोककरणम् इति (१२।१।१)" तन्त्रिसमवाये चोदनातः समानानामैकतन्त्र्यमतुल्येषु तु भेदो विधिप्रकम्यादर्थ्यात्तादर्थ्यं श्रुतिकालनिर्देशात्" इति जैमिनीसूत्रस्य भाष्ये उक्तम् । अन्योद्देशेन अन्यदीयस्यापि सहानुष्ठानम् इति । जै० न्या० वि० १२।१।१ । चिन्नस्वामिशास्त्रिणापि (त० सि० र० २५०) अन्यत उपकारलाभप्रयुक्तांगाननुष्ठानं प्रसंग इति तल्लक्षणम् ।

१० । इदमिति सर्वनामपदं विशेष्यपदस्थाने उपपन्नम् । तत्तु प्रसंगपदस्य स्थाने प्रसंगस्य पुंलिगत्वेन इदमः पुंलिग्त्वमभविष्तत् । किन्तु संपादनपदस्थाने उक्तत्वात्, संपादनस्य ल्युट्प्रत्ययान्तत्वेन नपुंसकलिंगत्वेन इदमस्तदनुगामित्वमिति न विप्रतिपत्तव्यम् । सोऽयं प्रसंगस्तत्र विधानमाध्यमेन भवति । अयमेव भाष्यकृदाशयो ग्रन्थकृता अङ्गीकृतः ।

११ । प्रसंगस्योदाहरणं ददाति पश्वर्थकेनेत्यादिना । तत्रायं विषयो यत् दर्शपूर्णमासवत् पशुयागोऽनुष्ठीयते । अतः दर्शपूर्णमासगताः प्रयाजादयोऽग्नीष्टोमीये पशुयागे चोदकेन प्राप्यन्ते । पशुयागेऽपि पुरोडाशाः क्रियन्ते । किन्तु पशुयागार्थोपादीयमानैः पुरोडाशस्योपकारो भवतीति साक्षात् वचनव्यक्तिर्नास्ति । किन्तु तन्मध्यपातित्वम् तदायाति । पशुयागीयकार्यमध्ये पुरोडाशस्य अनुष्ठीयमानत्वात् पशुगतैरंगैः पुरोडाशगत उपकारः सिद्धयतीति प्रसंगः ।

सोऽयं विषयः जैमिनीयेषु "तन्त्रिसमवाये चोदनातः एकाग्निवच्च दर्शनम् । (१२।१।१-६) इति सूत्रेषु विचारितः ।"

अत्राहुः सिद्धान्ते भाष्यकाराः—'पाशुककमेव तन्त्रं पुरडाशस्योपकुर्यात् । किं कारणम् । तन्त्रमध्ये विधानात् । पाशुकस्य तन्त्रस्य मध्ये पुरोडाशो विहितः । अग्नीषोमीयस्य वपया प्रचर्याग्नीषोमीयं पशुपुरोडाशमेकादशकपालं निर्वपतीति ।

**उपादानप्रसंगोऽपि[१२] प्रयोगवचनाक्षिप्तं यदुपादानं तदुपादानमेवोपजीवति। यथा—[१३]सौमिकषट्त्रिंशत्प्रक्रमात् वेदिरग्नीषोमीये[१४] स्वर्गार्थमनुष्ठितस्यापि अग्निहोत्रादेः प्रसंगान्नित्यकार्यकारणम्। तदुक्तं भाष्यकृता-११।१।१**

---

किमतः। तन्त्रार्थस्याविशिष्टत्वं भवतीति। तन्त्रास्यार्थस्तन्त्रार्थः। अंगकृत उपकारः। सोऽत्राविशिष्टः पशोः पुरोडाशस्य च, संनिधानाविशेषात्। पशावपि क्रियमाणान्यंगानि पुरोडाशस्य संनिहितानि। संनिधानाच्च पशोरप्युपकुर्वन्ति। प्रदीपवत्। यथा प्रासादे कृतः प्रदीपः संनिधानाद्राजमार्गेऽप्युपकरोति।

......विकार इदानीं किमर्थः। पश्वर्थः। पाशुकेषु हि प्रयाजानुयाजेषु श्रूयन्ते। न च पशोः पुरोडाशस्य च साधारणानि अङ्गानि। पाशुकान्येव संनिधानात् पुरोडाशस्याप्युपकुर्वन्तीत्युक्तम्। इति।

कुमारिलश्रीचरणाष्टुप्टीकायां यथा—प्रयोगवचनस्तु पाशुकेनोपसंगृहीतत्वान्न पृथगुपसंगृह्णात्युपकारान्। न चेदुपसंगृह्णाति, ते पदार्था एव न सन्ति। नितरां पदार्थानां गुणाः। तस्मान्नास्ति वैगुण्यम्। न च संशयाभेदेन द्रव्यभेदेन वा पूर्वान्तरं भवति। किं तर्हि। प्राकृती संस्था प्राकृते च द्रव्यमपनीयते। उपकारस्तु स एव। प्रयाजोपकाराश्चादावुत्पद्यन्ते। ते चाऽऽफलनिष्पत्ते-र्विद्यन्ते। इति। जैमिनीयन्यायमालायां माधवाचार्या अपि—

पश्वर्थानुष्ठितै र्नास्ति पुरोडाश उपक्रिया।
अस्ति वा विध्यभावान्नो ह्यर्थतस्त्वस्तु लोकवत्।। इति।

अत्र सिद्धान्तविस्तरो यथा—यद्यपि 'पश्वर्थः पुरोडाशस्योपकारः' इत्येतादृशं शास्त्रं नास्ति, तथाप्ययमुपकारो-र्थप्राप्तो न विचारयितुं शक्यते। यथा प्रदीपस्य वैदिकार्थं निर्मितस्यार्थसिद्धं मार्गप्रकाशकत्वमनिर्वार्यम्, तथा पशुतन्त्रमध्येऽनुष्ठीय-मानस्य पुरोडाशस्य पश्वर्थैरंगैरुपकारः केन वार्येत। तस्मात् अन्यार्थैरप्यस्तूप-कारः। इति। एकादशाध्याये (११-१-१) भाष्यकारा अपि विशिष्टमाहुः—पशोरपि चोदकेन प्राप्ताः पशुपुरोडाशस्यापि पश्वर्था एव तु कृताः पशुपुरडाश-स्योपकुर्वन्तीति न पुनस्तदर्थं क्रियन्ते।

१२। प्रयोगवचनं नाम प्रयोगविधौ उपदिष्टं विधिवाक्यम्। तेनाक्षिप्तो भवति प्रसंगमार्गः।

१३। प्रसङ्गं सिसाधयिषया उदाहरणद्वयं वैदिकमुपन्यस्यते। तत्रायं सौमिकवेदि विषयः। दर्शपूर्णमासस्य प्रकृतित्वं श्रुतम्। तदीयानि कार्याणि यस्यां वेद्यां क्रियन्ते सा तदीयानामधिकरणं देशो वा। ज्योतिष्टोमे क्रियमाणे

तत्र दर्शपूर्णमासप्रकृतिगतांगप्रचारादिकर्माणि शक्यन्तेऽनुष्ठातुं न वेति सन्देहे पूर्वपक्षिणा पृथग्वेदिकरणं स्वीक्रियते। यतो हि प्रकृतिवेदिरङ्गप्रधानार्था प्रचारार्थत्वं धत्ते। प्रचारो नाम अवदानग्रहणादिजातमिति धूर्त्तस्वामी। सिद्धान्तिना पुनर्वेदिकरणं नानुमन्यते एकस्यां वेद्यां सर्वसिद्धिसंभावात्। तत्र प्रसङ्गो भवति कारणम्। अधिकरणत्वेन देशधर्मतायां सत्यामपि वेद्यां तत्र हि यागीयद्रव्यासादनार्थतया उपयोगात् प्रचारार्थत्वमपि प्रसङ्गात् साधयितुं शक्नोति।

सोऽयं विषयो जैमिनीययोः 'नानार्थत्वात् सोमे दर्शपूर्णमासप्रकृतीनां वैदिकर्म स्यात्। अकर्म वा। १२-१-८/९ इति सूत्रयोः विवृतः।

अत्राहु र्भाष्यकाराः यथा—वेद्यां हविषामासादनं श्रुतम्। इयमपि च वेदिः। न तत्र तदर्थायामतदर्थायां वेत्येष विशेषः श्रूयते। तस्मान्न कर्त्तव्या वार्षिकी'। इति। अर्थात् पृथग्वेदिकरणमनावश्यकम्। प्रसङ्गेण हविरासादनार्थायां वेद्यां प्रचारस्य संपादनसिद्धेः।

तन्त्ररत्ने पार्थसारथिमिश्रा अपि—यद्यपि अङ्गप्रधानार्था वेदिरिति स्थितं तथापि इयति शक्ष्यामहेऽस्यां कर्त्तुमिति प्रचारार्थत्वावगमात् हविरासादनार्था प्राकृती वेदिः प्रवर्त्तते एवेति मन्यते। यद्यपि तावत् केवलप्रचारार्था स्यात्तथापि हविरासादनमपि तत्रैव संभवति। वेद्यां हि हविरासादितव्यं न तदर्थायामतदर्थायामिति वा विशेषः श्रूयते। प्रचारार्थापि च वेदिर्वेदिरेवेति तस्यामेव प्रसङ्गात् आसादने सिद्धे प्रयोजनाभावात् प्राकृतीह निर्वर्त्तते। अपि च प्राप्ते वेदिकार्येऽनिदेशेन प्राप्तवन्तीं दार्शपौर्णमासिकीं 'वेदिं' विकृत्य पश्वादिषु सौमिकी निविशत इत्युक्तम्। अतोऽस्या एवासादनार्थत्वाद् बाधादपि निर्वर्तते एव प्राकृतवेदिरिति सिद्धान्तः।

१४। द्वितीयोदाहरणं प्रसङ्गस्य प्रक्रमते अग्नीषोमीय इत्यादिना। दर्शपूर्णमासभूतोऽग्नीषोमीययागः। स्वर्गकामो यावज्जीवमग्निहोत्रं कुर्वाणोऽग्निहोत्रं नित्यत्वेन स्वीकरोति। दर्शपुर्णमासप्रकरणे तदङ्गत्वेन अग्नीषोमीयानुष्ठानं प्राप्नोति। तदपि अग्निसाध्यं कर्म। अग्निहोत्रस्य नित्यत्वेन अग्नीषोमीयस्य काम्यत्वमायातम्। तस्य कामनया सकृत्कर्त्तव्यत्वात्। नित्यकाम्ययोः नित्यस्य दुर्बलत्वेन काम्यस्य प्रबलत्वात् अग्निहोत्राद्यपेक्षया अग्नीषोमीयस्य प्रबलत्वं बोध्यते। अनेन काम्यस्य अनुष्ठाने नित्यस्याप्यनुष्ठानं सिद्ध्यति। ततः अग्नीषोमीयसिद्धौ अग्निहोत्रस्यापि सिद्धिः। सोऽयं सिद्धिः प्रसङ्गात् भवतीत्यर्थः।

साधारणं भवेत्तन्त्रं परार्थे[15] त्वप्रयोजकः ।
एवमेव प्रसंगः स्यात् विद्यमाने स्वके विधौ ।। इति ।

इयमेकदिने[16] क्रियमाणानेकश्राद्धेषु पाकतन्त्रता । एतन्न्यायमूलकमेवेदं वचनम् ।

एकाहानि प्रमीतानां बहूनामथवा द्वयोः ।
तन्त्रेण श्रपणं कुर्यात् पृथक् श्राद्धं प्रवर्त्तते ।।

एवमपरपक्षे कन्यागते[17] काम्यश्राद्धकरणे प्रसंगान्नित्यकार्यसिद्धिरिति नानानिमित्तसन्निपातस्थले वक्षामः । एवं च

[18]अमावास्याक्षयो यस्यप्रेत[0]पक्षेऽथवा पुनः ।
पार्वणं तत्र कर्त्तव्यं नैकोद्दिष्टं कदाचन ।।

---

१५ । भाष्यवचनमुदाहृत्य समन्वयति ग्रन्थकारः । परार्थे ताम अपरस्यार्थे यथा हविरासादने कृताथा वेदिः प्रचारार्थेऽपि स्वयं सिद्धयति । इति प्रसङ्गः, यदि तथा न भूत्वा परस्यार्थे प्रयोजको भवति, तर्हि यन्त्रं भवति। तत् अग्रे प्रसङ्गपुरःसरं श्राद्धविषये कथं सङ्गतिः स्यात् स्फुटं विवेचयिष्यते । इति ।

१६ । एकस्मिन् दिने बहूनां मृतौ एककर्त्तृकत्वेन एककालिकत्वेन एकस्मिन् देशे नाम गृहे श्राद्धस्य कर्त्तव्यत्वात् समेषां कृते एकश्रपणसिद्धौ तद्दिनेऽपि समेषां मृतानां श्राद्धार्हाणां कृते तन्त्रेण सकृत् पाको भवति, किन्तु श्राद्धं पृथग् भवतीति तदर्थप्रकाशकं वचनमपि उपन्यस्यति ग्रन्थकारो एकाहनि प्रमीतानामिति । प्रमीतानां मृतानाम् । श्रपणं पाकः ।

१७ । अपरपक्षश्राद्धविषयो बाधाभ्युच्चयालोके प्राग् विमृष्टः । तत्र पंचदशदिनान्यभिव्याप्य श्राद्धं नित्यं क्रियते, गौणपक्षे भागव्यवस्थाप्युपक्लृप्ता । तत्रैव नित्यत्वेन कृतस्य तस्य श्राद्धस्य मध्ये यदि काम्यश्राद्धमाविशेत् काम्यस्य बलवत्त्वेन नित्यस्य दौर्बल्यात् 'काम्येन नित्यसिद्धिः स्यात्' इति न्यायेन नित्यस्य प्रसङ्गसिद्धि भवतीत्यर्थः ।

१८ । अमावास्याश्राद्धं षाट्पुरुषिकं पार्वणं भवति । योऽमावास्यायां मृतः, तत्पुत्रेण तस्य श्राद्धममावास्यायां कर्त्तव्यम् । ततः तद्दिने अमावास्यासांवत्सरिकश्राद्धे तन्त्रेण भवतः । इति । अमावास्याक्षयः अमावास्यायां क्षयः मृत्युरित्यर्थः । प्रेतपक्षः=कन्यागतापरपक्षः । वचनमिदं पितृक्षयाहपरम् । अमावास्यादौ मातरि मृतायां न तन्त्रता, अमावास्याश्राद्धे तस्याः प्रवेशाभावात् ।

---

[0] कृष्ण इति ख० पु० पाठः ।

**इति [१९]त्रैपुरुषिकपार्वणस्यामावास्यापार्वणेन तन्त्रसिद्धं सांवत्सरिकानुष्ठानम् । यत्तु [२०]श्रीदत्तेनोक्तम्—पार्वणेतिकर्त्तव्यातिदेशोऽयं नैकोद्दिष्टमेव पार्वणेतिकर्त्तव्यताविशिष्टं कर्त्तव्यमित्युक्तम् । तदसंगतम्[२१] । पार्वणेतिकर्त्तव्यतामध्यद्रव्यदेवतादीनामपि निवेशात् [२२]कौण्डपायिनामयने नामातिदेशेन द्रव्यदेवतातिदेशवत् ।**

---

१९ । त्रैपुरषिकपार्वणस्य—पितृक्षयाहविहितस्य ।

२० । श्राद्धकल्पपितृभक्त्यादिग्रन्थप्रणेतुः श्रीदत्तस्य मतं पूर्वपक्षत्वेनोयन्यस्यति पार्वणेत्यादिना । अत्र श्रीदत्तस्यायमाशयो यत् अमावास्याश्राद्धसांवत्सरिकत्रैपुरुषिकश्राद्धयोस्तन्त्रेणानुष्ठाने पार्वणगतधर्मास्तत्र अतिदिष्टाः सन्तः अनुष्ठीयन्ते । यस्य कुले सांवत्सरिकैकपुरुषिकैकोद्दिष्टश्राद्धं क्रियते, तत्र अमावास्यायाः, त्रैपुरुषिकत्वेन, उभयोरेकोद्दिष्टपार्वणयोः पार्वणस्य गुरुत्वेन तत्र तन्त्रश्राद्धे पार्वणधर्मां हि अतिदिष्टा भवन्ति । न हि एकोद्दिष्टधर्मेण पार्वणानुष्ठानं कर्त्तुं शक्यते एकोद्देश्यकत्वस्य त्रैपुरुषिकनिर्वाहसंभवात् । पार्वणविधौ तु त्रिपुरुषविधाने एकोद्देश्यकताऽऽयात्येव । अतः पार्वणेतिकर्त्तव्यता नाम पार्वणगता पद्धतिः अदिदेश्या इति भावः ।

२१ । तदसङ्गतमित्यादिना श्रीदत्तमतं खण्डयति ।

२२ । विप्रमिश्रः स्वमतं प्रकाशयितुमारभते । अत्रायं भावो यत् सांवत्सरिकमनृष्ठानं तन्त्रेण भवत्यपि पार्वणं भवति, किन्तु पार्वणधर्माः तत्र अतिदेशेन प्राप्यन्ते इति तद्वक्तुं न शक्यते । यदि वा पार्वणगतानि द्रव्याणि देवता वा एतच्छाद्धे निविशन्ते, तथापि अतिदेशेन तेषां स्वीकारो न भवति, यतो हि तन्त्रेणानुष्ठिते श्राद्धे तदानीं तदीयानि द्रव्याणि तत्परकाः संज्ञा धारयन्ति । इदं द्रव्यम् इयं वा तेवता तन्त्रानुष्ठानाङ्गतया स्वीकृतेति, सङ्कल्पेऽपि तथा भवति । अतिदेशविधावत्र विचारितेऽपि तन्नामतया नाम तन्त्रानुष्ठानोपयुक्तसंज्ञया अतिदेशः सिद्धयति, साक्षादतिदेशाऽपेक्षया नामातिदेशस्य बलवत्त्वात् । सोऽयं विषयः कौण्डपायिनामयने नामातिदेशबत् भवतीति उपन्यस्यते । सोऽयं नामातिदेश इत्थम् । अत्र शब्दत्रयं श्रुतम् । अग्निहोत्रम्, शालामुखीयः प्राजहितश्चेति । अग्निहोत्रनिमित्तं यत् श्रपणं नाम पाकः स गार्हपत्येऽग्नौ भवति । शालामुखीयो नाम शालायाः मुखे शालायाः पूर्वस्मिन् भागे स्थितः इत्यर्थः सोऽयं शालामुखीयः पूर्वमाहवनीय आसीत्, संस्कारवशात् सोमयागे तस्य संज्ञा गार्हपत्य इति जाता । तदर्थश्रुतिरप्यस्ति ज्योतिष्टोमे हि शालामुखीय ख्याति

**न च मातामहादिप्रवेशापत्तिः तच्छ्राद्धस्य विकृतित्वात्**[२३] **। मातामहाना**[२४]**-**

---

ऊर्ध्वं गार्हपत्यो भवतीति शास्त्रदीपिका (१२।१।१३)। तर्हि कौण्डपायिनामयने अग्निहोत्रे अतिदेशेन शालामुखीये श्रपणं भवितुं शक्यते इति कश्चन पक्षः। अत्र तथा च भवति। शालामुखीयस्य चोदकप्राप्तसंज्ञा गार्हपत्यः। किन्तु गार्हपत्यस्य पूर्वाचार्यैः संज्ञा कृता "प्राजहित" इति। यत्र यत्र श्रपणं तत्र तत्र गार्हपत्ये एव। चोदकप्राप्तगार्हपत्यापेक्षया उपदेशेन प्राजहितस्य अग्निहोत्रसंज्ञया अभिधानस्य प्राबल्यात् तेनैव प्राजहितेन श्रपणं भवतीति। तथा प्राकृतौ चोदकप्राप्तपार्वणधर्मापेक्षया पार्वणानुष्ठानस्य नाम्ना कीर्त्तितत्वात् प्राबल्यम्। नह्यत्र श्रीदत्तोक्तातिदेशपक्षो घटते।

अयं नाम्नातिदेशविषयो जैमिनीये "श्रपणं चाग्निहोत्रस्य शालामुखीये न स्यात् प्राजहितस्य विद्यमानत्वात्" (१२।१।१३) इति सूत्रे विचारितः।

अत्राह भाष्यकाराः—कौण्डपायिनामयनेऽग्निहोत्रे चिन्त्यते। किं तदीयस्य द्रव्यस्य शालामुखीये श्रपणमथता प्राजहित इति। प्राजहित इति गार्हपत्यस्य पूर्वाचार्यसंज्ञा। अत्रापि स एव न्यायः। गार्हपत्ये श्रपणं श्रुतम्। स एव प्रयुक्तो विद्यते। अप्रयुक्ते च प्रसङ्गः स्यादिति। भूयश्चात्र परिहारः। चोदकेन शालामुखीयः प्राप्यते। ज्योतिष्टोमे हि तस्य गार्हपत्यत्वं श्रुतम्। तच्च चोदकपरंपरया कौण्डपायिनामयनमागतम्। नामधेयेन तु प्राजहिते श्रपणं प्राप्यते। चोदकाच्च नामधेयशब्दो बलवत्तरः। तस्मादत्र श्रपणं कर्त्तव्यमिति।

तन्त्ररत्ने पार्थसारथिमिश्रा यथा—शालामुखीय एवात ऊर्ध्वं गार्हपत्यो भवतीत्यस्य चोदकमेव प्राप्नोति। नामातिदेशात्तु प्राजहितः। स च बलीयान् दुर्बलाचोदकादित्युक्तम्। जैमिनीयन्यायमालायां माधवाचार्या अपि—

शालामुखीयव्हनौ किं श्रप्यतां कौण्डपायिने।
किं वा प्राजहिते बह्नौ चोदकप्राप्तितोऽग्रिमः॥
प्राग्वंशे पश्चिमो बह्नि र्भवेत्प्राजहितोऽत्र सः।
अग्निहोत्रेति नाम्नाऽऽप्तो नामाप्तो लिङ्गतो बली॥

अत्र सिद्धान्तविस्तरो यथा—प्राचीनवंशे पश्चिमबह्नेः पूर्वप्रसिद्ध मुख्यगार्हपत्यस्य प्राजहित इति पूर्वाचार्यसंज्ञा। स च प्राजहितोऽग्निहोत्रनाम्नाऽत्रातिदिश्यते। नामातिदेशश्च शीघ्रबुद्धिहेतुतया लिङ्गातिदेशात् प्रबलः। तच्च लिङ्गं परंपरातिदेशात् प्रबलम्। इति वक्तव्यम्। तस्मात् प्राजहिते श्रपणम्।

२३। तद्वदित्थं कर्त्तव्यमिति अतिदेशस्वरूपे सिद्धे अप्येवमिति तद्द्योतकपदम्।

**मप्येवमिति (७५।७) विष्णुस्मरणात्। किं च[२५] वचनादपि न मातामहादि-श्राद्धम्। तथा च कात्यायनः २४।१४—**

**कर्षूसमन्वितं[२६] त्यक्त्वा तथाद्यं श्राद्धषोडशम्[२७]।**

**प्रत्याब्दिकं च शेषेषु पिण्डाः स्युः षडिति स्थितिः।**

**इति अमावास्यापार्वणेन तन्त्रता सर्वपार्वणानामिति।**

---

२४। संपूर्णवचनं यथा—विष्णुस्मृतिः ७५।७

मातामहानामप्येवं श्राद्धं कुर्याद् विचक्षणः।

मन्त्रोहेन यथान्यायं शेषाणां मन्त्र वर्जितम्॥

२५। मातुः पितरमारभ्य त्रयो मातामहाः स्मृताः तेषां तु पितृवच्छ्राद्धं कुर्युर्दुहितृसूनवः॥ के० वै० धृतपुलस्त्य वचनम् ७५।७ इति। पितृश्राद्धाधिकारवत्मातामहश्राद्धस्य प्राप्तौ पार्वणं कुरुते यस्तु केवलं पितृकारणात्।

मातामहं न कुरुते पितृहा स प्रजायते॥ कू० पु०

इति अकरणे दोषश्रवणमुखेनापि करणासंप्राप्तिविषयस्य उत्सर्गत्वेन तदपवाद-वचनत्वेन कर्षूसमन्वितमिति कात्यायनवचनप्रसर इति सारः।

२६। कर्षूसमन्वितं नाम सपिण्डीकरणम्।

२७। आद्यं श्राद्धषोडशं नाम पूर्वषोडशश्राद्धानि। नानि यथा—मृताहादारभ्य दशदिनपर्यन्तं प्रत्यहमेकैकम्, प्रथमदिने अर्धपथ-पथाख्ये द्वे, चतुर्थ-सप्तम-नवम-दशमेषु एकैकम्। इति।

२८। द्रष्टव्यः पराशरमाधवः। पृ० ७६१। पितृश्राद्धवन्मतामहश्राद्धमपि नित्यम्, अकरणे प्रत्यवायस्मरणात्। तदुक्तं स्कन्दपुराणे—पार्वणं कुरुते यस्तु केवलं पितृहेतुतः। मातामह्यन्न कुरुते पितृहा स प्रजायते॥ इति।
ऋष्यशृङ्गोऽपि—पितरो यत्र पूज्यन्ते तत्र मातामहा ध्रुवम्।

अविशेषेण कर्त्तव्यं विशेषान्नरकं व्रजेत्॥ इति।

मातामहश्राद्धं क्वचिदपवदति कात्यायनः—

कर्षूसमन्वितं मुक्त्वा तथा श्राद्धं च षोडशम्।

प्रत्याब्दिकंच शेषेषु पिण्डाः स्युः षडिति स्थितिः॥

इति कर्षूसमन्वितं सपिण्डीकरणश्राद्धम्। षोडशग्रहणमेकोद्दिष्टोपलक्षणार्थकम्।

२९। आमश्राद्धन्तु पूर्वाह्ने एकोद्दिष्टन्तु मध्यमे।

पार्वणं चापराह्णे तु प्रातर्वृद्धिनिमित्तकम्॥

इति कालमाधवधृतहारीतवचनम्।

माधवाचार्यमतेनैवम्[२८] सर्वपार्वणानामपराह्णकालत्वात्[२९]। कालादर्शकारमते तु

परतः[३०] पंचमुहुर्त्ताः पार्वणस्येतरस्य तु ।

इति वचनात् कालभेदे तन्त्रताया अभावात् पृथगेव श्राद्धद्वयम्। एवं च साग्निकेन मृताहश्राद्धं त्रैपुरुषिकमेव कर्त्तव्यम्। अमावास्यायां मृताहे षाट्पुरुषिकमिति सिद्धम्। अत्र यद्यपि "अमावास्यायां पितृभ्यो दद्यात्" इति (२६।२) गौतमवचनात् पितृभ्यो दद्यात् पूर्वेद्युः ब्राह्मणान् निमन्त्र्येति वसिष्ठवचनात् बहुवचनेन साहित्यप्रतीतेः[३१] सहितानामेव पित्रादीनां देवतात्वमित्याभाति, तथापि "पितरः[३२] श्राद्धदेवता" (१।२६९) इति योगीश्वरवचने बहुवचनेन प्रत्येकं देवतात्वावगमात् पृथङ्निवेशितत्वात् बहुत्वस्य प्रत्येकमेव देवतात्वम्। असावेतत् इति यजमानस्य पितृप्रभृतीनिति, पितरेतत्तेऽर्घ्यं, पितामहैतत्तेऽर्घ्यं प्रपितामहैतत्तेऽर्घ्यमिति पित्रे पितामहाय प्रपितामहाय नामगोत्राभ्यामुदंमुखेषु।

पितृभ्यश्च ततो दद्यादन्नमामन्त्रेण तु ।

अमुकामुकगोत्रैतत्तुभ्यमन्नं स्वधा नमः ।।

---

३०। माधवाचार्यमतमुपन्यस्य कालादर्शकारमतमुपन्यस्यति। पार्वणेश्राद्धे परतः पञ्चमुहूर्त्ता एव श्राद्धकाल इति आयाति। मत्स्यपुराणे तत्स्मष्टमाभाति। यथा—

अह्नो मुहूर्त्ता विख्याता दश पञ्च च सर्वदा ।
तत्राष्टमो मुहूर्त्तो यः स कालः कुतपः स्मृतः ।।
अष्टमे भास्करो यस्मात् मन्दीभवति सर्वदा ।
तस्मादनन्तफलदस्तत्रारम्भो विशिष्यते ।।
ऊर्ध्वं मुहूर्त्तात् कुतपाद्यन्मुहूर्त्तचतुष्टयम् ।
मुहूर्त्तपञ्चकं ह्येतत् स्वधाभवनमिष्यते ।। इति ।

कालमाधवधृतवचनानि (पृ० १२८) देशकालकर्त्तॄणामैक्ये तन्त्रसिद्धौ परतः पञ्चमुहूर्त्ताः श्राद्धकालत्वेन नियम्यन्ते। कुतपे प्रकान्तस्य सायाह्नादर्वाचीनः सर्वोऽपि मुख्योऽनुष्ठानकालः इति (का० मा) परवर्त्तिकालत्वेन स एवान्तर्भवति। इतरस्य पार्वणस्य अपराह्णात् परतः पञ्चमुहूर्त्तानां कर्मकालत्वेनात्रोक्तौ, अमावास्यापार्वणकालेन सह अस्य भेदात् तन्त्रता न सिद्ध्यतीति उक्तम्। अत पृथगनुष्ठानम्।

३१। साहित्यं नाम सहभावः यौगपद्यम्।

३२। वसुरुद्रादितिसुताः पितरः श्राद्धदेवताः ।
प्रीणयन्ति मनुष्याणां पितॄन् श्राद्धेन दर्पिताः ।। या० स्मृ० १।२६९

इति कात्यायनवैजवापविष्णुपुराणवचनैः "पितृभ्यः पितामहेभ्यः" (पा० श्रा० सू०) इत्यादि पारस्करवचने[३३] च प्रत्येकं देवतात्वावगमात्। न च विधिवाक्यस्थत्वात् उत्पत्तिविशिष्टत्वाच्च[३४] साहित्यमेव बलवदर्घ्यान्नोत्सर्ग-पिण्डदानादिवाक्यगतं स्वधावाचनमन्त्रावगतं प्रत्येकदेवतात्वं बाधत इति वाच्यम्। पितरो देवता (आप० घ० सू० २।७।१६।१) इति तद्धितसमानार्थ-देवतापदात्[३५] प्रत्येकदेवतात्वावगमाच्च चतुर्थीगम्यसहितदेवतात्वस्य दुर्बलस्य

---

३३। पितृभ्यः पितामहेभ्यः प्रपितामहेभ्यः मातामहेभ्यः प्रमातामहेभ्यो वृद्धप्रमातामहेभ्यश्च स्वधोच्यतामित्यस्तु स्वधोच्यमाने स्वधावाचनीयेषु ऊर्ज्जमित्यु-त्तानं पात्रं कृत्वा यथाशक्तिदक्षिणां दद्यात् ब्राह्मणेभ्यो विश्वेदेवाः प्रीयन्तमिति देवे वाचयित्वा वाजे वाजे वत्तेति विसृज्याभावाजस्येत्यनुव्रज्य प्रदक्षिणीकृत्योपविशेत्। इति संपूर्ण श्राद्धसूत्रम्। पार० श्रा० सू०—३

३४। उत्पत्तिविशिष्टत्वात्। स च दध्यानयने स्पष्टम्। आमिक्षासम्पा-दननिमित्तं "तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा" इत्युक्तम्। अत्र तप्ते पयसि दधिसंमिश्रणेन आमिक्षा उत्पद्यते। सा आमिक्षा वैश्वदेवदेवतार्था इति वाक्यात्स्पष्टं भवति। पयसा सह दध्नः संसर्गेण कस्य भागस्य परिणामः आमिक्षा भवति, इति स्त्रीलिङ्गं तत्परं प्रमाणयति। सा वैश्वदेव्यामिक्षा इत्युक्तौ सा इति सर्वनामपदं कस्यविशेष्यस्य परिवर्त्ते प्रयुक्तमिति आयाति। त्यदादिसर्वनाम्नां बुद्धिस्थे शक्तिः" इति न्यायेन बुद्धिस्थविषयिणी शक्तिर्हि सर्व-नामनि अस्ति। अत्र दधि पयासोरुभयोः बुद्धिस्थत्वेन तयोः व्याप्यव्यापक-स्थितिकारणात् व्यापकस्य बहुत्वेन एव परिणामोऽघटते। अतः पयसः आमिक्षा-रूपेण परिणामो भवति। आमिक्षानिमित्तं दधिसंसर्गात् आमिक्षया साकं तद्गतजलं वाजिनाख्यमुत्पद्यते। वाजिनस्य सहोत्पन्नत्वेनापि आमिक्षानिमित्तं प्रयत्ने क्रियमाणे तदुत्पत्तिः पुरुषप्रयत्नोदर्कः। न तु वाजिनोत्पत्तिः। आमिक्षायाः उत्पत्तौ वाजिनमुत्पन्नं भवति। अतः आमिक्षा उत्पत्तिशिष्टा, वाजिनमुत्पन्न-शिष्टम्। उत्पत्तिशिष्टमनयो र्बलवत्। अत्र यथा उत्पत्तिशिष्टाऽऽमिक्षा-उत्पन्नशिष्टवाजिनयोः सहोत्पन्नत्वेनापि उत्पत्तिशिष्टत्वात् आमिक्षायाः प्राबल्येन उत्पन्नशिष्टत्वावच्छेदेन प्रापितस्य वाजिनस्य दौर्बल्यं, तथा प्रकृतौ पितृभ्य इति विधिवाक्यगतबहुवचनान्तपदोपादानेन तत्सहप्राप्तार्घ्यदानान्नोत्सर्गादीनां प्रति-पितृदैवतकृते बाधो न भवति।

३५। द्रव्यदेवतयोः गुणद्रव्यत्वेन यागे विधिवाक्ये देवतावगमः त्रिविधेन उपायेन सिद्ध्यति। तदुक्तं त० वा० २।२।९

**बाधात् । [३६]एवं च देवताभेदे द्रव्यैरपि प्रयाजाज्यभागानुयाजेषु तन्त्रताया अदर्शनात् । अर्घ्येऽक्षय्योदके[३७] चैव पिण्डदानेऽवनेजने ।**

**तन्त्रस्य विनिवृत्तिः स्यात् स्वधावाचन एव च ।।**

---

तद्धितेन चतुर्थ्या वा मन्त्रवर्णेन वा पुनः ।

देवताया विधिस्तत्र दुर्बलं तु परं परम् ।। इति ।

सौर्यं चरुं निर्वपेत् (मै० स० २।२।२) इति विधिवाक्ये सूर्यदेवताकचरुनिर्वपणं विहतम् । अत्र "साऽस्य देवता" (पा० सू० ४।२।२४) इति सूत्रेण ताद्धितिक-प्रत्ययेन सूर्योऽस्य देवता इति सौर्यमिति व्युत्पत्या सूर्यः तद्धितगतदेवताविधिना प्राप्यते । यदग्नये च प्रजापतये चेति सायं जुहोति (तै० ब्रा० २।१।२।१०) इति विधिवाक्ये अग्नये इत्यत्र साक्षात् संप्रदानचतुर्थ्या देबतागतविधिः । संप्रदाने चतुर्थी (पा० सू० २।३।१३) इति तदेव सूचयति । अग्निर्ज्योति ज्योतिः सूर्यः स्वाहेत्येव सायं होतव्यम् । सूर्यज्योतिर्ज्योतिरग्नि स्वाहा (तै० ब्रा० २।१।२।१०) इति प्रातः इति मन्त्रवर्णेन देवतासंकीर्त्तनात् मान्त्रवर्णिकविधिः प्राप्तः । एषु-त्रिविधेषु सर्वेभ्यः प्रबलस्ताद्धितिको विधिः । ततो दुर्बलः चतुर्थीविधिस्ततो दुर्बलः मन्त्रविधिः । प्रकृतौ पितृभ्यः इति चतुर्थीविभक्त्यापादितसं-प्रदानशक्तिविशिष्टस्य बहुत्वस्य सम्मिलितत्वं दुर्बलम् । पितरो देवता इति साक्षादुक्तौ प्रत्येकदेवतात्वं प्रवलम् । "तत्र श्राद्धकर्मणि पितरः पितृपितामहप्रपितामहाः देवताः" इत्यपि उज्ज्वलाकारस्य समर्थनवाक्प्रसरः तदर्थद्योतकः ।

३६ । तन्त्रताभावविषयं ब्रवीति ग्रन्थकारः एवं चेत्यादिना । क्रियाया अनुष्ठानमाध्यमेन द्रव्यस्य देवतायाः च विनियोगेन फलेन सह संबन्धो घटते । द्रव्याणि देवतोद्देशेन त्यज्यन्ते । स हि यागावयवः । दर्शपूर्णमासयागयोः दर्शगताः प्रयाजानुयाजाः पूर्णमासगताः प्रयाजानुयाजाश्च अनुष्ठिता अपि दर्शयागे श्रुतानां देवतानां पोर्णमासयागे श्रुताभिर्देवताभिः सह ऐक्याभावात् तन्त्रेण तेषा-मनुष्ठानं यथा भवितुं न शक्यते, अथवा तत्र तथा प्रत्येकं देवतात्वं तथैव प्रकृते श्राद्धे पितृभ्यः, पितरो वा इति बहुवचनान्तपितृप्रातिपदिके प्रत्येकं पितृदेवतासिद्धौ पिण्डान्नोत्सर्गादिः तन्त्रेण न भवितुं शक्यते पृथगेव भवतीति निर्गलतार्थः ।

३७ । तन्त्राभावस्य वाचनिकप्रमाणमुदाजिहीर्षुणा ग्रन्थकारेण छन्दोग-परिशिष्टवचनमुपन्यस्यते ।

इति छान्दोगपरिशिष्टवचनेनार्घ्यादिषु तन्त्रनिषेधात्[३८] निषेधस्य प्राप्तिपूर्वकत्वात् प्राप्तितन्त्रताऽस्त्येव। अथवा वाचनिक्येव एतद्व्यतिरिक्ते तन्त्रता। किं चासति बाधके लाघवमेव[३९] तन्त्रतायां युक्तिः। सा चेहाप्यस्ति निरपेक्षतायामेव [०]सम्बोधनपदोपादानदेवतानां तन्त्रेण स्वधासंबन्धात्। प्रयाजादौ नैतादृशी वाक्यरचना तथावचनाभावात्। इह तु पूर्वलिखितब्रह्मपुराणवचनेन[४०] एव तन्त्रतेति शूलपाणिः। तत्तुच्छम्। देशकालकर्त्रैक्ये हि तन्त्रता। न चात्र देशैक्यम्। षण्णां ब्राह्मणानां पित्रादिषड्देवतास्थानत्वात्[४१] ब्राह्मणा आहवनीयादिस्थान (२।७।१६।२) इत्यापस्तम्बवचनात्[४२]। वरुणप्रघासेषु[४३] दक्षिणविहारे देशभेदेन

३८। पार्वणे त्रैपुरुषिकश्राद्धसिद्धौ त्रिपुरुषोद्देश्येन पाकेकृतेऽपि विनियोगः तन्त्रेण न भवति। पाकस्य तन्त्रेण प्राप्तत्वात् स्वधावाचनपिण्डार्घ्यदानादीनां तन्त्रेणापि प्राप्तिर्भवति, तस्या निषेधो युक्त्या। वाचा न क्रियते छन्दोगवचनोपन्यासेन। निषेधो प्राप्तिपूर्विका भवति। अप्राप्तस्य अभावपदार्थत्वेन, निषेधस्य च भावपदार्थगतशक्ति बाधकत्वेन भावविषयतया अर्घ्यादीनां तन्त्रेण तेषां प्राप्तिरिति ज्ञेयम्। तन्निषेधः छन्दोगेन कृतः।

३९। तन्त्रतायाः लघुकरणव्यापारे सामर्थ्यमिति भावः। यदि वचनेन बाधो न भवति, तन्त्रता देशकालकर्त्रैक्ये प्रसरति। स्वधावचनादौ तन्त्रबाधकवचनसद्भावात् तत्र तन्त्रता नास्ति किन्तु संबोधने तन्त्रताबाधवचनाभावेन तन्त्रता सिद्ध्यत्येव।

४०। पूर्वलिखितब्रह्मपुराणवचनं यथा—

पितृभ्यश्च ततो दद्यादन्नमामन्त्रणेन तु।
अमुकामुकगोत्रैतत् तुभ्यमन्नं स्वधा नमः।। इति।

४१। ब्राह्मणा अधिकरणानि भवन्ति। मातामहपितृस्थानीयत्वेन षण्णां ब्राह्मणानामावश्यकतायामधिकरणस्य देशधर्मतायां सत्यां एकत्वाधिकतया षट्त्वेन भिन्नप्रतीत्या देशभेदात् तन्त्रता न सिद्ध्यतीत्यर्थः।

४२। तत्र पितरौ देवता ब्राह्मणस्त्वाहवनीयार्थे इति संपूर्णः सूत्रभागः।

४३। देशभेदेन तन्त्राभावविषयं प्रमाणयितुं मीमांसाऽधिकरणमुपन्यस्यति वरुणप्रघासेष्वित्यादिनां। तत्रायं विषयो यत् चातुर्मास्येष्टौ चत्वारि पर्वाणि

[०] सम्बोधनपदोपनीतान् इति ख० पु० पाठः।

**तन्त्राभाववत्। अतएव हुतशेषदानपात्रालंभनांगुष्ठनिवेशनेषु तन्त्राभाव एव**

---

वैश्वदेव-वरुणप्रघास-साकमेध-सुनासीरीयाख्यानि। तत्र आग्नेयादीनि नव हवींषि विहितानि। तेषु मारुतीमामिक्षां प्रतिप्रस्थातृसंज्ञकः ऋत्विक् दक्षिणे विहारे अनुतिष्ठति। इतराणि तु हवींषि अध्वर्युः उत्तरे विहारे अनुतिष्ठति। तेषां तन्त्रेणानुष्ठानं संभवति उत्तरे विहारे, एकदेशाधिकरणसत्वात्। मारुत्याः दक्षिण-विहारोपयुक्तायाः देशभेदेन तैः सह तन्त्रेणानुष्ठानं नैव भवितुं शक्यते। इति मूलतः सैद्धान्तिको भावः।

जैमिनीये "दक्षिणेऽग्नौ वरुणप्रघासेषु देशभेदात् सर्वं विक्रियते" (११।२।३५) इति सूत्रे विषयेऽयं विचारितः। तत्राहु र्भाष्याकाराः—वरुणप्रघासेषु विहार-पृथक्त्वमाम्नातं, पृथगग्नी प्रणयतः, पृथक्वेदी कुरुत इति। तत्र श्रूयते, अष्टावध्वर्युरुत्तरे विहारे हवींष्यासादयति, मारुतीमेव प्रतिप्रस्थाता दक्षिणस्मि-न्निति। इदं विचार्यते। किं भेदेन दक्षिणविहारेऽगांनि कर्त्तव्यानि, अथवा यान्येवोत्तरे कृतानि तान्येवेतरत्राप्युपकर्वन्तीति। किं प्राप्तम्। भेदेनांगानि कर्त्तव्यानि। कुतः। देशभेदात्। देशो हि भिद्यते, दक्षिण उत्तर इति। यान्युत्तरे विहारे प्रधानानि तेषां तद्देशान्येवांगान्युपकुर्वन्ति, अङ्गानि तु विधानत्वात् प्रधानेनोपदेश्येरंस्तस्मात्स्यादेकदेशत्वमिति। नान्यदेशाया मारुत्याः। तस्मात्तदर्थं दक्षिणे विहारे भेदेन कर्त्तव्यानीति।

पार्थसारथिमिश्राः तन्त्ररत्ने यथा आहुः—आसादनमात्रं दक्षिणे विहारे श्रुतं, न होमः। तत्तूतर एव कर्त्तव्यः। तेन प्रधानदेशाभेदात्तन्त्रम्। वचनात्त्वन्यदेश-मासादनं भवतीति मन्यते। भवेदेतदेवं यद्यत्रासादनं विधीयते। तत्तु प्रकृतितः प्राप्तम्। इह हि विहारद्वयेऽप्याहवनीयस्य विद्यमानत्वात् सर्वे होमास्तदर्था नव-निर्वापसादनादीन्यवस्थया प्राप्तुवन्ति। तत्र व्यवस्थामात्रमनेन वचनेन यथा प्राप्तस्यासादनस्य विधीयतेऽपेक्षितत्वाल्लाघवाच्च। तच्च होमार्थतयैव प्राप्त-मिति। तादृशस्यैव नियमाद्धोमोऽपि दक्षिणे विहारे मारुत्या इतरेषां तूत्तर इति प्रधानदेशभेदादङ्गानामावृत्तिरिति। जैमिनीयन्यायमालायां माधवाचार्या—

मारुत्याः सार्धमष्टाभिरंगैस्तन्त्रंभिदाऽथवा।
प्रयोगैकत्वतस्तन्त्रं भेदो देशस्य भेदतः॥ इति।

अत्र सिद्धान्तविस्तरो यथा—देशभेदात् प्रयोगभेदे सत्यंगानुष्ठानमपि भिद्यते। इति।

**याज्ञवल्क्येन[४४] प्रदर्शितः। यत्तु देवताभेदद्रव्यैक्येऽपि प्रयाजाज्यभागानुयाजेषु तन्त्रताया अदर्शनमुक्तं तदसंबद्धम्। तत्र याज्यानुवाक्याक्रमेण[४५] तेषां क्रमावगमेन तन्त्रताया अशक्यसंभावनत्वात्। "अग्नये पवमानाय" इत्यादौ चतुर्थीभेदेन**

---

४४। द्रष्टव्या—या० स्मृ० १।२३८

दत्वान्नं पृथिवीपात्रमिति पात्राभिमन्त्रणम्।
कृत्वेदं विष्णुरित्यन्ने द्विजांगुष्ठं निवेशयेत्॥

४५। याज्यानुवाक्या लक्षणं प्रथमालोके उक्तम्।

४६। ताद्धितिकदेवताविधौ देवताभेदे तन्त्रताभावपक्षं विमृश्य चतुर्थ्यन्त प्राप्तदेवताविधौ देवताभेदे तन्त्रताभावपक्षमारचयति। 'अग्नये पवमानाय' इत्यादिना। तत्र श्रूयते अग्नये पवमानायाष्टाकपालं निर्वपेत्। अग्नये पावकाय, अग्नये शुचये' इति। अत्र देवताभेदः स्पष्टः। अत्रायं सिद्धान्तो यत् नित्यप्रयोगे तन्त्रं, काम्यप्रयोगे भेदेनानुष्ठानमिति।

सोऽयं विषयो जैमिनीयेषु 'पवमानहविःष्वेकतन्त्रता प्रयोगवचनैकत्वात्। लिंगदर्शनाच्च। वचनात्तु तन्त्रभेदः स्यात्। सहत्वे नित्यानुवादः स्यात् (११।४।१२-१५) इति सूत्रेषु विचारितः। तत्राहु र्भाष्यकाराः—"न चैकतन्त्र्यं स्यात्। किं तर्हि। तन्त्रभेदः। स च भवनेवं स्यात्, प्रथमाया भेदः, उत्तरयोस्तन्त्रम्। कस्मात्। व्रचनात्। वचनमिदं भवति—'अथ च कामयेत् वर्षीयान् श्रेयान् स्याम् इति तेषां नये पवमानाय निरुप्य अथ पावकाय शुचये चोत्तरे हविषी समानर्बाहिषी निर्वपेत्, यदेनमग्रहीत् न स उत्तरं वर्षीयान् श्रेयान् भवतीति। किमिव वचनं न कुर्यात्। नास्ति वचनस्यातिभारः। तस्मादेवं कर्त्तव्यम्।.........यच्चोक्तं समानबर्हींषि भवन्तीति समानप्रयोगं दर्शयतीति। तत्र बूमः। सहत्वे नित्यानुवादः स्यात्। इति।

कुमारिलश्रीचरणास्तु--"अहो निरूप्याणि" इति कालवचनं मन्यमानस्तन्त्रतामापादयति। यथा पौर्णमास्यां त्रयाणां कालसंयोगात् तन्त्रेणांगानि। एवमिहापि। सिद्धान्तवादी तु अह्नशब्देन सद्यः कर्त्तव्यानीति विज्ञायते, न कालं प्रत्युपादीयेरन्। तस्मादभेदो वचनात्। 'समानवर्हींषि भवन्ति' इत्यनुवादः ब्रह्मवर्चसकामस्य सर्वाणि हवींषि सह निरुप्याणि' इति। तत्र निर्वापे सहचोदिते वचनात्तन्त्रं भवति। तस्मात्तदपेक्षयाऽनुवादो भवति। इति आहुः।

तन्त्ररत्ने पार्थसारथिमिश्राः यथोचुः—ब्रह्मवर्चसकामस्य हि सर्वाणि हवींषी सह निरूप्याणीति विहितम्। तत्र निर्वापे सहचोदिते वचनात्तन्त्रं भवति।

**देवताभेदेऽपि पवमानेष्टौ तन्त्रतादर्शनात्। न चवं छान्दोगपरिशिष्टवचनस्य निर्विषयत्वात्[४७]।**

**अप्येकमाशयेत् पित्र्यं ब्राह्मणं वेदपारगम्।**
**दैवे कृत्वा तु नैवेद्यं पश्चात्तस्य च निर्वपेत्॥**

**इत्यशक्त्या ब्राह्मणसमासपक्षे देशकालकर्त्रैक्येन तन्त्रतासत्त्वेन छन्दोगपरिशिष्टवचनस्य तद्विषयत्वात्[४८]। न च न्यायप्राप्ततन्त्रतायां किं वचनेनेति[४९] वाच्यम्। अर्घ्यादिपरिसंख्यापरत्वाद्[५०] वचनस्य, अतो वाचनिके चैतद-**

---

तस्मात्तदपेक्षायायमनुवादो भवति समानवर्हीषि भवन्तीति। इति। जैं० न्या० माधवाचार्या अपि—

पवमानेष्टिहविषां तन्त्रं भेदोऽथवाऽग्रिमः।
साध्यदेशाद्यभेदान्तो काम्ये भेदोक्तितोऽन्तिमः॥

इति अत्र सिद्धान्तविस्तरो यथा—यः कामयेत—उत्तरं वसीयान् श्रेयान् स्याम् इति, तस्याग्नये पवमानाय विरूप्याय पावकाय शुचये चोत्तरे हविषी समानर्बाहिषी निर्वपेत्' इति वचनात् काम्यप्रयोगे प्रथमस्य हविषोऽङ्गभेदः, उत्तरयोस्तन्त्रम्। नित्यप्रयोगे तु त्रयाणां तन्त्रम्। इति। अतः सिद्धं देवताभेदेऽपि वचनात् तन्त्रम्। इति।

४७। याज्ञवल्क्यवचनेन तन्त्रताभावपक्षेऽवगते छन्दोगपरिशिष्टवचनस्य निर्विषयत्वापत्ति र्नाम निरवकाशतापत्तिः स्यात् इति चेत्। नेति उत्तरम्।

४८। यस्मिन् स्थले ब्राह्मणाभावो घटते, तत्र पित्रादिपुरुषत्रयार्थमेकेन ब्राह्मणेन तन्त्रेण समापयितुं शक्यते। छन्दोगपरिशिष्टवचनं तदवसरे प्रसरति याज्ञवल्क्यवचनं तु सर्वसौलभ्यस्थितौ वचनात् विधित्वेन तन्त्राभाव एवेति व्यवस्थापनम्। एकब्राह्मणश्राद्धस्थले वैश्वदेवविषये वसिष्ठ आह—(११/३०-३१)

यद्येकं भोजयेच्छ्राद्धे दैवं तत्र कथं भवेत्।
अन्नं पात्रे समुद्धृत्य सर्वस्य प्रकृतस्य तु॥
देवतायतने कृत्वा ततः श्राद्धं प्रवर्त्तयेत्॥ इति।

४९। वाचनिकी तन्त्रता शाब्दी। सा न्यायमूलामतिशेते इत्यर्थः।

५०। अपूर्वविधिः नियमविधिः—परिसंख्याविधिरिति विधीनां त्रैविध्यम्। "व्रीहीन् प्रोक्षति" इति वाक्येन दशपूर्णमासगतपुरोडाशनिमित्तं द्रव्यत्वेन प्राप्तस्य व्रीहेः प्रोक्षणद्वारा संस्कृतत्वं जायते। अनेन दृष्टफलाभावेन अदृष्ट-

मात्रकल्पनया अपूर्वमात्रोत्पत्तिबोधकत्वेन अपूर्वविधित्वं सिद्ध्यति । प्रोक्षण-प्रोक्षितानां व्रीहीणां तुषविमोकद्वारा तण्डुलं निष्पाद्यते । तेन पुरोडाशो निर्मा-पयितुं शक्यते । तुषविमोकार्थमुपायद्वयम् । नखविदलनम् अवहननं चेति । एतस्मिन् स्थले "व्रीहीनवहन्ति" इति वचनं प्राप्यते । अनेन केवलम् अवहनन-पक्षस्य नियमनात् "यस्तु पक्षे नियमयति स नियमविधि" रिति अभियुक्तोक्त्या नियमविधिः । एतद्विधिद्वयव्यतिरेकेण अपरो विधिरेकः परिसंख्याविधिः । स निवृत्यात्मा । "द्वयोः समुचितौ प्राप्तौ सत्यामितरनिवृत्तिफलकविधिः" परिसंख्या विधि, । सा परिसंख्या द्विविधा—श्रौती परिसंख्या आर्थी परिसंख्या । श्रौतीपरिसंख्यायाः नामान्तरं शाब्दीपरिसंख्येति । तदुक्तं मीमांसान्यायप्रका-शटीकायां प्रभायां (पृ०—२०३-२०४) यथा—"श्रुतिःशब्दः । तेन प्रतिपादिता श्रौती । अर्थतः प्रतीयमानाऽऽर्थी । उहाहरणमाद्यस्य "अत्र ह्येवावपन्ति" । इति श्रौतात् वाक्यात् शाब्दी परिसंख्या भवति एतद् विवृतं तत्रैव (२०४-२०५) त्रीणिह वै यज्ञस्योदराणि गायत्री बृहत्यनुष्टुप् । अत्र ह्येवावपन्ति, अत एवोद्वपन्तीति श्रूयते । आवापः संग्रहः । उद्वापस्त्यागः । सोमयागेषु ज्योति-ष्टोमः प्रकृतिभूतो यागः । तत्रत्यसोमसंख्यापेक्षया क्वचिद् विकृतिष्वधिका स्तोमसंख्या दृश्यते यथैकविंशेनातिरात्रेण प्रजाकामं याजयेयुरिति । क्वचिच्च प्रकृतिषु न्यूना स्तोमसंख्या दृश्यते । यथा त्रिवृदग्निष्टुदग्निष्टोम इति । तत्र प्रकृतौ द्वादशस्तोत्राणि बहिष्पवमानमेकं चत्वार्याज्यानि चत्वारि पृष्ठ्यानि माध्यंदिनपवमानमेकमार्भवपवमानमेकं यज्ञायज्ञियमेकमिति । विकृतौ चाधिक-संख्यासंपत्तये प्रकृतितः प्राप्तेष्वेषु स्तोत्रेषु अविशेषात् साम्नामावाप एव तेभ्यः साम्नामुद्वापः प्राप्तः । तत्र चैषा परिसंख्या—अत्र ह्येयवावपन्ति, अत एवोद्वपन्तीति अत्र अत इत्यनेन च यज्ञोदरस्थानापन्नपूर्ववाक्योक्तगायत्र्यादित्रयं परामृश्यते । तत्रैवावापस्तत चोद्वापः । गायत्र्यादीनां च पवमानेष्वेव सत्त्वात् तद्विषय एवायमावाप उद्वापश्च नान्यस्त्रोत्रेषु । जै० न्या० मा० (१०।५।६) चेथ्यमुक्तम्—सोमस्य विवृद्धये साम्नामावापः क्रियते । ह्रासाय चोद्वापः । तावुभावावापोद्वापौ गायत्र्यादिषु एव नान्यत्रेत्यत्र ह्येवावपन्तीत्यादिना नियम्यत इति" । इति ।

आर्थीपरिसंख्या तु "पंच पंचनखा भक्ष्या" इति । अत्र पंचनखविशिष्टानां पंचानां भक्षणं न प्राप्यते । अपि तु परिसंख्याया निवृत्त्यात्मत्वात् श्वगोधादि-पंचकव्यतिरिक्ताः पंचनखा अभक्षा इति अर्थो भवति । प्रकृतौ "तन्त्रता विनिवृत्तिः स्या"दिति स्फुटं श्रोती परिसंख्या दर्शिता ।

व्यतिरिक्ते तन्त्रतेत्यपास्तम्। "तन्त्रस्य विनिवृत्तिः स्यादि"ति परिसंख्यायाः शाब्दत्वात्। त्रीणीह[५१] वै यज्ञस्योदराणि गायत्रीबृहत्यनुष्टुप्। अत्र ह्येवावपन्त्यत एव कारेण शाब्दीपरिसंख्यावत्। अतएवामुकामुकगोत्रैतददिति[५२] ब्रह्मपुराणवचनात् ब्राह्मणसमासपक्षेऽपि[५३] स्वधेत्येव तन्त्रोच्चारणं न तु अस्मत्पितृपितामहप्रपितामहा इति तन्त्रोच्चारणम्। न च पितृभ्य इति बहुवचनावगतसाहित्यबाधापत्तिः तद्वचनस्य सौकर्यार्थत्वात्[५४]। गर्गाः शतं भोज्यन्तामित्यादौ प्रत्येकं भोजनान्वयवदिति। एवं तन्त्रेण पिण्डबलिदानेऽपि "एते वै पितरो देवा" इति मन्त्रः पृथगेव वक्तव्यः। स्वधापदोच्चारणं न तन्त्रेण। नानाबीजेषु[५५] पृथगेवावघातमन्त्रवन्निर्वपणल

---

५१। द्रष्टव्या पादटिप्पणी—५०

५२। पितृभ्यश्च ततो दद्यादन्नमामन्त्रेणेण तु।
अमुकामुकगोत्रैतत्तुभ्यमन्नं स्धा नमः॥ इति ब्रह्म० पु०

५३। समासो नाम संक्षेपः। संक्षेपपक्षे इति प्रकृतौ अर्थः।

५४। गर्गाः शतं भोज्यन्ताम् इति वत् व्याकरणमहाभाष्ये "वृद्धिरादैच्" (पा० सू० १।१।१) इति पाणिनिस्मृतेः "प्रत्यवयवं च वाक्यपरिसमाप्तेः (१२) इति वार्त्तिकव्याख्याने पतंजलिना गर्गाः शतं भोज्यन्ताम् इति उदाहृतम्। गर्गा इत्यत्र बहुवचनान्तगर्गप्रातिपादिके प्रत्येकं गर्गगोत्रीयो ब्राह्मणः भोजयितव्य इति सिद्धान्तितः, न तु सर्वेषां गर्गगोत्रीयाणां तन्त्रेण भोजयितव्यताप्रतीतिः। महाभाष्ये विवृतं यथा—"प्रत्यवयवं वाक्यपरिसमाप्ति दृश्यते। तद्यथा। देवदत्त-यज्ञदत्तविष्णुमित्रा भोज्यन्तामिति। न चोच्यते प्रत्येकमिति। प्रत्येकं च भुजिः परिसमाप्यते। ननु चायमप्यस्ति दृष्टान्तः समुदाये वाक्यपरिसमाप्तिरिति। तद्यथा गर्गाः शतं दण्ड्यन्तामिति। अर्थिनश्च राजानो हिरण्येन भवन्ति न च प्रत्येकं दण्डयन्ति। सत्येतस्मिन् दृष्टान्ते यदि तत्र सग्रहणं क्रियत इहापि प्रत्येकमिति वक्तव्यम्। अथ तन्त्रोच्चारणेन सहग्रहणं सहभूतानां कार्यं भवतीहापि नार्थः प्रत्येकमिति वचनेन"। इति।

प्रकृतौ तु एतद्वत् प्रत्येकमंगुष्ठनिवेशनादिकर्माणि भवन्ति न तन्त्रेण।

५५। प्रत्येकत्वविशिष्टविधौ अतन्त्रतयाऽनुष्ठाने प्रतिक्रियं मन्त्रा आवर्त्तन्ते इति न्यायेन श्राद्धे स्वधापदोचारणं पृथक् पृथक् भवति। तदर्थं मन्त्रोच्चारणमपि तद्वत्। एतत् मीमांसया सह तोलयितुं वैदिकविषयमारचयति ग्रन्थकारो

**वनस्तरणाज्यग्रहणेषु मन्त्रावृत्तिवत् वेदिं त्रिः प्रोक्षतीत्यादौ क्रियावृत्तौ विधानादावृत्तिर्धर्मिका, इह तु देवताभेदेन क्रियावृत्त्यभावात् भिन्नक्रियात्वात् पृथगेव मन्त्र इति ।**

---

नानाबीजेष्टिविषयकमधिकरणम् । तच्च जैमिनीये "द्रव्यान्तरे कृतार्थत्वात्तस्य पुनः संयोगान्मन्त्रस्य च तद्गुणत्वात् पुनः प्रयोगः स्यात्तदर्थेन विधानात्" (११।४।४३) इति सूत्रे विचारितम् ।

तत्राहु र्भाष्यकाराः राजसूये नानाबीजेष्टिः, अग्नये गृहपतय आशुनामष्टाकपालं निर्वपेत, सोमस्य वनस्पतये श्यामाकं चरुमित्येवमादि । तस्यामवहन्ति समन्त्रकश्चोदकेन प्राप्यते । अत्रापि पूर्वेन न्यायेन सकृन्मन्त्रस्य प्रयोगः प्राप्तः । सर्वबीजानां वितुषीकरणं चिकीर्षितं तदभिसन्धीयते इति । तथा प्राप्ते उच्यते । द्रव्यान्तरे बीजान्तरे पुयः प्रयोगः स्यान्मन्त्रस्य । कुतः कृतार्थत्वात् पूर्वस्मिन् बीजे योऽपहन्तिः स कृतार्थः । संनिपत्योपकारी हि सः । स च येन बीजेन संनिपतितस्तदेव संस्कारोति । तदेव चेत् संस्करोति, उत्तरसंस्कारार्थं प्रयोक्तव्यः । तस्य पुनः प्रयोगान्मन्त्रस्यापि पुनः प्रयोगः । तद्गुणत्वात् । तस्यावहन्तेः स मन्त्रो गुणाः । तदर्थेन विधानात् । तस्याप्यसौ प्रतिकर्मविधायिना चोदकेन विहितः । तस्मात् बीजं मन्त्रस्यावृत्तिः ।

तन्त्ररत्ने पार्थसारथिमिश्रा यथा—बीजभेदेऽपि तर्हि सर्वादौ सकृन्मन्त्र प्रयुज्येत । नेति ब्रूमः । तत्र ह्यवघातभावेनैव प्रतिबीजं समाप्यते । अतः प्रधानावृत्तेर्मन्त्रावृत्तिरिति । जैमिनीयन्यायमालायां माधवाचार्या अपि—

नाना बीजेषु तन्मन्त्रः सकृद्वा सकृदग्रिमः ।
विशेषाग्रहणान्मैवमवघातस्य भेदतः ।। इति ।

अत्र विस्तरो यथा—नानाबीजेष्टौ बीजानामवघातस्यांगभूतो मन्त्रः "अयमेतदर्थः" इति विशेषस्यागृह्यमाणत्वात् सकृदादौ प्रयोज्यः । इति चेत् । मैवम् अवघातानां भिन्नत्वेन समन्त्रत्वाय प्रत्यवघातं मन्त्रस्यावर्त्तनीयत्वात् । इति ।

एतदधिकरणं विवृत्य परवर्त्त्यधिकरणेऽवहनननिर्वपणादिषु मन्त्रावृत्तिप्रसङ्गं विशेषेण प्रस्तौति जैमिनिः । तत्रैते सूत्रे—"निर्वपणलवनस्तरणाज्यग्रहणेषु चैकद्रव्यवत्प्रयोजनैकत्वात् । द्रव्यान्तरवद्वा स्यात्तत्संस्कारात् (११।४।४४-४५) इति । तत्रैतानि भाष्ये वाक्यानि—दर्शपूर्णमासयोरत्र चतुरो मुष्टीन्निर्वपतीति । तस्य मन्त्रः देवस्य त्वेति । तत्रैव च दर्भाणां लवनमन्त्रः, बर्हिर्देवसदनं दामीति । तथा स्मरणमन्त्रः ऊर्णाम्रदसं त्वा स्तृणामीति । आज्यग्रहणमन्त्रः धामना-

न चैवममावास्यायां पितृभ्यो दद्यात्'' (२६।२) इति गौतमवचनस्य पितृभ्यो[५६] दद्यात् पूर्वेद्यु र्ब्राह्मणान्निमन्त्रयेति (११।१६) वसिष्ठवचनस्य बहुवचनावगतसाहित्यं

---

मासीति। अत्र सिद्धान्ते द्रव्यान्तरे मन्त्रावृत्तिवत् मन्त्रावृत्तिरिति उक्तम्। तत्राहु र्भाष्यकारा यथा—द्रव्यान्तरवद्वा स्यात्। नैकद्रव्यवत्। भेदः स्यादित्यर्थः कुतः तत्संस्कारात्। ये व्रीहय एकेन मुष्टिना निरुप्तास्ते संस्कृताः। संनिपत्योपकारित्वान्निर्वापस्य। द्वितीयो मुष्टिरप्यन्यान् व्रीहीन् संस्करोति तत्र यदि मन्त्रो न प्रयुज्येत, मन्त्रकृतेन संस्कारेण तेषां वर्जनं स्यात्। एवं सर्वत्र। तस्मात्तत्र। तत्र मन्त्रस्यावृत्तिः। इति।

लवनावहननादीनां बाहुल्येन द्रव्यभेदे मन्त्रावृत्तिरिति उदाहरन् अभिन्नक्रियायां क्रियावृत्त्यभावेन मन्त्रावृत्त्यभावात् सकृन् मन्त्रप्रयोगो घटते इति पक्षं व्याचिख्यासुः वेदिप्रोक्षणांगमन्त्रस्य सकृत्प्रयोगमधिकरणमारचयति जैमिनीययोः "वेदिप्रोक्षणे मन्त्रस्यासकृत् कर्मणः पुनः प्रयोगात्। एकस्य वा गुणविधि द्रव्यैकत्वात्तस्मात् सकृत्प्रयोगः स्यात् (११।४।४६-४७) इति सूत्रयो र्विचारितोऽयं विषयः।

अत्राहु भाष्यकाराः—वेदिप्रोक्षणं श्रूयते, त्रिःप्रोक्षतीति। तस्य मन्त्रः, वेदिरसि बर्हिषे त्वेति। अत्र सिद्धान्तभाष्यं मन्त्रस्य सकृदेव प्रयोगः। कुतः। द्रव्यैकत्वात् एकं तद् वेदिद्रव्यं सकृदुक्तेन मन्त्रेण संस्कृतम्। तत्र भूयो मन्त्रकार्यं नास्ति। ननु कर्मद्वारेण मन्त्रो द्रव्यं संस्करोति। तच्च कर्म्म भिन्नम्। अत्रोच्यते। नैतद् भिन्नम्। आवृत्तिस्तस्य गुणः। क्रियाभ्यावृतौ हि कृत्वसुजर्थः प्रत्ययो न क्रियाभेदे। तन्मन्त्रवदावृत्तिमच्च कर्त्तव्यम्। सकृदुक्तेन मन्त्रेण मन्त्रवत् कृतम्। आवृत्तिसंपादनार्था पुनः क्रिया। तस्मात् सकृत् प्रयोग। इति।

तन्त्ररत्ने पार्थसारथिमिश्रा एवमाहुः—नात्र क्रियाभेदः किन्त्वेकस्या एव क्रियाया गुणत्वेनाऽऽवृत्तिः श्रूयते। क्रियावृत्तौ हि सुच्प्रत्ययः न तद्भेदे, सगुणा च भावना कार्यसाधनमिति सहकार्येणैका भावना। तदर्थश्च मन्त्रो नाभ्यासार्थः। गुणानाँ च परार्थत्वादिति न्यायात्। तस्मात् सकृन्मन्त्र इति।

जैमिनीयन्यायमालायां माधवाचार्या अपि—

वेदिप्रोक्षणमन्त्रः किमावर्त्यः सकृदेव वा।
आद्यः स्यात् प्राक्षणं त्रित्वात्संस्कार्यैकत्वतः सकृत्॥ इति।

अत्र सिद्धान्तविस्तरो यथा—संस्कार्यवेद्या एकत्वेन समन्त्रकप्रथमप्रोक्षणेन तत्संकारसिद्धौ पुन र्न मन्त्रः। इति।

५६। मुद्रितवसिष्ठसूत्रे एतद्भागः सूत्रद्वयत्वेन उक्तः—यथा—अपरपक्ष

निर्विषयं स्यादिति वाच्यम् । [५७]पाकनिर्वाहादितन्त्रानुष्ठानार्थत्वात् ; यथा फलतन्त्रयोः द्विवचनोपपत्ते दर्शपूर्णमासाभ्यामिति° अंगतया[५८] तन्त्रशब्दोच्चारणोपपत्तेः पौर्णमास्यां पौर्णमासीत्यत्र च नानुष्ठानतन्त्रता[५९] एवं प्रकृतेऽपीति । एवममावास्याश्राद्धदिने तदर्हविहितं षाट्पुरुषिकं नित्यश्राद्धं न[६०] कर्त्तव्यममावास्यानित्य°°श्राद्धेनैव तन्त्रसिद्धत्वात् । एवमष्टकान्वष्टकादावपि । एवमेककालीननानानिमित्तसन्निपाते तन्त्रता । यथा—विष्णुः (७६।१) "अमावास्या तिस्रोऽष्टकाः तिस्रोऽन्वष्टका माघी प्रौष्ठपद्यूर्ध्वं कृष्णत्रयोदशी व्रीहियवपाकौ चेति" नित्यश्राद्धकालाः[६१] । अत्र व्रीहियवपाकस्यानियतत्वेन[६२]

---

ऊर्ध्वं चतुर्थ्याः पितृभ्यो दद्यात् । ११।१६, पूर्वेद्यु र्ब्राह्मणान् संनिपात्य यतीन् गृहस्थान् साधून् वा परिणतवयसो विकर्मस्थान् श्रोत्रियान् शिष्यानन्तेवासिनः । ११।१७ ।

५७ । पितृभ्य इत्यत्र बहुवचनान्तपितृप्रातिपदिके पितृपितामहप्रपितामहनां कृते पिण्डस्य देयत्वात् बहूद्देश्यकपिण्डत्वेन तात्पर्यसत्त्वाच्च सकृत्पाकं संपाद्य तेन समेषां पिण्डदानकर्मनिर्वाहो भवतीति आशय आभाति ।

५८ । दर्शपूर्णमासेष्टिरेकमासव्यापि कर्मेदम् । तत्र दर्शं केन्द्रीकृत्य पूर्णमासं च केन्द्रीकृत्य सा समाचर्यते । अतः दर्शयागः पूर्णमासयागश्च मासव्यापिनौ । अनयोरंगद्वयं तयोरनुष्ठानं तन्त्रेण सकृत् कर्त्तुं न शक्यते । असंभवात् ।

५९ । नानुष्ठानतन्त्रता नाम दर्शस्य पूर्णमासस्य च एकेन अनुष्ठानेन संपादनं न भवतीति सारः ।

६० । मृताहश्राद्धं नैमित्तिकम् । अमावास्याश्राद्धं नित्यम् । द्वयोर्युगपत् प्राप्तौ द्वयोः सकृदनुष्ठानम् । तन्त्रेण विधेयमिति सारः ।

६१ । एतांस्तु श्राद्धकालान् वै नित्यानाह प्रजापतिः ।
श्राद्धमेतेष्वकुर्वाणो नरकं प्रतिपद्यते ।। विष्णु० स्मृ० ७७।२ ।

६२ । नन्दपण्डितो वैजयन्त्यां (७७।२) व्रीहियवशब्देन तदुपलक्षितकालं व्यहृतवान् "व्रीहिपाकः शरत्, यवपाको वसन्तः । तत्र नव्याभ्यां व्रीहियवाभ्यां श्राद्धं नित्यम् । व्रीहिपाके च कर्त्तव्यं यवपाके च पार्थिव ।
न तानद्युर्महाराज विना श्राद्धं कथंचन ।।
इति विष्णुधर्मोत्तरात्" इत्यादिना ।

---

° अत्र इति ख० पु० अधिकपाठः ।
°° ख० पु० नास्ति ।

व्यवस्थासंभवेऽव्यवस्थाया अयोगात् युगादिप्रायपाठेन "विशये प्रायदर्शनात्"[६३] (जै० सू० २।३।१६) इति न्यायात्[०]

६३। व्रीहियवपाकशब्देन शरद्वसन्तकालिकनवमीग्रहणात् नियतत्वेन नाम नित्यत्वेन तस्य उपयोगो नैव कर्त्तुं शक्यत इति संशयः। एतन्निराकरणार्थं "विशये प्रायदर्शनात्" (जै० सू० २।३।१६) इति सूत्रमुदाहरणत्वेन उपन्यस्तं ग्रन्थकृता। अत्रायं विषयो यत्—विशये नाम संशये प्रायदर्शनात्। इति अग्निहोत्रदोहविषये श्रूयते "वत्समालभेत" इति। अनेन वाक्येन वत्सकर्म-कालंभनप्रसक्तौ वत्सस्य प्राणिमात्रत्वेन इतरप्राण्यालंभकयजिसंस्कारोऽत्रातिदेशेन घटते इति काचित् शंका न्यस्यते। तदुक्तं विस्तरे—"विमतो वत्सालंभो यजिः स्यात्, प्राणिद्रव्यकालंभत्वात्, वायव्यालंभवत्" इति। किन्तु वत्समालभेत इति वाक्ये देवताश्रुतेरभावात् इतरप्राणिकर्मकालसादृश्यं नात्र घटते तेषां तत्त-द्देवतोद्देश्येन क्रियमाणत्वात्। केवलमग्निहोत्रांगभूतदोहद्रव्यकसंस्कारवचनेन सहास्य पाठात् तत्संस्कारवत् अस्य संस्कारः स्पर्शमात्रे विधीयते। तद्वत् प्रकृते युगादीनां श्राद्धानां नित्यत्वेन पाठात् तत्सहतया व्रीहियवपाककालोप-लक्षितस्य श्राद्धस्य अनित्यत्वेन पाठेन तत्र तावत्कालमात्रे नाम यस्मिन् समये व्रीहयः पच्यन्ते यवाः पच्यन्ते वा, तत्र तन्नित्यताप्राप्तिः।

एतावत् सिद्धान्ते व्यवस्थापत्तिः भवति। यतो हि गदाधरेणोक्तः। व्रीहि-यवपाकौ च इत्यत्र व्रीहियवपाकोपलक्षितकलमात्राश्रयणे व्यवस्थापत्तिः। इति कार्त्तिकशुक्लनवमी वैशाखशुक्लतृतीया च ग्राह्या, इति युगादिचतुष्टयमित्यर्थः। कालसारः पृ०-२६०।

भाष्यकारा अपि एवमाहुर्वत्सालंभविषये सिद्धान्ते—अस्मिन् संशये आलंभ-मात्रं संस्कारः। कुतः प्रायदर्शनात्। अत्रान्यान्यपि संस्कारकर्माणि प्राय-भूतानीत्यभ्युपगम्यते। ननु लिङ्गं प्रायदर्शनम्। कथमनेन सिद्धिरिति। उच्यते। यथा प्रायदर्शनेन सिद्ध्यति तथा वर्णयितव्यम्। कथं च प्रायदर्शनं हेतुः। न्यायतः प्राप्तौ सत्याम्। कः पुनर्न्यायः। देवतासंबन्धाभावात् न यागवचनः। दृष्टार्थत्वाच्च वत्स आलभ्यमानो गां प्रस्नावयिष्यतीति। तस्मादालंभमात्रं संस्कारः। इति।

अत्र भाट्टा अपि सिद्धान्ते यथा—द्रव्यदेवतासंबन्धान्यथानुपपत्त्या पूर्वमस्मा-

० श्राद्धदीपे उद्धृतोऽयं भागः पृ० ६५

वैशाखे[६४] शुक्लपक्षे च तृतीयायां जनार्दनः ।
यवानुत्पादयामास ।

इत्येकतः[०] प्रतिद्धेश्च वैशाखशुक्लतृतीयाकार्त्तिकशुक्लनवम्योराश्रयणात् युगादि-चतुष्टयस्य[६५] विष्णूक्तश्राद्धचतुष्टयेन तन्त्रता । एवं प्रौष्ठपद्यूर्ध्वकृष्णत्रयो-दशीदिने तद्विहितविष्णूक्तश्राद्धस्य युगादिश्राद्धस्य पक्षश्राद्धस्य

---

भिर्यजिः कल्पितो नादृष्टपूर्वशक्त्यालभत्यभिधानेन, व्याभिचार्यनुभानाभासेन वा । न चेहासावस्तीति यावदुक्तता । तथा च दोहानादि संस्कारकर्मप्रायदर्शनमुपपद्यते । दृष्टार्थत्वं च गोप्रस्नवनहेतुत्वात् । इति । जैमिनीयन्यायमालायां माधवाचार्या—

वत्सालंभो यजिः स्पर्शो वा वायव्यादिवद्यजिः ।
स्पर्शः स्याद्देवराहित्यात् संस्कारः प्रायपाठतः ।। इति ।

अत्र सिद्धान्ते विस्तरो यथा—अयं वत्स्यालंभोऽग्निहोत्राग्निसंस्कारः तत्प्रायेपठित-त्वात् इतरसंस्कारवत् । ·तस्मात् अयं स्पर्शमात्रविधिरिति ।

६४ । संपूर्णश्लोको यथा—

वैशाखे शुक्लपक्षे च तृतीयायां जनार्दन ।
यवानुत्यादयाभास युगं चारब्धवान् कृतम् ।। ब्रह्मपु०

६५ । युगादिकं विवृतं ब्राह्मे—

वैशाखशुक्लपक्षे तु तृतीयायां कृतं युगम् ।
कार्त्तिके शुक्लपक्षे तु त्रेता च नवमेऽहनि ।।
तथा भाद्रपदे कृष्णत्रयोदश्यां च द्वापरम्
माघे तु पौर्णमास्यां च घोरं कलियुगं स्मृतम् ।
युगारम्भास्तु तिथयो युगाद्यास्तेन विश्रुताः ।। इति ।

भविष्येऽपि (कालसारधृतवचनम्—पृ० ३६०)—

वैशाखशुक्लस्य च या तृतीया नवम्यसौ कार्त्तिकशुक्लपक्षे ।
नभस्यमासस्य तमिस्रपक्षे त्रयोदशी पञ्चदशी च माघे ।।
एता युगाद्याः कथिताः पुराणे अनन्तपुण्यास्तिथयश्चतस्रः ।
पानीयमप्यत्र तिलैर्विमिश्रं दद्यात् पितृभ्यः प्रायतो मनुष्यः ।
श्राद्धं कृतं तेन समाः सहस्रं रहस्यमेतत् पितरौ वदन्ति ।। इति ।

---

० इत्येतावत् इति श्राद्धदीपोद्धृतभागपाठः पु० ६५

यदेन्दुः पितृदैवत्ये[६६] हंसश्चैव[६७] करे स्थितः[६८] ।
याम्यातिथिर्भवेत्[६९] सा हि गजच्छाया प्रकीर्त्तिता ।। इति

तद्विहितश्राद्धस्य मघाश्राद्धस्य फलार्थतिथिविशेषविहितश्राद्धस्य तदहः पितृमरणे साम्वत्सरिकश्राद्धस्य च तन्त्रेणानुष्ठानम् । सप्तश्राद्धानि तन्त्रेणाहं करिष्ये इति संकल्प्य इति प्रक्रियाकौमुदीकारः । तन्त्रत्वं च तत्र केवलकाम्यत्वेन[७०] सर्वाङ्गोपसंहारात्[७१] युगादिविहितश्राद्धस्यैव । तेन धुरिरोचनयोरेव[७२] देवतात्वम् । ननु नित्यकाम्याग्निहोत्रस्थले[७३] भट्टमते[७४] कर्मभेदात् भवतु तन्त्रता ।

---

६६ । पितृदैवत्ये नाम मघानक्षत्रे

६७ । हंसो नाम रविः

६८ । करे हस्तानक्षत्रे

६९ । याम्या यमदेवताका तिथिः त्रयोदशीत्यर्थः ।

७० । ग्रन्थकारस्य मतमिदममर्वाचीनेन गदाधरराजगुरुणा दूषितम् । यथा—
कृतं श्राद्धं विधानेन मन्वादिषु युगादिषु ।
हायननि द्विसाहस्र पितॄणां तृप्तिमावहेत् ।।
आसु स्नानं जपो होमः पुण्यानन्त्याय कल्पते ।। इति ।

इत्यादिवाक्यानामग्निहोत्रादिनित्यकर्म-सुफलोक्तिवत् प्रशंसापरत्वात् न पृथक् कर्मापादकत्वम् । तस्माद्विप्रमिश्रैरेतच्छ्राद्धचतष्कं पृथक्काम्यं च तेन घुरिरोचनयो र्देवतात्वमिति यल्लिखितं तत्सर्वं पूतिकुष्माण्डायितमिति मन्तव्यम् । तस्मात् पुरूरवोमाद्रवसोर्देवतात्वसमाचारः समीचीनः । यत्तु भविष्ये पुनः कुत्रचित्

नवम्यां शुक्लपक्षस्य कार्त्तिके निरगात् कृतम्

इत्यादि मात्स्यवाक्यमपि तत्कल्पान्तरविषयम् । कृतं सत्ययुगम् निरगात् निर्गतम् इत्यर्थः । कालसारः पृ०—३६०

७१ । सामान्यस्य विशेषेणोपयोगः उपसंहारः । सर्वाङ्गोपसंहारो नाम सर्वसामान्यस्य विशेषत्वेनोपयोगः ।

७२ । काम्यश्राद्धे धुरिरोचनौ विश्वदेवाः ।
इष्टिश्राद्धे ऋतुर्दक्षः संकीर्त्यो वैश्वदेविकः ।
नान्दीमुखे सत्यवसु काम्ये च धुरिरोचनौ ।।
पुरुरवामार्द्रवाश्च पार्वणे समुदीरितौ ।
नैमित्तिके कालकामावेवं सर्वत्र कीर्त्तयेत् ।। इति ।

कर्मभेदे त्वन्यापूर्वस्यान्येनानिष्पत्तेः कथं तन्त्रतेति चेन्न। कर्मभेदेऽपि देशकाल-कर्त्तृभेदात् सकृदनुष्ठाने सर्वकर्मसिद्धे युगपदेव सर्वापूर्वनिष्पत्ति र्जायते। अतएव[७५] स्वप्ननदी तरणाभिवर्षणामेध्यदर्शनेषु चैवमित्येकादशाधिकरणे[७६] स्वप्नार्थत्व-मग्ने[७७] व्रतमपासीति (शु० य० वे०४।१६) मन्त्रः स्वप्नभेदानेकजातीयामेध्यदर्शने च मन्त्रोऽबद्धं[७८] मनो दरिद्रं चक्षुरिति (तै० सं० ३।१।१।२) नैमित्तिकत्वेन गृह्यमाणविशेषत्वात् तन्त्रेण भवतीति स्थितम्। केवलम्

[७९]अयनद्वितये श्राद्धं विषुवद्द्वितये तथा।
युगादिषु च सर्वेषु पिण्डनिर्वपणादृते ॥

इति युगादौ पिण्डप्रतिषेधादेव

"मघायां पिण्डदानेन ज्येष्ठपुत्रो विनश्यति"

इति मघानक्षत्रनिमित्तकश्राद्धे पिण्डप्रतिषेधात् [८०]काम्यत्रयोदशीतिथिविहित-

---

७३। "अग्निहोत्रं जुहुयात्" इति नित्याग्निहोत्रद्योतकं वाक्यम्। अग्निहोत्रं जुहुयात् स्वर्गकामः इति काम्याग्निहोत्रद्योतकं वाक्यम्। अनेन वाक्यद्वयेन कर्म भिद्यते इत्यर्थः।

७४। भट्टमते नाम—कुमारिलभट्टसंप्रदायस्य मते इत्यर्थत्र।

७५। निद्रावस्थायां स्वप्ने नदीतरणाद्यपशकुनदर्शने अपशकुनानां बाहुल्या-दपि कर्त्तृकालदेशगतैकत्वेन सकृत् प्रायश्चित्तं तन्त्रेण भवतीति सारः।

७६। एकादशाधिकरणं नाम जैमिनीयेकादशाध्यायगत तन्त्रविषकसिद्धान्त-दृष्टयासकृदनुष्ठानं सिद्ध्यति। स च साधारणतया तन्त्रविषय इति। तन्त्र-लक्षणविमर्शविषये विमृष्टः।

७७। त्वमग्ने व्रतपा असि देव आ मर्त्येषा इत्यादि (शु० य० वे० ४।१६)।

७८। अबद्धं मनो दरिद्रं चक्षुः सूर्यो ज्यातिषां श्रेष्ठो दीक्षे मा मा हासीः।

७९। एतद्वचनं हेमाद्रौ पुलस्त्यवचनत्वेनोक्तम्। पृ०—२१८। तत्र सर्वेषु स्थले समासु इति पाठः।

८०। काम्मत्रयोदशी महालयाङ्गभूता त्रयोदशी। महालयश्राद्धानां काम्यत्वेन त्रयोदशीश्राद्धस्यापि काम्यत्वं सिद्धम्।

**श्राद्धार्थं पृथगेव पिण्डदानं कर्त्तव्यम्। यथा[८१] सर्वविधपशुबन्धेऽग्नीषोमीये न तौ पशौ करोतीति प्रतिषेधेऽप्याज्यभागौ पशुपुरोडाशयो र्न कर्त्तव्यौ।**

---

८१। मघानक्षत्रगतश्राद्धे पिण्डप्रतिषेधात् मघात्रयोदशीगतकाम्यश्राद्धे पृथक्पिण्डं कर्त्तव्यमिति सिद्धान्तं वैदिकसिद्धान्तेन सह तोलायितुं जैमिनीयाधिकरणमारचयति ग्रन्थकारः। तत्रायं सारो यत् दर्शपूर्णमासवत् पशुरनुष्ठेयः इति वाक्यात् पशुयागे निखिलानि द्रव्याणि दर्शपूर्णमासविधानचोदकेन विनियुज्यन्ते। पशुयागे पाशुक एव पुरोडाशः। चोदकप्राप्तत्वात् तस्याप्युपयोगो दर्शपूर्णमासवत् भवति। किन्तु दर्शपूर्णमासयागे कृतयोः आज्यभागयोः कृते विहिताज्यद्रव्यवत् चोदकेन पशुपुरोडाशके पशुयागे पाशुकयोः पुरोडाशयोः प्राप्तावपि "न तौ पशौ करोतीति" विशेषवचनेन बाधः। अथ एतस्मिन् स्थले पशुयागे पाशुकपुरोडाशबाधे जाते मूलं चोदकं वलवत्तरं तिष्ठति, तेन दशपूर्णमासगताज्ययागवत् अत्रापि पशुपुरडाशार्थत्वेन आज्यभागयोरुपयोगो भवति।

तद्वत् प्रकृते मघाश्राद्धस्य विष्णुवचनसाहचर्येण नित्यतया प्राप्तावपि "ज्येष्ठपुत्रो विनश्यतीतिं वचनेन तत्र पिण्डदाननिषेधे प्राप्ते काम्यत्रयोदशीगतमघानाक्षत्रिकश्राद्धे दर्शादिश्रांद्धांगकपिण्डदानचोदकेन पृथक् पिण्डदानं भवतीति हृदयम्।

तदिदमधिकरणं जैमिनीये "जैमिनेः परतन्त्रत्वापत्तेः स्वतन्त्रप्रतिषेधः स्यात्" (१२।१।७) इति सूत्रे विचारितम्। अत्राहुर्भाष्यकाराः—जैमिनेराचार्यस्य मतं कर्त्तव्यावज्यभागाविति। कुतः। यतः परतन्त्रापत्तेः स्वतन्त्रप्रतिषेधः स्यात्। अथ पौरोडाशिकानां पाशुकम्। यस्य तु न किंचित् परकीयं कार्यमापद्यते तत्प्रतिषेधो न युक्तः। यथा देवदत्ते यज्ञदत्तयानमारुढे देवदत्तयानं निर्वर्त्तते, न वस्त्रालंकारः। न चेहाऽज्यभागयोः कार्ये किञ्चित् पाशुकभङ्गमापद्यते। तस्य प्रतिषेधो न युक्तः। तस्मात्तयोरनिवृत्तिः। कुमारिलश्रीचरणा यथा—इह च पाशुकेन प्रयोगवचनेन केषांचिदपूर्वाणां सामीप्यं कृतं येषां, तेषामन्यथानुपपत्तिः क्षीणा। येषामाज्यभागनिर्वापप्रोक्षणादीनां न कृतं सामीप्यं, तेषामन्यथानुपपत्त्या सामीप्यां करोत्येव। इति। अर्थात् आज्यभागौ आज्येन कर्त्तव्यौ जैमिनीयन्यायमालायां माधवाचार्या—

आज्यभागौ पुरोडाशे न स्तः स्तौ वाऽस्य चोदकः।
लुप्तस्ततौ न तौ मैवं प्रयोगांशस्य लोपनात्॥ इति—

अत्र सिद्धान्तविस्तरो यथा—न तावत् पुरोडाशे चोदको लुप्यते। बाधकाभावात्।

नित्यार्थं[८२] पुन र्न तदनुष्ठानमतन्त्रितत्वात् । मृताहे एकोद्दिष्टपार्वणयो र्विकल्प इति विज्ञानगिरिचरणाः[८३] । [८४]कर्काचार्यश्चात्र अमावास्यायां क्षयाहपार्वणे मातामहाद्यधिकदेवताविषयत्वेनामावास्याश्राद्धस्यैव तन्त्रत्वात् पुरुरवोमाद्रवसोरेव[८५] देवतात्वम् । कुल्यतातायेकोद्दिष्टे तु अमावास्याश्राद्धोत्तरमेकोद्दिष्टापकर्षः[८७] । यथा स्मृतिः—

---

पूर्वोक्तप्रसङ्गसिद्धिस्तु प्रयोगवचनमेव बाधते । न चोदकम् । अतः चोदकत्वात् आज्यभागस्य तौ आज्येन संपादनीयाविति ।

८२ । नित्यकाम्ययोस्तन्त्रेणानुष्ठनसिद्धौ काम्यं बलवद् भवति, तद्रीत्या निखिलं भवति नित्यस्यापि । तद्वदत्र काम्यनित्यमघात्रयोदशीश्राद्धे न भवतः । भिन्नप्रकृतिकत्वात् काम्यत्रयोदशीश्राद्धं पृथगेव भवतीति निर्णीतं पूर्वमेव ।

८३ । मृतेऽहनि प्रकर्त्तव्यं प्रतिमासं तु वत्सरम् ।
प्रतिसंवत्सरे चैवमाद्यमेकादशेऽहनि ।। या० स्मृ० १।२५६

इति एकोद्दिष्टश्राद्धकालबोधकयाज्ञवल्क्यवचनव्याख्याने विज्ञानेश्वरःएवमुपन्यस्यति । तन्मुद्रितमिताक्षरायां यथा—अमावास्याक्षयाहे प्रेतपक्षक्षयाहेच पार्वणमेव । अमावास्याक्षयो यस्य प्रेतपक्षेऽथवा पुनः (लघुशंखः—१७) इत्यादिवचनस्योक्तरीत्या नियमपरत्वात् । अन्यत्रक्षयाहे पार्वणकोद्दिष्टयो र्व्रीहियववद्विकल्प एव । तथापि वंशसमाचारव्यवस्थायां सत्यां व्यवस्थिते, असत्यामैच्छिक इत्यलमतिप्रसङ्गेन । इति । विज्ञानेश्वरं विज्ञानगिरिशब्देन उपन्यस्यति ग्रन्थकारः ।

८४ । कात्यायनश्राद्धसूत्राणांप्रथमसूत्रव्याख्याने कर्काचार्याशयं गृहीत्वा ग्रन्थकार एवमुपन्यस्यति । तत्रेयं कर्काचार्योक्तिर्यथा—"तन्त्रं वा वैश्वदेविकम्" विश्वेदेवास्तन्त्रेण वा । य एव सपितृभ्यो मातामहेभ्योऽपि त एव इतरपश्रद्वये च सर्वं तन्त्रेणेति । यथा दैविकास्तथा पितृसंबन्धिनोऽपि तन्त्राभ्युपगमात् । इति ।

८५ । पुरुरवोमाद्रवसोः पार्वणश्राद्धीयदेवतात्वेनोक्तौ अमावास्याश्राद्धस्य च पार्वणविधानेन संपादयितव्यत्वात् तद्दिनक्षयाहश्राद्धस्य पाते मातामहानामपि देवतात्वेन आधिक्यगुणसद्भावेन च तन्त्रेणानुष्ठाने तयोरेव वैश्वदेवयोः ग्रहणमिति भावः ।

८६ । कुल्यतातः खुल्लतातः पितृव्य इत्यर्थः ।

८७ । अपकर्षो नाम अनन्तरं स्वस्य लघुतया गुरुणा सह संपादनाय शक्तिमान् अर्थात् एककर्त्तृकत्वेन एकस्मिन् दिने श्राद्धद्वयस्याकरणार्थं वाचनिक--

यद्येकत्र भवेयातामेकोद्दिष्टं च पार्वणम् ।
पार्वणं त्वभिनिर्वर्त्त्य एकोद्दिष्टं समाचरेत् ॥

[०]एवमेकोद्दिष्टिनामप्यमावास्यायामशौचादिना तत्करणेऽमावास्याश्राद्धेनैकोद्दिष्टं प्रसंगसिद्धम् । हविःष्वासादितेषु[८८]प्रकृतौ प्रयाजस्यानुष्ठानात्तिष्ठन्तं पशुं प्रयोजयतीति पशौ कालभेदेऽपि[००] प्रसंगसिद्धिः । मातृसांवत्सरिकं तु तद्दिने पाकस्य तन्त्रत्वेऽपि एकोद्दिष्टिभिरमावास्यानन्तरं कर्त्तव्यम् । पार्वणिभिः पुनर्देवताभेदात् प्रागेवा[०००]मावास्याश्राद्धात् पृथक् कर्त्तव्यम् । कालादर्शमते

---

बाधसत्त्वात् एकोद्दिष्टापेक्षया पार्वणस्य गुरुत्वात् पार्वणेन तत्सिद्धिः । सा प्रसङ्गतः इति ग्रन्थकृदाशयः ।

८८ । प्रयाजानुयाजौ दर्शपूर्णमासयागयोरंगकर्मद्वयम् । पञ्च प्रयाजा भवन्ति । प्रकृतौ नाम दर्शपूर्णमासयागद्वये, हविषामासादनेन प्रयोजनवत्तया संस्थानेन यदा यस्य हविषः प्रयोगोऽपेक्ष्यते, तदा तस्य प्रयोगो भवति । ये पशवः हविर्द्रव्यरूपेण क्लृप्ताः, तेषां विनियोगः क्रमेण भवति । क्रमेण ये पशवः तिष्ठन्तो भवन्ति, तेषां क्रमेण विनियोगो भवति । सर्वेषां दण्डायमानत्वाविशेषेण एककालीनविनियोगासंभवात् प्रसङ्गतः समेषां प्रयोगो भवति । अत्र विषये पशूनां विनियोगो यथा कालभेदेन भवति, एकस्मिन् समये न भवितुं शक्यते, तथा प्रकृतौ एकोद्दिष्टपार्वणयोः कालभेदेऽपि पार्वणानुष्ठानेन एकोद्दिष्टस्य प्रसङ्गतः सिद्धिर्भवति । कालभेदस्य इदमेव बीजं यत् अपराह्णः पार्वणे, मध्याह्नश्च एकोद्दिष्टे कालः । इति ।

८९ । मात्रन्तरश्राद्धं—सपत्नीमातृश्राद्धम् ।

९० । मुद्रितमनुस्मृतौ अस्य पाठो यथा—

सर्वासामेकपत्नीनामेका चेत् पुत्रिणी भवेत् ।
सर्वास्तातेन पुत्रेण प्राह पुत्रवती र्मनुः ॥ ९।१८३

दत्तकमीमांसाधृतपाठस्तु—

सर्वासाऽमेकपत्नीनामेका चेत् पुत्रिणी भवेत् ।
सर्वास्तास्तेन पुत्रेण पुत्रिण्यो मनुरब्रवीत् ॥ पृ०–८०

---

० इति अधिकपाठः ख० पु० ।

०० प्रसङ्गवदेकोद्दिष्टपार्वणयोः कालभेदेऽपि इति ख० पु० अधिकपाठः ।

००० पृथगेवामावास्याश्राद्धात् प्राक् कर्त्तव्यम् इति ख० पु० पाठः ।

इतरपार्वणस्य कालभेदात् । एवं मात्रन्तरश्राद्धमपि[८९] । श्राद्धद्वयकरणनिषेधस्य काम्यश्राद्धविषयत्वात् । तथा च जाबालिः[०]—

श्राद्धं कृत्वा तु तस्यैव पुनः श्राद्धं न तद्दिने ।
नैमित्तिकं तु कर्त्तव्यं निमित्तानुक्रमोदये ।।

तथा— एकाहानि विनष्टानां बहूनामथवा द्वयोः ।
तन्त्रेण लक्षणं कृत्वा पृथक् श्राद्धं प्रकल्पयेत् ।।
कृत्वा पूर्वमृतस्यादौ द्वितीयस्य ततः परम् ।
तृतीयस्य ततः कुर्यात्[००] सन्निपाते त्वयं क्रमः ।।

अत्र बहूनामेकोद्दिष्टानां सन्निपात इति विशेषः । एवमपुत्रसपत्नीमातादिसपिण्डीकरणमपि अमावस्यादिने पृथक् सपत्नीपुत्रेण कर्त्तव्यम् । अस्यापि[०००] पुत्रत्वात् । यथा—

[९०]बह्वीनामेकपत्नीनां यद्येका पुत्रिणी भवेत् ।
सर्वास्तेनैव पुत्रेण प्राह पुत्रवती र्मनुः ।।

एवमग्निप्रविष्ट[९१]बहुपत्नीकस्य तिथिभेदाभावे सांवत्सरिकस्य तन्त्रेणानुष्ठानं ब्राह्मणभेदेन । तिथिभेदे यथातिथ्येव । अशौचपाते तु तदन्ते पूर्ववदेव[९२] । अमावास्यायामग्निप्रवेशे पूर्ववदेव[९३] । एवमाहिताग्नेराधाननियुक्तपत्न्यन्तराग्निप्रवेशे निरग्निपुत्रेण ।

---

९१ । पतिमरणात्पतिचितायां प्रविशन्ति पत्न्यः पत्या सह स्वर्गभोगकामनया । तदुक्तं विष्णुधर्मसूत्रे—भर्तरि प्रेते ब्रह्मचर्यं तदन्वारोहणं वा (२५।१४) इति । अन्वारोहणं नाम अनु पश्चात् पत्युः आरोहणं प्रवेशः इत्यर्थः । बह्व्यः पत्न्यो यस्य तस्य मरणे अन्वारोहन्तीनामेकस्मिन् दिवसे मरणसंभवेन तिथिभेदाभावे तन्त्रेण श्राद्धं भवति । प्रतिमातृ पृथक् ब्राह्मणा भवन्तीति ग्रन्थकृदभिप्रायः ।

९२ । मरणदिवसे अशौचपाते अशौचान्ते तासां पत्नीनां तन्त्रेण श्राद्धं कर्त्तव्यम् । अधिकदिवसक्षेपो न कर्त्तव्यः । "न वर्धयेदघाहानि" (मनुः ५।८४) इति वचनात् । पूर्ववद् इति तन्त्रेण इत्यर्थः । तत्रापि तिथिभेदेन मृतानामपि एकस्मिन् दिवसे श्राद्धप्राप्तौ एकाहनि कृतानामिव श्राद्धं कर्त्तव्यमिति भावः ।

९३ । द्र-पा-टी—९०

---

० जाबाल इति ख० पु० पाठः ।
०० कार्यम् इति ख० पु० पाठः ।
००० तस्यापि इति ख० पु० पाठ

ऊर्ध्वं त्रिपक्षात् यत् श्राद्धं मृताहन्येव तद् भवेत् ।
अधस्तु कारयेद् दाहादाहिताग्ने द्विजन्मनः ।।

इति विज्ञानगिरि[९४]शुद्धितरंगिणीलिखितजातूकर्ण्यवचनात् कालादर्शमतेन साग्नेर्दाहावधिकत्रिपक्षे[९५] सपिण्डीकरणं त्रिपक्षश्राद्धं च न तु मृताहावधित्रिपक्षे । कल्पतरुमते[९६] पुनस्त्रिपक्षश्राद्धं दाहावधिकत्रिपक्षे सपिण्डीकरणं तु मृताह-संवत्सरे न तु—

---

९४ । मृतेऽहनि प्रकर्त्तव्यं प्रतिमासं तु वत्सरम् ।
प्रतिसंवत्सरं चैवमाद्यमेकादशेऽहनि ।। या० स्मृ० १।२५६

इति याज्ञवल्क्यवचनव्याख्यानावसरे मिताक्षरायां विज्ञानेश्वर एवं वचनं जातूकर्णस्येति उक्तवान् । तत्रायं प्रसंगस्तत्रोक्तः—'मृतेऽहनि' इत्यत्राहिताग्ने विषयो जातूकर्ण्येनोक्तः । ऊर्ध्वं.................. जन्मनः । इति । तत्र त्रिपक्षादर्वाग्यः प्रेतः, तन्मृताहदिवसादारभ्याहिताग्नेः कार्यम्, त्रिपक्षादूर्ध्वं यच्छ्राद्धं तन्मरणदिवस एवेत्यर्थः । पृ०—६१

९५ । साग्नेरशौचं दाहादारम्य भवति न मृताहादारभ्य ।

९६ । कृत्यकल्पतरौ श्राद्धकाण्डे कर्षूत्रयसन्निकर्षेऽप्येवमेव (२१।१८) इति विष्णुवचनव्याख्याने एवं सिद्धान्तितम् । तोलयन्तु—"कर्षूत्रयसन्निकर्षेऽप्येवम्" इति, प्रेतैकोद्दिष्टसंबन्धिकर्षूत्रयसन्निहितानपि पिण्डान् पित्रादिपिण्डेषु संसृजेत् । 'मासिकार्यवत्' मासिभवः, 'मासिकानि' तदर्थः प्रेताप्यायनादिः, तेन युक्तानि श्राद्धानि मासिकार्थानि । अशौचापगमे 'द्वादशाहं' द्वादशदिनेषु कृत्वा च त्रयोदशेऽह्नि सपिण्डीकरणं कुर्यात् । आद्यं एकोद्दिष्टमाशौचान्त एव कृतम् । ऊनषाण्मासिकादीन्यपि षष्ठद्वादशदिवसयोरेव कर्त्तव्यानि । एवमेतस्मिन् पक्षे षोड़शश्राद्धानि भवन्ति । एतच्च साग्ने निरग्नेश्च वृद्ध्यादावपकर्षनिमित्ते सति बोद्धव्यम् । वृद्धेश्च सपिण्डीकरणापकर्षनिमित्तत्वम्

अर्वाक संवत्सराद् वृद्धौ पूर्णेसंवत्सरेऽपि वा
ये सपिण्डीकृताः प्रेताः ।

इति शातातपवाक्येऽनुवाददर्शनाज्ज्ञातव्यम् । पैठीनसिः—संवत्सरान्ते विसर्जनं नवमास्यमित्यके । अयं च सपिण्डीकरणे नवमासविधि र्दशममासादौ वृद्धि-श्राद्धनिमित्तसंभवे बोद्धव्यः । न ततोऽर्वाक् सपिण्डीकरणं कर्त्तव्यम् । इति । पृ०—२५४-२५५

षष्ट्या[९७] तु दिवसैर्मासः कथितो वादरायणैः ।

इति चान्द्रमासं षष्टिदिवसात्मकमादाय मृताहृतिथिपक्ष[०] इति दाहावधिपंचमपक्षे । अतएव शम्भुकरवाजपेयिचरणा अपि एवं यदात्वेतदब्दमध्येऽधिमासपातो भवतीत्युक्तवन्तः । अनियुक्तपत्न्यास्त्वग्निप्रविष्टत्वेऽप्याहिताग्नित्वाभावात् मृताहत्रिपक्ष एव तच्छ्राद्धम् । नियुक्तपक्षस्तु तिथिभेदेऽपि दाहावधिकत्रिपक्ष एव जातूकर्ण्यवचनात् । साग्निकेन[००] पितृयज्ञानुरोधेन पित्रोरेकादशाहादावेव । सपत्नीमात्रादेस्तु स्वकाले एव । "साग्नौ[०००] कर्त्तर्युभावाद्यौ प्रेते साग्नाविति कालादर्शकारिका । एवं

"सपिण्डीकरणादूर्ध्वं कुर्यात् मासानुमासिकम्"

इति परिशिष्टवचनात् अमावास्याविहितं कर्त्तव्यम् । एवं

दीपदानं गयाश्राद्धं श्राद्धं चापरपक्षिकम्[००००] ।
प्रथमेऽब्दे न कुर्वीत योजनेऽपि कृते सति ।
वृद्धिश्राद्धी गयां गच्छन् सद्यः कुर्यात् सपिण्डनम् ।

इति शुद्धितरंगिणीहेमाद्रिलिखितवाक्यबलाद् गयाश्राद्धे देशाचारवशेन व्यवस्थाविकल्पः । एवं—[९८]पितर्युपरते पुत्रो मातुः श्राद्धान्निवर्त्तते ।
मातर्यपि च वृत्तायां पितुः श्राद्धादृते समाः ।।

---

९७ । संपूर्णश्लोको यथा—षष्ट्यातु दिवसैर्मासः कथितो वादरायणैः
पूर्वार्द्धं तु परित्यज्य कर्त्तव्या चोत्तरे क्रिया ।।

इति व्यासवचनम् ।

९८ । कालसारे गदाधरो ग्रन्थकृत एतद्भागीयमभिप्रायं दूषयित्वा स्वमतं प्रस्तौति यथा—(पृ० २३८-२३९)—मातुर्विषये बृहन्मनुः—

पितर्युपरते पुत्रो मातुः श्राद्धान्निवर्त्तते ।
मातर्यपि च वृत्तायां पितुः श्राद्धादृते समाः ।।

समाः सांवत्सरिकं वर्जयित्वा इत्यर्थः । इदं सन्निहितवाक्येन संबध्यते । न पूर्ववाक्येनापि ।

---

[०] त्रिपक्ष इति ख० पु० पाठः ।

[००] तु पिण्ड इति ख० पु० अधिकपाठः ।

[०००] अतएव इति ख० पु० अधिकपाठः ।

[००००] पक्षकम् इति ख० पु० पाठः ।

**इति बृहन्मनुवचनात् अन्वष्टकामावास्यादीनां तद्वर्षे निवृत्तिः। "ऋते समा" इति बहुवचनादुभयोः सांवत्सरिकं तु कर्त्तव्यम्। केचित्तु "ऋते समा" इति सन्निधानात् पित्रैवान्वयं विधाय मातृसांवत्सरिकं न कर्त्तव्यमित्याहुः। अस्मद्देशेषु निर्विगानमातृसांवत्सरिकानुष्ठानादसम्बद्धव्यवायाभावात् अनुषंगाधिकरणन्याय-संभवात् उभयात्रान्वय एवेति तत्त्वम्। कौमुदीकारस्तु—**

**मातर्यपि च वृत्तायां श्राद्धं कुर्वीत पैतृकम्।**
**तस्या न वत्सरं कुर्यात् प्रेते च[0] पितरि क्वचित्॥**

---

मातर्यपि च वृत्तायां श्राद्धं कुर्वीत पैतृकम्।
तस्या न वत्सरं कुर्यात् प्रेते पितरि च क्वचित्॥

इति शंखोक्तेरिति कृत्यकौमेदीकारादयः। कुर्यादिति पुनरुपादानात् नञः पूर्ववाक्ये संबन्धशंका नास्त्येवेति तन्मतं समीचीनम्। तस्माज्जनकमरणाब्दे मातुर्वार्षिकमपि न कार्यम्। मातृमरणाब्दे तु पितृवार्षिकश्राद्धमात्रं कार्यम्। मातृमरणाब्दे तु पितृवार्षिकश्राद्धमात्रं कार्यम्। इतीयानेव भेदः। अमावास्या-दिनित्यश्राद्धानि उभयोरप्यब्दे न कार्याणीति सिद्धान्तः। अत्र त्रिप्रमिश्रै "ऋते समाः" इत्युभयत्रापि योजयित्वा अस्मद्देशे निर्विगानं मातृसांवत्सरिकानु-ष्ठानाद्यसंबन्धव्यावायाभावादनुषंगाधिकरणन्यायसंभवादुभयोः संवत्सरे उभयोः सांवत्सरिकं कार्यमिति यल्लिखितं, तन्न विचारसहम्, इत्यस्मत्पितृचरणाः। तथा हि अनुषंगाधिकरणेषु असंबद्धव्यवायाभावो नानुषंगनिमित्तम्। किन्तु आकांक्षासद्भाव एव तन्निमित्तमिति विचारितम्। 'पितर्युपरते इति वाक्ये आकांक्षादि विरहान्नानुषंगप्रसंगोऽपि। अनेनैव स्वारस्येन "मातर्यपि चे"ति वाक्यस्य प्रामाण्ये मातृसांवत्सरिके विकल्प इति तैरप्युक्तम्। शंखस्मृतौ तद्-वाक्यस्योपालभाद प्रामाण्यशंका दुरापास्तैव। यच्चोक्तं विकल्प इति, तत्रापि प्रष्टव्यम्। किं वाक्ययो र्विरोधाद् विकल्प इति कल्पनीयम्। अथवा स्मृत्या-चारयोरिति? तत्र न प्रथमः। उभयो र्वाक्ययोरपि संवत्सरे मातृसांवत्सरि-कानुष्ठानाभावस्य स्पष्टमभिहितत्वेन विरोधाभावात्। तस्माद्वितीयः पक्ष आश्रयणीयः। सोऽप्ययुक्तः। तथाचारस्य कृत्यकौमुद्यादिषु अलिखितत्वेन अनादृतत्वात्। स्मृत्यपेक्षयाद्यन्तरितप्रामाण्येन। वारस्य दुर्बलत्वमिति सिद्धा-न्ताच्चेत्यलमति विस्तरेण। इति।

---

[0] प्रेते पितरि कुत्रचित् इति ख० पु० पाठः।

अत्र उपरि वत्सरपदसत्त्वेन प्रायःपाठात् पैतृकं सांवत्सरिकम्। नञश्च[९९] क्रियापदसत्त्वेनोत्तरवाक्येनैव संबन्धः। एतद्वाक्यस्य[0] प्रामाण्ये मातृसांवत्सरिके विकल्पः। इदं च सपिण्डीकरणं पितृपितामह-प्रपितामह-वृद्धप्रपितामहैः। एकस्मिन् जीवति अतिवृद्धप्रपितामहो ग्राह्यः। मातुश्च पितामही-प्रपितामही-वृद्धप्रपितामहीभिः, एकस्यां जीवन्त्यामतिवृद्धप्रपितामही ग्राह्या। विज्ञान-गिरिचरणास्तु[१००]

"पैठीनसिः अपुत्रायां मृतायां तु पतिः कुर्यात् सपिण्डनम्।
श्वश्र्वादिभिः सहैवास्याः सपिण्डीकरणं भवेत्॥

यमः— पतिनैकेन कर्त्तव्यं सपिण्डीकरणं स्त्रियाः।
एकत्वमागता यस्माच्चरुमन्त्राहुतिव्रतैः॥

उशना— पितुः पितामहे यद्वत् पूर्णे संवत्सरे सुतैः।
मातुर्मातामहे तद्वदेवं कार्या सपिण्डता॥

---

९९। नञ् प्रतिषेधस्य द्योतकः। तस्य उत्तरवाक्येन संबन्धं प्रस्तुवन्ति समे शास्त्रकाराः। "प्रतिषेधः स विज्ञेयो यस्योत्तरपदेन नञ्।" इति (मी० न्या० प्र—२५२) प्रकृतौ कौमुदीकारः कृत्यकौमुदीकारः बृहस्पतिः। विप्रमिश्रस्य सिद्धान्तं नांगीकरोति गदाधरः स्वकालसारे।

१००। सपिण्डीकरणविषयक (१।२५३-२५४) याज्ञवल्क्यस्मृतिवचन-व्याख्याने मिताक्षरायां विज्ञानेश्वर एवं प्राहः। तत्र मुद्रितमिताक्षरायां त्वेवं पाठो यथा—"भर्त्तापि भार्यायाः स्वमात्रदिभिः सह सपिण्डीकरणं कर्त्तव्यमिति पैठीनसिराह। अपुत्रायां मृतायां तु पतिः कुर्यात् सपिण्डताम्।
श्वश्र्वादिभिः सहैवास्याः सपिण्डीकरणं भवेत्॥ इति

पतिना सह सपिण्डीकरणं यमः प्राह—

पत्या चैकेन कर्त्तव्यं सपिण्डीकरणं स्त्रियाः।
सा मृतापि हि तेनैक्यं गता मन्त्राहुतिव्रतैः॥ इति

---

0 एतेनास्य इति ख० पु० पाठः।

**अत्र व्यवस्था—अपुत्रायां मृतायां भर्त्ता स्वमात्रा, अन्वारोहणे पुत्रः स्वपित्रैव। आसुरादिविवाहोत्पन्नः पुत्रिकापुत्रः° मातामहेनैव। ब्राह्मादिविवाहेत्पन्नः पित्रा पितामहेन पितामह्या वा इति विकल्पः कुलाचारव्यवस्थित इत्याहुः। केचित्तु—"पितामह्या सहैवास्याः सपिण्डीकरणं स्मृतम्" ........"अन्यत्र[१०१] पतिना °°सहैवेति" °°°वृद्धशातातपलघुहारीतवचनद्वयदर्शनात् विकल्पो देशभेद व्यवस्थित इत्याहुः। ध्रियमाणे पितरि पुत्रः पितामह्या पितर्यतीते पित्रैवेति मैथिलाः। पतिनेति पक्षोऽन्वारोहणमात्रविषय इति शुद्धितरंगिणीकारः। एवं**

**सपिण्डीकरणादूर्ध्वं प्रेतः पार्वणभाक् भवेत्° ।**
**वृत्तपूर्त्तेष्टियोग्यश्च गृहस्थश्च ततो भवेत्°° ।।**

**इति वाक्यदर्शनात् गृहस्थपदस्य संगृहीतदारे एव मुख्यत्वात् गृहस्थाश्रमविहित-कर्मानुष्ठानयोग्यतापरत्वे लक्षणाप्रसंगात्°°° पुत्रेण विवाहोऽपि कर्त्तव्यः।**

---

उशनसा तु मातामहेन सह सपिण्डीकरणमुक्तम्—

पितुः पितामहे योज्यः पूर्णे संवत्सरे सुतैः।
मातुर्मातामहे तद्वदेषा कार्या सपिण्डता ।।

तथा— पिता पितामहे योज्यः पूर्णे संवत्सरे सुतैः।
माता मातामहे तद्वदित्याह भगवांछिवः ।।

इत्येवं विधेषु वचनेषु सत्सु अपुत्रायां भार्यायां प्रमीतायां भर्ता स्वमात्रैव सापिण्ड्यं कुर्यात्। अन्वारोहेण तु पुत्रः स्वपित्रैव मातुः सापिण्ड्यं कुर्यात्। आसुरादि-विवाहोत्पन्नः पुत्रिकासुतश्च मातामहेनैव। ब्राह्मादिविवाहोत्पन्नः पित्रा माता-महेन पितामह्या वा विकल्पेन कुर्यात्। अत्रापि यदि नियतो वंशसमाचारस्त-दानीं तथैव कुर्यात्। वंशसमाचारोऽप्यनियतश्चेत्तदा आत्मनस्तुष्टिरेव। तदर्थं मनु—(२।६) रवादीत्।

१०१। संपूर्ण श्लोको यथा—अन्वष्टकासु वृद्धौ च गयायां च क्षयेऽहनि। मातुः श्राद्धं पृथक् कुर्यादन्यत्र पतिना सह ।।

---

° च इति ख० पु० अधिकपाठः।
°° सहेति इति ख० पु० पाठः।
°°° शातातप इति ख० पु० पाठः।
° यतः ख० पु०
°° भवेत्ततः ख० पु०
°°° नास्ति ख० पु०

कृतदारेण पुनर्दारान्तरस्वीकारो न कर्त्तव्यः[१०२] विवाहप्रतिषेधात्। एव मातृमरणानन्तरं पितृमरणे कृतेऽपि मातृसपिण्डीकरणे पितुरकृतसपिण्डनत्वात् आभ्युदयिकाभावेन पंचमहायज्ञानधिकारात् वृथापाकस्य च "ये पचन्त्यात्म-कारणा"दिति[१०३] (मनुः ३।११८) निषिद्धत्वात् पित्रा समं विभक्तस्य निरग्निक–पुत्रस्य पृथक् पंचमहायज्ञस्य ब्रह्मयज्ञातिरिक्तस्य पूर्वमकृतत्वात् पितृमरणसंवत्सरे परान्ननिषेधेत[१०४] श्रोत्रियपाकयोजनस्याप्यसंभवात् यथा कथंचिदतिथ्याद्यर्थपाक एव भोजनं वैश्वदेवस्य ⁰क्रत्वर्थत्वपक्षेऽप्यनादर एव। अथवा नित्यश्राद्धार्थपाक एव भोजनम्। एतच्चानुपनीतोऽपीति, वचनेनानुपनीतस्यापि नितयश्राद्धाधि-कारात्। एवं पश्चान्मृतायां मातर्यपि। एवं प्रथमारम्भे कालशुद्धयादेरप्य-पेक्षितत्वात् कालशुद्ध्यादावपि तथैवेति। यतीनां एकोद्दिष्टं न कुर्वीत। तथा च उशना—

अहन्येकादशे प्राप्ते पार्वणं तु विधीयते ॥
सपिण्डीकरणं तेषां न कर्त्तव्यं सुतादिभिः।
त्रिदण्डग्रहणादेव प्रेतत्वं नैव जायते ॥

इति सपिण्डीकरणं वचनान्न कर्त्तव्यम्। शूद्राणां द्वादशेऽह्नीति विष्णु-स्मरणात्[१०५] द्वादशेऽह्न्येव⁰⁰। उशना—

आनन्त्यात् कुलधर्माणां पुंसा चेवायुषः क्षयात्।
अस्थितेश्च शरीरस्य द्वादशाहः प्रशस्यते ॥

एवं च देशविप्लवगणितावधारितायुःसमाप्तिविषयम्। सपिण्डीकरणान्तस्य प्रतिप्रसवमाह हारीतः।

---

१०२। धर्मे प्रजासंपन्ने दारे नान्यां कुर्वीत—आ० ध० सू०

१०३। अधं स केवलं भुंक्ते यः पचत्यात्मकारणात्।
यज्ञशिष्टाशनं ह्येतत् सतामन्नं विधीयते ॥—मनुः ३।१२८

१०४। मांगल्यमुत्सवं चैव परपाके च भोजनम्।
प्रथमेऽब्दे न कुर्वीत योजनेऽपि कृते सति ॥

१०५। मन्त्रवर्णं हि शूद्राणां द्वादशे ह्न। इति (२१।२०) मुद्रित-विष्णुस्मृतौ पाठः।

---

⁰ क्रत्वर्थता ख० पु०

⁰⁰ तेषाम् ख० पु०-अधिकपाठः।

प्रत्यब्दं द्वादशे मासि कार्या पिण्डक्रिया द्विजैः⁰ ।
क्वचित्त्रयोदशेऽपि स्यादाद्यं मुक्त्वा तु वत्सरम् ।।
चक्रवत् परिवर्त्तेत सूर्यः कालवशाद्यतः ।
अतः संवत्सरं श्राद्धं कर्त्तव्यं मासचिह्नितम् ।।
मासचिह्नं तु कर्त्तव्यं पौषमाघाद्यमेव हि ।
यतस्तत्र विधानेन समासः परिकीर्त्तितः ।।
असंक्रातेऽपि[१०६] कर्त्तव्यमाब्दिकं प्रथमं द्विजैः ।
तथैव मासिकं पूर्वं सपिण्डीकरणं तथा ।।
गर्भे वार्धुषिके[१०७] कृत्ये प्रेतानां पिण्डकर्मसु ।
सपिण्डीकरणे चैव नाधिमासं विदु र्बुधाः ।।
सपिण्डीकरणादूर्ध्वं यत् किंचित् श्राद्धिकं भवेत् ।
इष्टं वाप्यथवा पूर्त्तं तत्र कुर्यात् मलीम्लुचे[१०८] ।।

द्वादशे मास्युत्सृष्टस्य सांवत्सरिकश्राद्धस्य क्वचिदधिमासपाते त्रयोदशे मासि कर्त्तव्यता । सांवत्सरिकं द्वादशमासे⁰⁰ मालमास⁰⁰⁰ एवापि । संवत्सरान्तरे यद्यधिमासपातो भवेत् तदा मासिकार्थं दिनमेकं वर्धयेदिति (२१।२१) विष्णुवचनं[१०९] तु मध्याधिमासपातविषयम् न द्वादशमासाधिमासविषयमित्युक्तमसंक्रान्तेऽपीति । तथैव असंक्रान्त एव पूर्वं सपिण्डीकरणात् द्वादशमासिकमपि । केचित् पूर्दमाद्यमासिकं शुद्धमासमृतस्येति व्याकुर्वन्ति । बार्धूषिक⁰⁰⁰⁰-कृत्ये वैश्यानां गोभिलोक्तेः इति शूलपाणिः। धनवृद्धादौ इति मदन-

---

१०६। अधिमासे इत्यर्थः ।

१०७। वृद्धिविषये प्रयोगे वा—प्रयोगस्य वृद्धिधनग्रहणार्थे शक्तत्वात् ।

१०८। मलमासे इत्यर्थः ।

१०९। संवत्सराभ्यन्तरे यद्यधिमासो भवेत्, तदा मासिकार्थे दिनमेकं वर्धयेत् इति (२१।२१) मुद्रितविष्णुस्मृतिपाठः ।

इति श्रीविप्रमिश्रकृते श्राद्धप्रदीपे तन्त्रालोके राजकिशोरात्मजश्रीव्रजकिशोर-स्वाईँविद्यावारिधिकृतरश्मिटिप्पणी समाप्ता । —समाप्तश्च रश्मिः—

---

⁰ सुतैः इति ख० पुस्तकपाठः

⁰⁰ नास्ति ख० पुस्तकपाठः

⁰⁰⁰ एव मलमासे पि ख० पु०

⁰⁰⁰⁰ वाधूर्षिके ख० पु०

पारिजातकारः। पुतः सपिण्डीकरुणग्रहणमपकृष्टसपिण्डीकरणग्रहणार्थम् । अतः त्रिपक्षादिसपिण्डीकरणमप्यसंक्रान्ते कर्त्तव्यम् । अतएव चण्डेश्वरः नन्दसंहितायां—

गर्भे वार्धूषिकृत्ये च मृतानां पिण्डकर्मणि।
सपिण्डीकरणे चैव नाधिमासं विदुर्बुधाः ।।

इति। अत्र वाक्यान्तराणि प्रदर्श्य तात्पर्यार्थं। । द्वादशो यद्यधिमासः तदाधिमासे सपिण्डीकरणम्। मासान्तरेऽधिमासे विष्णूक्तवचनात् मासिकवृद्धिः। ननु केषां सपिण्डनं कैः सह कर्त्तव्यमित्यभिप्रायेणाह स्मृतिसंग्रहे भारद्वाजः—

पितुः सपिण्डीकरणं तस्य पित्रादिभिः सह।
पुरुषाणां तु सर्वेषां तद्वत्कुर्यात् सपिण्डताम् ।।

अस्यार्थः— पितुः सपिण्डीकरणं पुत्रः तस्य पितुः पित्रादिभिः सह कुर्यात्। सर्वेषां पितृव्यादीनां पुरुषाणां तु पुनस्तद्वत्। कोऽर्थः। यः कश्चनाधिकारी प्रेतस्य पित्रादिभिः सह कुर्यादित्यर्थः। अत्र पुरुषग्रहणात् स्त्रीणां नैवम्। तर्हि तासां सपिण्डीकरणं कर्त्तव्यं न वेत्यत्यभिप्रायेणाह विष्णुः—

सपिण्डीकरणं स्त्रीणां कार्यमेव यथा भवेत्।
यावज्जीवं तथा कुर्यात् श्राद्धं तु प्रतिवत्सरम् ।।

तर्हि कैः सह कर्त्तव्यमित्यभिप्रायेणाह वृद्धशातातपः

मातु सपिण्डीकरणं कथं कार्यं सुतेन तु।
पितामह्या सहैवास्याः सपिण्डीकरणं मतम् ।। इति

[ श्राद्धप्रदीपे तन्त्रालोकः समाप्तः। समाप्तोऽयं ग्रन्थः ]



---

रश्मिकृद्विवृत्तिः

नीलाकाशविशालनीलजलदच्छायास्फुरद्विग्रहं
लीलालोलगलद्बलं मधुरिमोद्बेलच्चलेन्दीवरम् ।।
खेलोतुङ्गविभङ्गसङ्गमभवद्गोपालबालं शुभां
वेलामाकलयच्छिवं दिशतु नो नीलाद्रिनीलं महः ।।

सकलसरणिसारः प्रेरितप्रेमभारो रतिनिहितनिखेदोद्भेदनोऽभेद्यवादः।
मिलितमतवितानानेकचैतन्यधन्योऽसितगिरिपरिरम्भः शर्मकादम्बमेतात् ।।

प्रतिनिधिविधिसाध्यः प्रीणनैकाग्रगण्यः।
परविकशितधर्माऽऽचारसञ्चारकर्मा ।।
परिणतपरितात्मा प्राणपीयूषसद्मा।
भवतु भवविधूतौ सन्ततं मेऽन्तरात्मा ।।

साक्षाद्वेदविलीनतत्त्वजलधेर्धर्माख्यरत्नं महत्
सोऽयं स्मार्त्तमुनि र्मनु र्निहितवानानीय तद् वा स्मृतौ ।
कालात् कालपरंपरावशतया निष्पीड्य सारं ततो
नानानिर्णयकृद् दधाति विमलं देशीयलोकार्थये ॥
आचारो व्यवहारधारणपरः पापादिनाशार्थये
प्रायश्चित्तमिति त्रयो हि विषयाः स्मार्त्ताः प्रसिद्धाः क्षितौ ।
तत्राचारगतं गृहस्थविषयं श्राद्धं निबद्धं परं
संश्रित्य स्फुटमेव वर्णनविधौ चक्रु र्बुधाः सर्वदा ॥
तत्रासीद् विप्रमिश्रो **मनु**विहितमतालोचकश्चोत्कलीयो
वङ्गं गौडं विशिष्य स्फुटिततरमतं मैथिलं दाक्षिणात्यम् ।
नानास्मृत्युक्तवाक्यैः परमिहचतुरै र्जैमिनीयै र्विभावै-
श्चक्रे **श्राद्धप्रदीपं** निजनिहितमतं शोभनं तद् विचार्य ॥

अन्तस्तदीयविशदीकरणाय तत्त्वं मन्वादिशास्त्रनिचयस्य महाशयस्य ।
दिग्देशभिन्नमतपुञ्जनिकुञ्जकेली **रश्मि**च्छले **व्रजकिशोर** इदं विभर्त्ति ॥

—०—

# BIBLIOGRAPHY


मनुस्मृतिः—नवटीकोपेता भारतीयविद्याभवनम्, मुम्बई-१९७८

„ मेघातिथिः मनसुखरायमोरे कालिकापत्तनम्

„ कुल्लूकः चौखम्बा-१९७०

गौतमधर्मसूत्रम्—मस्करिः महीशूर-१९१७

„ मिताक्षरा—चौखम्बा

आपस्तम्बधर्मसूत्रम्—उज्ज्वला—चौखम्बा-१९६९

याज्ञवल्क्यस्मृतिः—अपरार्कः—आनन्दाश्रमः पुण्यपत्तनम्-१९०४

„ मिताक्षरा—निर्णयसागरः

सरस्वतीविलासः—गजपति प्रतापरुद्रदेवः महीशूर-१९१८

परिभाषाप्रकाशः—वीरमित्रोदयः—मित्रमिश्रः चौखम्बा

संस्कारप्रकाशः „ „ „

श्राद्धप्रकाशः „ „ „

विष्णुपुराणम्—गोताप्रेस, गोरक्षपुरम्

कविशतकम्—उत्कलसंस्कृतगवेषणासमाजः, पुरी-१९७८

वसिष्ठधर्मसूत्रम्—भण्डारकरप्राच्यविद्यासंशोधनागारम्, पुण्यपत्तनम्-१९३०

बृहदारण्यकोपनिषत्—आनन्दाश्रमः-१९१४

मीमांसादर्शनम्—शाबरभाष्य—श्लोकवार्त्तिक-तन्त्रवार्त्तिक-टुप्टीकायुक्तम्

गजेन्द्रलाल मुसलगावंकार—आमन्दाश्रमः

„ युधिष्ठिरमीमांसकः-१९७७

बोधायनधर्मसूत्रम्-विवरणसहितम्—चौखम्बा

महाभाष्यम्—किल्हन—भण्डारकरप्राच्यविद्यासंशोधनागारम्-१९७२, १९६५,

सिद्धान्तकौमुदी-तत्वबोधिनी

„ बालमनोरमा—चौखम्बा-१९६९

अङ्गीरःस्मृतिः—आड्यार लाइब्रेरी, माद्रास-१९५३

महाभारतम्-शान्ति—अनु० भण्डारकर प्राच्य वि० सं०-१९७५

न्यायदर्शनम्—वात्स्यायनभाष्यसहिसम्—चोखम्बा सं०-२०२६

ऋग्वेदः सायणभाष्यसहः—लाहोर-१९३९

तर्कभाषा

तर्कसंग्रहः—हरिकृष्णनिबन्धभवनम्-१९६०
अर्थसंग्रहः—चौखम्बा-१९७७
जैमिनीयन्यायमालाविस्तरः—माधवाचार्यः, आनन्दश्रामः-१९४६
पराशरमाधवीयम्—माधवाचार्यः, ऐसियाटिकसोसाइटी, कालिकापत्तनम्-१९७४
कृत्यकल्पतरुः—लक्ष्मीधरः—ब्रह्मचारी-श्राद्धकाण्डम्, बरोदा-१९५०
गोभिलगृह्यसूत्रम्—नारायणीसहितम्
भगवद्गीता—सप्तभाष्योपेता, मुंशीराममनोहरलाल-१९७८
तैत्तिरीयसंहिता—ानन्दाश्रमः-१८९८
तैत्तिरीयोपनिषत्—आनन्दाक्षमः-१९११
कौटिल्यार्थशास्त्रम्—आर० पी० काङ्गले, मुम्बई-१९६६
शतशथब्राहणम्—चौखम्वा-१९०८
अमरकोषः—रामाश्रमीसहितः, चौखम्बा-१९७०
आश्वलायनगृह्यसूत्रम्—देहली-१९७६
शांख्यायनगृह्यसूत्रम्—मुंशीराममनोहरलाल, देहली-१९६०
शुक्लयजुर्वेदः—उबटमहीधरभाष्यसहितः, मोतीलालवनारसीदासः-१९७१
ऋग्वेदभाष्यभूमिका—सायणाचार्यः, चौखम्बा-१९७६
श्राद्धदीपः—दिव्यसिंहमहापात्रः, ऐसियाटिकसोसाइटि, कालिकापत्तनम्
नैषधम्-श्रीहर्षः नारायणी सहितम्—ऐसियाटिकसोसाइटी-१८५१
रघुवंशम्—कालिदासः, मल्लिनाथः, चौखम्बा-१९६१
पद्मपुराणम्, कालिकापत्तनम्-१९७६
नित्याचारप्रदीपः—नरसिंहवाजपेयी, ऐसियाटिकसोसाइटी-१९२६
नित्याचारपद्धतिः—विद्याकरवाजपेयी, ,, ,, १९०३
पारस्करगृह्यसूत्रम् पञ्चभाष्योपेतम्, मुम्बई-१९१०
दानसागरः—बलालसेनः, ऐसियाटिकसोसाइटी
मीमांसापरिभाषा—कृष्णयज्वा, मेरठ
दत्तकमीमांसा—नन्दपण्डितः, आनन्दाश्रमः-१९५४
विष्णुधर्मसूत्रम्—केशववैजयन्तीसहितम्, माड्रास-१९६२
स्मृतिचन्द्रिका—देब्बणभट्टः—श्राद्ध-व्यवहारकाण्डे, महीशूर-१९१८
मेदिनीकोषः
निर्णयसिन्धुः—कमलाकरभट्टः, निर्णसागरः-१९०६
,, ,, ठाकुरप्रसाद एण्ड बुकसेलर, सं०-२०२७

गदाधर पद्धतिः—कालसारः, गदाधरराजगुरुः, ऐसियाटिक सोसाइटी-१९१६
,, ,, ,, ,, राधारमणप्रेस, कटक, १९६८
पण्डितसर्वस्वम्—कटकम्-१८९७
तन्त्ररहस्यम्—बरोदा-१९२३
तन्त्ररत्नम्—पार्थसारथिमिश्रः, सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, वाराणसी
तन्त्रसिद्धान्तरत्नावली—चिन्नस्वामिशास्त्री, वाराणसी-१९४४
श्राद्धविवेकः—शूलपाणिः, कालिकापत्तनम्
,, —रुद्रधरः, भेङ्कटेश्वरष्टिम्प्रेस
मीमांसान्यायप्रकाशः—आपदेवः, चिन्नस्वामिशास्त्रिकृतटीकासहितः-वाराणसी
,, ,, प्रभासहितः, भण्डारकर प्रा०-१९७२
शास्त्रदीपिका—पार्थसारथिमिश्रः, युक्तिस्नेहप्रपूरणी, मयूखमालिका, मुम्बाई-१९१५
मार्कण्ड़ेयपुराणम्—जीवानन्दसम्पादितम्, कालिकापत्तणम्-१८७९
आपस्तम्बश्रौतसूत्रम्—गायकवाड़-१९६३
विष्णुधर्मोत्तरपुराणम्—वेङ्कटेश्वरप्रेस
ब्रह्माण्डपुराणम्—मोतीलालबनारसीदासः, देहली-१९७३
पितृदयितः—अनिरुद्धभट्टः
ताण्डयब्राह्मणम्—कालिकापत्तनम्-१८७०
नृसिंहपुराणम्—गीताप्रेस
द्वैतनिर्णयः—वाचस्पतिमिश्रः
शब्दकल्पद्रुमः—सं०पुष्पेन्दुकुमारशर्मा, देहली
श्राद्धमयूखः-नीलकण्ठभट्टः, मुम्बई-१९२०
त्रिस्थलीसेतुः
चतुर्वर्गचिन्तामणिः—हेमाद्रिः श्राद्धकाण्डम्, कालिकापत्तणम्-१८९५
कात्यायनश्रौतसूत्रम्—कर्कभाष्यसहितम्, चौखम्बा-१९३४
कालमाधवः—माधवाचार्यः, वेङ्कटेश्वरप्रेस
साहित्यदर्पणः—विश्वनाथकविराजः, हरिदासटीकासहितः—शक० १८७५
काव्यप्रकाशः—मम्मटः, मण्डारकर प्रा०-१९६५
विधिविवेकः—मण्डनमिश्रः, न्यायकणिकायुतः, वाराणसी-१९०७
मीमांसाकोषः—केवलानन्दसरस्वती, पुण्यपत्तनम्-१९५६
ऊनविंशतिसंहिता—बङ्गलिपिः, बङ्गाब्दः-१३१७
श्राद्धकल्पः—श्रीदत्तः
पितृभक्तिः

संस्कारदीपकः

गृहस्थरत्नाकरः—श्रीचण्डेश्वरठाकुरः

श्रीदेवयानः—पुरी, श्रीसदाशिवकेन्द्रीयसंस्कृतविद्यापीठधर्मशास्त्रविभागीय पाठसंकलनम्-भागत्रयम्

पौर्णमासी—श्री स० के० सं० वि० पत्रिका, पुरी

दिग्दर्शिनी, सं०—उत्कलसंस्कृतगवेषणासमाजः, पुरी-१९७९

## ORIYA

ओड़िशार संस्कृत लेखा ओ लेखक—नीलमणिमिश्रः, साहित्यएकाडेमी,

प्राचीन उत्कल—जगबन्धु सिंहः

पौरुष—सं०—जानकीवल्लभपट्टनायकः, कटकम्

झंकार—सं०—डा० हरेकृष्णमहताबः, कटकम्

चतुरङ्ग—जेनामणिनरेन्द्रकुमारः

रामायणी—सं० भगवान् मिश्रः, रामदया परिषत्, पुरी

स्मरणिका—पुरी, स० कें० सं० वि० प्रथमच्छात्रावास मुखपत्रम्

## HINDI

मीमांसादर्शन—डा० मण्डनमिश्रः, रमेश बुकस्टोर, जयपुरम्

पितृपूजा—डा० कैलाशचन्द्रविद्यालङ्कारः

## PALMLEAF SANSKRIT MANUSCRIPTS

भक्तिभागववम्—जीवदेवकविडिण्डिमः, उत्कलराज्य संग्रहालतः—

कालसर्वस्वम्—कृष्णमिश्रः, उ० रा०-सं० डी० एच् ११६ ,,

श्राद्धनिर्णयः—रघुनाथदास, ,, ,, ,,

कृत्यकौमुदी—बृहस्पतिः डी० एच०-४६० ,,

कालदीपः—दिव्यसिंह महापात्रः ,, ,,

## MANUSCRIPTS


धर्मशास्त्रशब्दकोषः–पं०कुलमणिमिश्रः –लेखकस्य गृहात्
पारस्करगृह्यसूत्रम्–मार्गदर्शिनी ,, – ,, ,,
वशिष्ठधर्मसूत्रम्—तत्त्वप्रकाशिका ,, – ,, ,,
कालदीपः—तेजनी ,, – ,, ,,
जलाशयप्रतिष्ठा ,, – ,, ,,


## ENGLISH


*Vision of Aryan Glory*—Dr. E. Anantacharya, The Anant Book Trust, Madras
*Ethics of India*
*Hindu Ethics*—S. K. Maitra, Calcutta, 1956
*Science of Social Organisation*
*Hindu Political Thought*
*Religion and Society*—Dr. S. Radhakrishanan, Delhi, 1975
*Indian Philosophy*—Dr. S. Radhakrishana, London, Delhi, 1929
*Indian Philosophy*—S. N. Dasgupta, Cambridge, 1932
*History of Dharmaśāstra*—M. M. Dr. P. V. Kane. B. O. R. I. Poona, 1974
*Soverienty in Ancient India*
*Nature and Ground of Political Obligation in Hindu State*—J. J. Anzeria
*A Manual of Hindu Ethics (Intro)*—Chandravarkar, 1922
*The Indian Heritage*—Dr. V. Raghavan, Bangalore, 1956
*Sanatan Dharma*—Swami Bharati Krishna Tirtha. Bharatiya Vidya-Bhavan, Bombay
*Manu A Study in the Hindu Social Theory*—K. Motwani, Madras, 1956.
*Manusmṛti*—Dr. M. V. Pattawardhan
*Encyclopaedia of Social Sciences*
*The Daily practices of Hindus*—B. C. Basu
*Comparative Religion*—H. B. Jevons

*Philosophy of Bhagavat*—Dr. S. Bhattacharya, Viswabharati 1960-62
*Principles of Sociology*—H. Spensor
*Introduction to the History of Religions*—H. B. Jevons
*Origin and Evolution of Religion*—Hopkins
*The Fear of Dead in Primitive Religion*—J. G. Frazer
*Encyclopaedia of Religion and Ethics*
*Golden Bough*—Frazor
*History of Orissa*—Dr. H.K. Mahatab, —R.D. Banerjee, Hunter
*Epigraphica Indica*
*Vedic Selection*—K. C. Chatterjee
*Patanjali's Yogasūtra*—Bangalibaba
*The Brahmasūtra*—Šankarabhasya with Bhamati
*Dharmaśāstra in Mithila*—Dr. Joydev Ganguli, Sanskrit College. Calcutta, 1972.
*All India Oriental Conference Journal*—1978-79
*Sir Ashutosh Mukherjee Silver Jubilee volume-II*, Calcutta, 1922
*Descriptive Catalogue of Sanskrit Manuscripts of Orissa State Museum*, Bhubaneswar, Vol-I, Ed. by K. Mahapatra
,, Vol-V, Ed. by N. Mishra
*Preceedings of Orissa History Congress*, BBSR.
*Orissa Historical Research Journal*, Vol-V, 1962
*Madras Govt. Orientalist*
*Vedic Concerdance-Bloomfield*, Motilal Banarasidas,Delhi, 1964

## INDEX

A



AUTHOR

Born on 2nd July 1954 in the district of Cuttack, Orissa studied at Śrī Sadāśiva Kendrīya Sanskṛt Vidyāpīth, Puri and completed his Post-Graduate degree there. He did his Research work at that Vidyāpīth and got *Vidyāvāridhi* (Ph. D) from Rastriya Sanskrit Sansthan, an autonomous body of Union Ministry of Education, Govt. of India. He was receiving National Scholarship during the tenure of two years of his Post-Graduate study. Also he was a recipient of Central Govt's Research Scholarship. Several times he is rewarded with gold and silver medals in various Sanskrit elocution contests on *Dharmaśāstra* conducted by the Govt. of India at different circles of the country. From the very inception of his study of Sanskrit, he has keen interest in writing articles, research papers, editing of manuscripts, both in Sanskrit and English. *Digdarśinī*, the Govt. registered quarterly Sanskrit journal of Utkal Sanskrit Research Society, Puri is being published under his able editorship (act) since its inception. *Vārṣikaparvasaṃgraha* is another book to his credit, which belongs to Society's publication. Now he has started a major work on Utkal School of Dharmaśāstra for his Post-Doctoral Research.